अथ श्री वेङ्कटेश भट्ट विरचिता

# बोधायनीय प्रयोगरत्नमाला

(पूर्व सम्पुटः)



बीजापूरगदेक्षुकार्मुकरुजा चक्राब्जपाशोत्पल-
व्रीह्यग्र स्वविषाण रत्नकलश प्रोद्यत्कराम्भोरुहः ।
ध्येयो वल्लभया सपद्मकरयाऽऽश्लिष्टोज्वलद्भूषया
विश्वोत्पत्ति विनाशसंस्थितिकरो विघ्नो विशिष्टार्थदः ॥



प्रह्लाद वरदः श्रीमान् शंख चक्र गदाधरः ।
नरकण्ठीरवाकारः नारसिंहो मुदेऽस्तु नः ।।

## भगवान् श्री बोधायन महर्षिः



आद्यं सूत्रकृतं कराब्जकलितप्रज्ञानमुद्रं दधत्-
पुस्तं सव्यकरेण सूत्रलिखितं विद्याम्बुराशिं मुनिम् ।
न्यग्रोधाग्रकृतासने सुरुचिरे व्याघ्राजिने धिष्ठितं
श्री बोधायनमादरेण सततं वन्दामि नन्दामि च ।।

## * तृतीय मुद्रणस्य किञ्चित्प्रास्ताविकम् *

अयि सहृदयाः विद्वद्वरेण्याः वैदिकाग्रण्याः सुविदितमेवैतत्, यदस्यां कर्मभूमौ कर्मसूत्रनिबद्धैरेवास्माभिः व्यवस्थितवर्णाश्रमाचारैः परमपुरुषार्थाऽवाप्तये अवश्यमुपादेया अष्टाचत्वारिंशत्संस्कारा इति ।। तदिदं 'यस्यैते अष्टाचत्वारिंशत्संस्कारा' इत्यादिसूत्रेषु गौतम महर्षिभिः स्पष्टमुद्घोषितमेव ।। ते च केचित् नित्याः सप्त पाकसंस्थादयः, केचित् सप्त हविःसंस्थादयः दौर्ब्राह्मण्यपरिहारकाः, सप्त सोमसंस्थास्तु काम्याः दयादयोऽष्टौ सार्वदिकाः इत्यादि स्पष्टमेव विभज्य श्री वेंङ्कटेशभट्टैः स्वकीयप्रयोगमालायां सद्यो मुद्रापयिष्यमाणायां विवृता एवेति ततो निवृत्य संस्कारमहत्वविषये लेखनीं किञ्चिद्व्यापारयामः ।।

'संस्कारैः संस्कृतः पूर्वैः उत्तरैरपि संस्कृतः । नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः ।।
ब्राह्मं पदमवाप्नोति यस्मान्न च्यवते पुनः' - इति मनुः ।।

अत्र प्रतिप्राणि, मनो नाम महदद्भुतं पाञ्चभौतिकं वस्तु स्वभावतः परिशुद्धं सर्वसंस्काराणां आधारं अत एव कलुषितं सत् जीवानां सुरनरतिर्यगादितनुप्रापकं विद्यते ।। तत्र स्वभावत एव प्रत्यक्षादि-लौकिक-प्रमाणैरपि अवगम्यमानेभ्यः चेतनाचेतन-स्थूलसूक्ष्म-पाञ्चभौतिक पदार्थेभ्यः नानासंस्काराः वासनापरनामधेयाः प्रतिक्षणं खले कपोतन्यायेन जायन्ते ।। जातश्चैते स्वकारणाऽऽनुगुण्येन रूढमूला अरूढमूला वा भवन्ति ।। तत्रापि यावता कालेन सुसंस्कारा मनो व्याप्नुयुः, ततोऽप्यल्पेनैव कालेन कुसंस्कारा व्याप्नुवन्ति ।। संस्कारो नाम दोषाणां गुणानां वा मनस्याधानम् ।। परं दोषाऽधानस्य 'संस्कार' शब्दप्रयोगो विरलः ।। श्रीमच्छङ्करभगवत्पादाचार्यैरपि स्वभाष्ये 'संस्कारोनाम संस्कार्यस्य गुणाधानेन दोषापनयनेन वा' इत्यनेकत्र प्रत्यपादि ।। वैदिकाश्च संस्कारास्तादृशा एव ।। स्वभावतो विषयाभिमुखस्य मनसः तत्सम्पर्काज्जायमानानां कुजन्मप्रापकाणां दोषाणां अपनयनपूर्वकं श्रेयःप्रेयो भाग्जन्मप्रापकाणां गुणानामाधानं वैदिकसंस्कारत्वेन व्यवह्रियते इत्येतत् श्रुतिप्रामाण्यवादिनामनुमतम् ।। यथा सुवासिकद्रव्यस्य पुनः पुनः सम्पर्कात् अतिमात्रसुवासिकवस्तुसम्पर्काद्वा कस्मिंश्चित्पदार्थे समुत्पन्ना वासना दीर्घकालस्थायिनी (स्वविरुद्ध) कुवासनानिर्मूलिनी च तद्वत् ।। बाह्येन्द्रियद्वारा ये ये पदार्थाः अन्तः प्रविशन्ति, सर्वेषामपि तेषां आकारान् सुष्ठु वा दुष्टान् वेत्यविभज्यैव स्वस्मिन् (प्रवेश्य) प्रतिगृह्य कालान्तरेऽवश्यमेव तत्फलभाजं मानवं विदधाति मनः ।। ततः प्राप्तं सुखं दुःखं वाऽनुभूय निर्विण्णो मानवः इतःपरं वा सुखमात्रभाग्भवेदिति मत्वा करुणालुभिरस्मत्पूर्वपुरुषैर्महर्षिभिः समाधिना परोक्षमपरोक्षीकृत्य वैदिकाः संस्कारा निर्दुष्टा निर्दिष्टाः ।। तेषु अनेके सकृदनुष्ठिता अपि मनसि रूढमूला भूत्वा स्वविरुद्धान् भूतपूर्वान् निर्मथ्य, भाविनः अनुत्पत्त्यैव निरुध्य, पुरुषं पुरुषार्थभागिनं कुर्वन्तीति केन वा तेषां महिमा पूर्णतया प्रतिपत्तुं पार्येत ।। गर्भाधानादिश्मशानान्ताः संस्काराः सर्वा अपि पृथक् सप्रयोजनाः विद्वद्भिः प्रकटिताः, तत एवावगन्तव्याः ।। विस्तरभयान्नेह तन्यन्ते ।।

संस्कारप्रकाशनाय सन्त्यपि सूत्राणि प्रयोगग्रन्थानामावश्यकता इत्यत्र न विवादः ।। बौधायनानां प्रयोगेषु अनेकेषु अयमेकः 'प्रयोगमाला'ऽभिधः मूर्धन्यस्थानमापत् ।। अस्यां संस्कारेषूपयुक्ताः धर्मशास्त्र-कर्मकाल-कर्तृ-हविः-द्रव्य-अग्नि-देवतानिर्णयादयोऽनेके विषयाः सङ्गृहीताः ।। यथा तदर्थं ग्रन्थान्तरमुखावलोकनानावश्यकता ।। अत एवेयं पूर्णतामप्यविन्दत् ।। विश्वपति, विष्णुभट्टीय, प्रयोगरत्नादयो बौधायनोपयुक्ता नैके ग्रन्थाः सन्तोऽपि नास्याः कलामात्रमपि अलभन्त सर्वोपयुक्तताविषये इत्युक्तौ नातिशयलेशोपि ।। इदं प्रायोगिकानामतिरोहितमिति न पुनर्वक्तव्यम् ।। अपि चास्याः श्रेष्ठ्यविषये एका कथापि साक्षिणी ।। श्रीवेङ्कटेशभट्टानां जीवनसमय एव कर्कि-अभिजनाः 'तिम्मप्पभट्ट' नामानः सकलेषु साङ्गवेदेषु चतुरश्रपण्डिताः एतैर्नूत्नतया कृतां प्रयोगमालामाकर्ण्य प्रयोगकर्तुः योग्यताजिज्ञासया 'को वाऽयं भट्टः? विष्णुभट्टीयादिषु प्रयोगग्रन्थेषु सत्स्वपि किमपरं अनेन निर्मितम्? कीदृशं अस्य पाण्डित्यवैदग्ध्यम्? पश्यामः तावत्' इत्याग्रहगृहीतहृदया वेङ्कटेशभट्टानामावासदेशमगमन् ।।

ते तु विनयेनैवैतान् समागतान् प्रत्यगृह्णन्॥ ततः कुशलप्रश्नोत्तरमपि तिरस्कृत्य 'कस्त्वं नूतनप्रयोगकर्ता? का वा ते शक्तिः तस्मिन्विषये?' इत्यादि बहुशोऽभर्त्सयन्॥ तदा श्रीवेङ्कटेशभट्टाः स्वविनयमनपहायैव स्वागतादि विधाय तत् प्रश्नानामुत्तरं नाऽहं तत्र कोविदः, श्रीसर्वशक्तस्य शम्भुलिङ्गेश्वरस्याज्ञाप्रसादेन निरमायि केवलम्, सेयं प्रयोगमाला यदि सदोषा मदीयेन दोषेण तर्हि तत्सूचनानुग्राह्योऽयं जनः' इत्यब्रुवन्॥ ततस्ते तिम्मप्पभट्टाः प्रश्नोत्तरीभङ्ग्या समारब्ध-जल्पवितण्डकथाः तैः प्रतिहतवाचः स्वग्रामं प्रतिनिवर्तन्त एव श्रीवेङ्कटेशभट्टानां तिरस्कारप्रभावेणोन्मादवायुना ग्रस्ताः 'मळ्ळु तिम्मप्पभट्ट' नाम्ना प्रसिद्धा बभूवुः॥ एषां तिम्मप्पभट्टानां द्रष्टारः मदीये ग्रामे विंशतिवर्षात् प्रागासन्॥ तेभ्यः श्रुतेयं कथा मया॥ एतेन तेषां जगदीशे भक्तिप्रकर्षः, तेन तदनुग्रहलब्धवैदुष्येण कृतायाः प्रयोगमालायाः श्रैष्ठ्यं च सिध्यति॥ अनया च कथया तेषां कालः सपादशतवर्षेभ्यः प्रागिति निश्चीयते॥ जन्मदेशश्च होन्नावरतालूकान्तर्गतः 'गुणवन्ते' नामाऽग्रहारो वा दक्षिणकानडाजिल्हान्तर्गतः 'श्रीशम्भुलिङ्गेश्वराधिष्ठितः' कश्चन 'ब्रह्मावर' नामाऽग्रहारो वा इत्यत्र संशयः समापतति, उभयत्र श्रीशम्भुलिङ्गेश्वरसान्निध्यात्॥ 'गुणवन्ते' ग्रामे तु तदन्वयानुवृत्तिः नैव दृश्यते न वा श्रूयते॥ तदन्यत्र 'वयं वेङ्कटेशभट्टानामन्ववायाः' इति वदन्तो जनाः श्रूयन्ते॥ परन्त्वत्र विद्वांस एव शरणम्॥

इयं प्रयोगमाला मत्पूर्वजैः 'सूरी वेङ्कटरमणशास्त्रिभिः' 'टुप्पाशास्त्री' इति प्रथितनामधेयैः सप्ततिवर्षेभ्यः प्राक् मुम्बापुर्यां मुद्रिता आसीत्॥ इदानीमनेकैः अपेक्ष्यमाणाऽपि दुर्लभ्या, सेयं वे. सुगावि गणपतिशर्मभिः पुनर्मुद्रापिता जनानामतीवोपकाराय भूयादिति नास्ति संशीतिः॥ पूर्वतनमुद्रणदोषाः सर्वेऽपि अद्यतनमुद्रणे संशोधिताः, मन्त्रणां स्वरचिह्नानि निवेशितानि, अत्यावश्यकस्थलेषु सूक्ष्मटिप्पणी च निवेशिता॥ एतदर्थं हस्तलिखित-वेङ्कटेशीप्रयोगमाला, बौधायनसूत्रं, विश्वामित्रकारिका, हस्तलिखिता मुद्रिता च महीशूरराजधान्यां मुद्रितानि यजुःसंहिता-ब्राह्मण-आरण्यक, बौधायनसूत्राणि अतीव साहायतामधिजग्मुः॥ वेङ्कटेशीयप्रयोगमालायां समुद्धृताः - केचन विष्णुभट्टीय, प्रयोगरत्न विश्वपतिप्रभृतयोऽमुद्रिताः ग्रन्थाः, अतोऽत्र समुद्धृतानां तत्तद्वाक्यानां शुद्धिविषये तत्तदीयत्वे च श्रीवेङ्कटेशभट्टा एव शरणीकरणीयाः॥ मुद्रितमन्वादिस्मृतिग्रन्थेषु अनुपलभ्यमानानां च वाक्यानां विषयेऽपि श्रीवेङ्कटेश भट्टानां प्रामाण्यतैव शरणम्॥ एवं कृतेऽपि प्रयत्नेऽस्मिन् मुद्रणे सीसकाक्षरयोजकदोषाद्वा अस्माकीनाऽनवधानदोषाद्वा यदि स्खालित्यदोषा भवेयुः ते शोधनीया विद्वद्भिः, सूचनीयाश्च प्रकाशकेभ्यः संशोधकेभ्यो वा, ते पुनर्मुद्रणावसरे परिहरिष्यन्ते॥ ग्राहकेषु विज्ञापयाम्येकम् 'यत् सद्योमुद्रितस्यास्य पूर्वसम्पुटमात्रस्य शीघ्रं यदि विक्रयः स्यात्तदा सत्वरमेव मध्यमापरसम्पुटयोरपि मुद्रणाय द्रव्यानुकूल्यं भवेदिति मतिमास्थाय सङ्ग्रहणायास्य त्वरयन्तु' इति॥ अन्ततः एतत् प्रकाशने सहायकानां सर्वेषामपि कृतज्ञतार्पणं मुद्रणेनोपकृतवतां 'श्री जनरल् प्रिंटिंग् प्रेस्, होन्नावर' इत्येतदधिकृतां उपकारभारभरणं च विधाय आशास्य च प्रकाशकेभ्यः श्रीशो ददातु महदायुरारोग्यैश्वर्यसमृद्धिं, पुनः पुनः एभ्योऽमुद्रितानां ईदृशानामुपयुक्तानां ग्रन्थप्रकटनं भूयादिति समर्पये श्रीललिताम्बाचरणयोः मामकं वचनप्रसूनम्॥

इति

राष्ट्र प्रशस्ति पुरस्कृत आस्थान महाविद्वान्
**रामचन्द्रशास्त्री सूरिः, कवलक्कि**
होन्नावर

विजयदशम्याम्,

श्री. शा. श. १९२९, व्ययसंवत्सरः

## ॥ संपादकीय वचनम् ॥

अत्यन्त दुर्लभस्य मानवजन्मनः सार्थक्यं प्राप्तुं नैके पन्थानः प्रदर्शिताः तत्वदर्शिभिर्वेदविद्भिर्मुनिगणैः, यथा कर्ममार्गः, भक्तिमार्गः, योगमार्गः, ध्यानमार्गः, ज्ञानमार्गश्चेति ॥ तेषु कर्ममार्गः प्रथमः सुलभश्च ॥ सर्वसाधारणः हातुमशक्यश्च ॥ उक्तंचेशावास्योपनिषदि ''कुर्वन्नेवेह कर्माणि जिजीविषेच्छतँ समाः,, इति ॥ गीतायां च ''नहि कश्चितूक्षणमपि जातुतिष्ठत्यकर्मकृत्,, इति ॥

तच्च श्रौत स्मार्त शांतिक पौष्टिकमित्यादि ॥ तदपि फलाभिसंधिं विहायेश्वरार्पणबुध्याऽनुष्ठीयमानं निश्रेयसे कल्पते इति वेदान्तडिंडिमः ॥ कर्मप्रधानं वेदार्थं बोधयितुं प्रवृत्तेषु बोधायनाश्वलायनापस्तम्ब सत्याषाढ प्रभृतिषु सूत्रकृत्सु बोधायन एवाऽऽद्य इति निखिलवेदार्थविदांसम्मतम् ॥ तै रचितानि तत्तच्छाखावलग्नानि श्रौत स्मार्तादिसूत्राणि कल्पाख्यानि विराजन्ते ॥ तेषु स्मार्तसूत्राणि गृह्यापराभिधानानि च राजन्ते ॥ सत्येवं बौधायनगृह्यानुसारिणी प्रयोगमाला श्री विद्वद्भिः वेंकटेशभट्टवर्यै रचिता द्विशतवर्षेभ्यः वैदिकमंडल्यां प्रचुरप्रचारमाप्ता ॥ नित्य नैमित्तिक काम्यकर्मणां एकाग्निसाध्यानां बोधिका च ॥ सूत्राणि, धर्मशास्त्रं, ज्योतिःशास्त्रं, कारिकाश्चाधारीकृत्य प्रयोगमाला रचितेति ॥

प्रथमसंपुटेऽत्र सांगाः सपरिकराः गर्भाधानादिषोडशसंस्काराः सुव्यवस्थितप्रयोगपद्धतिनिरूपिताः ॥ तथाऽन्वारम्भणीयाद्यारभ्य नित्यं धार्यमाणौपासनाग्निपरिचर्यादयश्च विविक्ताः ॥ द्वितीये मध्यसंपुटे-कालमृत्युंजयशांति आयुष्यचरुहोम बौधायनाह्निक देवपूजादि नित्यानुष्टान पद्धति विविधश्राद्धकल्पाश्च समग्रप्रयोगोपबृंहिताः ..... ॥ तृतीयेऽपरसंपुटे नामबोध्याः मानवानां और्ध्वदैहिकसंस्काराः सानुषंङ्गाः विवृताः, तत्रपरमहंसानामपि पांचभौतिकसंस्काराः सन्यासविधि परिव्राजकधर्माश्चान्ते सपरिकराः निरूपिताः ॥

साच सपुटत्रयपरिमिता, दशाधिकशतवर्षेभ्यः प्राक् श्रीमद्भिरनैकागमशास्त्रविद्भिः वेदशास्त्रसंपन्नैः कर्व्यभिजनैः सूरि वेंकटरमणशास्त्रिभिर्मुद्रापिता वैदिकावासेषु विराजते ।। अपि च तद्वंश्यैरेव सूरिभीरामचन्द्रशास्त्रिभिः एतत्प्रधानसंपादकैः चतुस्त्रिंशद्वर्षेभ्यः पुर्वं आवश्यकटिप्पणीयुता शिरसि शारदामुद्रणालये प्रथमसंपुटमात्रं पुनः मुद्राप्य प्राकाश्यमानीता ।। साप्यधुना छात्राणां वैदिकानां चालभ्येति मत्वा पुनरपि संपुटत्रयस्यापि मुद्रणाय वयमुद्युक्ताः ।। तत्प्रकाशनाय चोद्युक्तोविद्यापीठः श्री सुब्रह्मण्यप्राच्याख्यः समितिवरः ।।

अन्ते च वैदिकोपयोगविषयाणां विशिष्टानां संशयनिर्णयात्मकोऽनुबन्धोपि अध्येतृणां महोपकाराय भवेदेव ।। किंचादौ प्रायोगिकोपयुक्तानि गणपति पुण्याहादि मंडलान्यपि सुवर्णरञ्जनेन रंजितानि निवेशितानि ।। प्रयोगमन्त्राणां स्वरचिह्नानि उपटंकितानि ।। लघुटिप्पणी च तत्र तत्र विवरणात्मापि निवेशिता ।। सेयं महताश्रमेण परिष्कृतापि यत्र क्वचिद्दृश्यमाना दोषां गुणग्राहिभिः सूचनीयाः ।। तेन पुनमुद्रनावसरे समीकर्तुं शक्यन्ते ।।

एतस्मिन् महति विधाने धनसहायेन, लेखनेन, शुद्धीकरणेन, सुन्दरं मुद्रणेनोपकृतवतां सर्वेषां चान्येषामुपकारकारिणां कृतज्ञतामर्पयितुं न विस्मरामः ।।

अयं च महान् ग्रन्थवरः गृहस्थानां, धार्मिकाणां, वेदविदां, श्रोत्रियाणां, प्रयोगज्ञानामपि सर्वेषां तत्तत्कालानुष्ठेय कर्मानुष्ठानेनाभ्युदयनिःश्रेयसप्रापकः चतुर्विधफल लभ्यकश्च भूयात् ।। एतत्प्रकाशनसमितिश्चैवमेवापूर्वमहाग्रन्थप्रकाशिता च भूयादित्यपि श्री भगवन्तं वेदनारायणमभ्यर्थयामहे ।।

इति शम् ।।

संपादकमंडलम् ।।



॥ श्रीरस्तु सुखदायिनी ॥

सहस्रवारं पितरौ प्रणम्य, विचिन्त्य श्रीमद्वरसूरिणं च ।
सुशास्त्रिणं श्री गुरुरामचन्द्रं प्रणौमि साष्टाङ्गमनन्तवारम् ॥

वेदान्ते तर्क शास्त्रेऽप्यति निशितमतिं पाणिनीये समर्थं ।
मीमांसा कोविदाग्र्यं प्रवचन निपुणं सर्व विद्या प्रबुद्धम् ॥

साकारं भागधेयं सकलजनिमतां सर्वलोकाभिरामं ।
वन्दे भक्त्या सुधीन्द्रं तृषितजनमनश्चातकाभ्रं शरण्यम् ॥

वेदे तदङ्गेषुच कर्मकाण्डे सुशिक्षिताः पण्डितराज वाच्याः ।
बोधायनीयं खलु गृह्यसूत्रं सुव्याख्ययालंकृतवन्त आसन् ॥

शास्त्रेषु काव्येषु कृतीर्विरच्य सम्प्राप्तकीर्तिप्रचया महान्तः ।
विद्योपदेशेन कृतार्थशिष्याः स्ववाग्विभूत्या परितुष्टसभ्याः ॥

प्रायोगिकानामनुकूलसिध्यै सामान्यतः सर्वजनोपकृत्यै ।
तृतीय सम्मुद्रणकार्यभूता बोधायनीया च प्रयोगमाला ॥

## अथ स्वस्तिक मण्डलम्



## अथ वास्तुकोष्टम्



# प्रयोगमालायाः पूर्व सम्पुटस्य विषयानुक्रमणी

## अथ गणपति मण्डलम्



## अथ पुण्याह मण्डलम्



## अथ होम मण्डलम्



## ॥ उपाकर्मोपयुक्त मण्डलानि ॥

ऋषिमण्डलम्
(७×७)



देवमण्डलम्
(५×७×१)





पितृमण्डलम्
(३×७)



स्वपितृमण्डलम्
(४×३)



# ❋ श्री वेङ्कटेशभट्टविरचितायां बौधायनीयप्रयोगमालायां पूर्वसम्पुटं प्रारभ्यते ❋

॥ स्वस्ति ॥ श्रीगुरुगणेशाभ्यां नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीबोधायनाचार्येभ्यो नमः ॥

वन्दे बोधायनाचार्यं गणनाथं सरस्वतीम् ॥ क्रियाज्ञानसुनिर्विघ्नवाक्यसम्पत्तिहेतवे ॥१ ॥ नमो बोधायनायास्तु सर्वज्ञाय महात्मने ॥ शेषोऽखिलार्थविद्यस्य स्मृतः सर्वार्थबोधकः ॥२ ॥ ज्योतिः शास्त्रं धर्मशास्त्रं कारिकां सूत्रमेव च ॥ प्रयोगांश्च समालोक्य बोधायनहिताय च ॥३ ॥ श्रीमहालिङ्गपादाब्जसेवालब्धसुसंविदा ॥ परमेश्वरपुत्रेण वेङ्कटेशाभिधेन च ॥४ ॥ विद्यागुरुगणेशाख्यविदुषोऽनुग्रहेण च ॥ प्रयोगमाला क्रियते कालनिर्णयपूर्वकम् ॥५ ॥ नृसिंहदीक्षितगुरोः पादाब्जद्वयमन्वहम् ॥ वन्देऽनुग्रहतो यस्य प्रयोगः क्रियते मुदे ॥६ ॥

अथ अत्राचार्येण हुतादय एते सप्तपाकयज्ञा इत्युक्तम्। तत्र सूत्रम्। हुतः प्रहुत आहुतः शूलगवो बलिहरणं प्रत्यवरोहणमष्टकाहोम इति सप्तपाकयज्ञाः सगुँस्था इति। तत्र हुतो नाम होम मात्र साध्यः।ते तु विवाह-गर्भाधान-पुंसवन-सीमंत-विष्णुबलयः। एषु होम एव। ननु गर्भाधानेऽन्नप्राशने च हविष्यान्नस्य प्राशनं विहितं कथं होममात्रमिति चेन्न। हुतशेषं प्राश्नाति पक्वादुपादाय प्राश्नातीत्यविधानात्। तथा च सूत्रम्। सर्वत्र पक्वहोमं कुर्यादित्येतेन होम-दान-प्राशनानि व्याख्यातानि भवन्ति ॥ पक्वाज्जुहोति पक्वाद्ददाति पक्वात्प्राश्नातीति पाकयज्ञाहुतयः। प्रहुतोनाम होमो बलिश्च यत्र सः। यथा। जातकर्मनामकरणउपनिष्क्रमणान्नप्राशनकर्णवेधनचौलानीति। एषु होमो बलिश्च विहितौ। आहुतोनाम होम-बलि-प्राशनानि च यत्र विहितानि सः। यथा। उपनयनसमावर्तनायुष्यचरवः। शूलगवोनाम प्रतिसंवत्सरमीशानमुद्दिश्य क्रियमाणगवालम्भनरूपः। विरूपाक्षपूजा च। बलिहरणं नाम प्रतिदिनं वैश्वदेवानंतरं गृहदेवताउद्दिश्य क्रियमाणबलिरूपम्। उत्सर्जनं सर्पबलिश्च। प्रत्यवरोहणं नाम तत्तदृतूद्भवधान्यैः स्थालीपाकश्रपणरूपम्। अष्टकाहोमस्तु मार्गशिर-पुष्य-माघ-फाल्गुनमासेष्वपरपक्षाष्टमीषु क्रियमाणश्राद्धरूपः मासिकादीनि चेति। एवं हुतेऽप्युपाकर्मव्रतानि च। प्रहुते वास्तुशमनमित्येते सप्तपाकयज्ञा अवश्यं नित्यवदनुष्ठेयाः। अकृते तु "नैव नित्यानि लोपयेत्" "नाक्रियो ब्राह्मणो भवेत्" "अनग्निरक्रियः शूद्रः" इत्यादिप्रत्यवायश्रवणात्। ननु यज्ञोनाम बव्हृत्विग्द्रव्यायाससाध्यपशुपुरोडाशादिश्रपणरूपः। तादृग्विधेरत्राभावात्कथमेतेषां यज्ञत्वमितिचेदुच्यते। हुतादिरासंवत्सरान्तः सर्वो यज्ञो योहि यद्वेद। सः स्वाध्याय यज्ञः कर्मयज्ञो जपयज्ञो मानसश्चेति सूत्रे उक्तत्वात्। पाकशब्देनाल्पत्वं श्रेष्ठत्वं चावगम्यते। योऽस्मात्पाकतर इत्यल्पत्वम्। यो मा पाकेन मनसा चरन्तमिति। प्रशस्तेनेति गम्यते। सकलयज्ञानुष्ठानयोग्यश्रोत्रियत्वसम्पादनाच्च। अनेनैतेषां हुतादीनां यज्ञत्वमल्पायाससाध्यत्वं प्रशस्तत्वं चावगम्यते। किंच। नामकरणोपनिष्क्रमणान्नप्रासनकर्णवेधनव्रतेषु पक्वहोमस्य "नापक्वाः पाकयज्ञाः" इति सूत्रे व्यतिरेकमुखेनापि पक्वानां पाकयज्ञत्वमुक्तम्। विष्णुभट्टोऽपि। अग्न्याधेयं पुनरुत्तरकृत्वर्थं सति द्रव्येऽवश्यमनुष्ठेयमसतिद्रव्येत्वौपासनेनैव नित्यधृतेन नित्यनैमित्तिकलोपाभावाद्दौर्ब्राह्मण्याभावः। हुतादीनां त्वेकाग्निसाध्य शान्तिकपौष्टिकाद्युपलक्षणत्वात्पाकयज्ञैरेव कामाद्यवाप्तिरपि भवति, अग्नेरपि आधारोपलक्षणत्वात्, बलिहरणस्येव ब्राह्मणभोजनादीनामपि पाकयज्ञत्वम्। अत एवोत्तरत्र

तेषां प्रतिपादनमुपपन्नं भवति। तस्मादाचारः प्रमाणमिति=तस्मात्प्रशस्तत्वादाचारः=पित्रादिपरंपरायातं तत्समस्तं गृह्योक्तं कर्म, प्रमाणमवश्यं सर्वैरप्यनुष्ठेयमिति तस्यार्थः। अन्यत्रापि चरुपूर्वको यज्ञः पाकयज्ञ इति व्याख्यानाच्च। अनेन हुतादीनां जपहोमादीनां च पाकयज्ञत्वं सिद्धम्॥

अथ बोधायननानामृतुसंवेशनगर्भाधानादिस्त्री-पुरुषसंस्काराणां चातीतानां भिन्नतन्त्र-समानतन्त्रभेदेन कालातिपत्तिप्रायश्चित्तपूर्वकं संस्काराणां च क्रमेण शास्त्रार्थनिर्णयपूर्वकं प्रयोगो लिख्यते। तत्रादौ संस्कारनिरूपणम्। गृह्यसूत्रे "जातस्य वै मनुष्यस्य द्वौ संस्कारावृणभूतौ भवतः जातसंस्कारो मृतसंस्कारश्चेति विज्ञायते जातसंस्कारेणेमं लोकमभिजयति मृतसंस्कारेणामु लोकम्" इति। आश्वलायनोऽपि "अतः परं द्विजातीनां संस्कृतिर्नियतोच्यते। संस्काररहिता ये तु तेषां जन्म निरर्थकम्" इति॥ नियता=नित्या। निरर्थकत्वं, ब्राह्मण्यानभिव्यक्तेः। अत एवाङ्गिराः "चित्रकर्म यथाऽनेकैरङ्गैरुन्मील्यते शनैः। ब्राह्मण्यमपि तद्वत्स्यात्संस्कारैर्विधिपूर्वकैः॥ स्वे स्वे गृह्ये यथा प्रोक्तास्तथा संस्कृतयोऽखिलाः। कर्तव्या भूतिकामेन नान्यथा सिद्धिमृच्छति॥ पञ्चविंशतिसंस्कारैः संस्कृता ये द्विजातयः। ते पवित्राश्च योग्याश्च श्राद्धादिषु सुयन्त्रिताः॥ अत्रादिशब्दाद्यजनयाजनादेः परिग्रहः। गर्भाधानं पुंसवनं सीमन्तो बलिरेव च। जातकृत्यं नामकर्म निष्क्रमोऽन्नाशनं परम्॥ चौलकर्मोपनयनं तद्व्रतानां चतुष्टयम्। स्नानोद्वाहौ चाग्रयणमष्टका च यथातथम्॥ उत्सर्गश्चाप्युपाकर्म महायज्ञाश्च नित्यशः" इति॥ गौतमसूत्रे अपि। गर्भाधानं पुंसवनं सीमंतोन्नयनं जातकर्म नामकरणान्नप्राशने चोलोपनयने चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टकापार्वणश्राद्धमाग्रयणमिति। पूर्वोक्तहुतादयः सप्त पाकसंस्था, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः। अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्तसोमयज्ञसंस्था इत्येते संस्काराः। अथाष्टावात्मगुणाः। दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो माङ्गल्यमकार्पण्यमस्पृहेति। मनुः। संस्कारैः संस्कृतः पूर्वैरुत्तरैरपि संस्कृतः। नित्यमष्टगुणैर्युक्तो ब्राह्मणो ब्राह्मलौकिकः। ब्राह्मं पदमवाप्नोति यस्मान्नच्यवते पुनः इति॥ गर्भाधानादयः पूर्वसंस्काराः। उत्तरे पाकहविर्यज्ञादय इति। नैमित्तिकाः षोडशोक्ताः समुद्वाहावसानका इति च। बौधायनानां तु गर्भाधानपुंसवनसीमन्तजातकर्मनामकरणोपनि ष्क्रमणान्नप्राशनकर्णवेधनचौलोपनयनहोतृशुक्रियो-पनिषद्गोदानसमावर्तनविवाहा इति षोडश। अत्र विष्णुबलेः रक्षात्मकत्वात् गौतमसूत्रेऽप्यपठितत्वाच्च संस्कारमध्ये गणना न कृता। सम्मितव्रतस्यापि न गणना। तथा च विष्णुभट्टीये अष्टाचत्वारिशत्संवत्सरे चतुर्वेदव्रतकाले समापनत्वात्सकलसंस्कारसमानत्वाच्च सम्मितव्रतमित्याचक्षत इति। कारिकायाम्। अथ सम्मितमेतत्तु गृहस्थैरपि चर्यते। चतुर्वेदव्रतं त्वष्टाचत्वारिंशद्भिराप्यते। वत्सरैः सम्मितं तद्धि संस्कारैर्वाऽखिलैर्यतः इत्युपक्रम्य। अधिकं व्रतमेतत्तु प्राकृतादस्य वक्ष्यत इति। व्रतानि अवश्यचर्याणि चत्वार्युक्तानि यानि तु। इति च। प्रयोगरत्नेऽपि। होतारं शुक्रियमुपनिषदं गोदानमिति वरेद्वर्णी। वेदव्रतानि चत्वार्यथसम्मितमात्मसंशुध्यै इति। इत्येते षोडश संस्काराः। अथवा विष्णुबलिसम्मिताभ्यां सहाष्टादश। शूलगवो बलिहरणं प्रत्यवरोहणाग्रयणाष्टकाहोमोत्सर्जनोपाकर्माणि पञ्चविंशति संस्काराः। पञ्चमहायज्ञाः। सप्तहविः सप्तसोमयज्ञसंस्था इति चतुः चत्वारिंशत्संस्काराः। दयाद्यष्टात्मगुणैः सहाष्टाचत्वारिंशत्संस्कारा इति विकल्पिताः। इत्येते चत्वारिंशत्संस्कारा अष्टावात्मगुणा इति गौतमसूत्रोक्तेः। इति संस्कारनिरूपणम्॥ छ॥ ॥ छ॥ अथ संस्कारनिर्णयः॥ संस्कारो द्विविधः। क्षेत्रसंस्कारः प्रजासंस्कारश्चेति। तत्र गर्भाधानादिविष्णुबल्यन्ताः क्षेत्रसंस्काराः। अन्ये प्रजासंस्कारा इत्येकः पक्षः। सर्वे प्रजासंस्कारा इत्यपरः। तथा चोपनयनव्रतोत्सर्जनान्ते प्रयोगसार उक्तम्। एतदन्तस्त्वनुक्रान्तः प्रजासंस्कार इष्यते। गर्भसंस्कारमेकं तु जन्मनः प्राक् प्रचक्षते इति। गर्भसंस्कारः=क्षेत्रसंस्कार इत्यर्थः। जन्मनः प्रागिति=जातकर्मणः प्रागित्यर्थः। तथा च विष्णुबल्यन्तं पक्षद्वयं फलितम्।

क्षेत्रसंस्कारपक्षे सकृत्प्रयोगेऽपि क्षेत्रस्य संस्कृतत्वादनावृत्तिः। तथा च देवलः। सकृच्च संस्कृता नारी सर्वगर्भेषु संस्कृता इति। प्रजासंस्कारपक्षे प्रतिप्रधानं गुणावृत्तिरितिन्यायादावृत्तिः। तथाचर्तुसंवेशने प्रयोगसूत्रम्। सर्वाण्यृतुगमनानि मन्त्रवन्ति भवन्तीति बोधायनः। यच्चादौ यच्चर्त्ताविति शालीकिरिति। निर्णयसिन्धौ। "आवर्त्तत इदं कर्म प्रतिगर्भमिति स्थितिः। सीमन्तोन्नयनं कर्म न स्त्रीसंस्कार इष्यते। केचित्तु गर्भसंस्काराद्गर्भं गर्भ प्रयुञ्जते" इति। आश्वलायनस्तु। "प्रतिगर्भं बलिः कार्यः सीमन्तश्च प्रशस्यते" इति। अनेन प्रजासंस्कारस्य बहुसम्मतत्वात्प्राशस्त्यमुक्तम्। अतो गर्भाधानादिविष्णुबल्यन्ताः प्रतिगर्भमावर्तनीयाः। इति क्षेत्रसंस्कार-प्रजासंस्कारनिर्णयः ॥६॥ अथ स्त्रीसंस्कारनिर्णयः॥ यथा। औपनायनिकः पुंसां स्त्रीणां वैवाहिको विधिरिति स्मृत्यन्तरे। बोधायनोऽपि। "वैवाहिको विधिः स्त्रीणामौपनायनिकः स्मृतः" इति। स्त्रीणां वैवाहिकस्योपनयनत्वेन विवाहान्तसंस्कारेषु पक्षद्वयं फलितम्। गर्भस्य स्त्री वा पुमान्वेत्यनिर्णयात् विष्णुबल्यन्ताः समन्त्रका एवानुष्ठेयाः। जातकर्मादिचौलान्तः स्त्रीणां संस्कारस्त्वमन्त्रकः। विवाहस्तु समन्त्रक एव। अत्र बोधायनपरिभाषा। "पुत्राय च दुहित्रे च समानी ब्राह्मणी क्रिया॥ मन्त्रवद्गर्भ आजन्म जन्माद्या आवृताः स्त्रियाः" इति। अमन्त्रका इति शेषः। योगीश्वरोऽपि "तूष्णीमेताः क्रियाः स्त्रीणां विवाहस्तु समन्त्रकः" इति। मनुरपि "अमन्त्रिकैव कार्येवं स्त्रीणामाव्रतशेषतः॥ संस्कारार्थं शरीरस्य यथाकालं यथाक्रमम्" इति। चन्द्रचूडोऽपि "संस्कारार्थ क्रियाः स्त्रीणां तूष्णीं कार्या द्विजातिभिः" इति। व्यासोऽपि "नवैताः कर्णवेधान्ता मन्त्रवर्ज्याः क्रियाः स्त्रियाः" इति। "विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रका दश" इति। अत्र नवानां मन्त्रवर्ज्यत्वोक्तिर्जन्मोत्तरगौणकालक्रियमा-णगर्भाधानादिविषयाः। यथाकालानुष्ठाने तु मन्त्रवद्गर्भ आजन्मेति विष्णुबल्यन्तस्य समन्त्रत्वोक्तेः। तेषां कर्मणामेकैकस्य द्वयोस्त्रयाणां वा प्रमादादिना लोपे उत्तरोत्तरकर्मकाले लुप्तानि कर्माणि कालातिपत्तिप्रायश्चित्तं कृत्वा गर्भाधानादिचौलान्तं मन्त्रवर्ज्यं कर्तव्यानि, इति स्त्रीसंस्कारनिर्णयः॥ यज्ञप्रायश्चित्तप्रश्ने "ये ये विशेषा लघवो यत्र यत्रोपलक्षिताः। तैः कर्म संतरेद्विद्वान्याय्योपेतं यथा भवेत्॥ स्वशास्त्रे विद्यमाने यः परशास्त्रेण वर्त्तते। भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः॥ आर्षस्य च स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः। कर्मणां प्रविचारार्थमापत्सु च समाप्नुयात्" इति॥ इति वेङ्कटेशकृतौ प्रयोगमालायां संस्कारनिर्णयः॥

अथाग्निनिर्णयः॥ लोकेषु व्यवहार्येषु विज्ञेयोऽग्निः स लौकिकः॥ गृहस्थैर्द्धार्यते योसावौपासन इति स्मृतः॥१॥ गर्भाधाने मारुतोऽग्निश्चंद्रमाः पुंसिकर्मणि॥ सीमन्ते मङ्गलो नाम शोभनो वैष्णवे बलौ॥२॥ प्रबलो जातकर्माग्निः पार्थिवो नामकर्मणि॥ शिवोऽग्निरुपनिष्क्रान्तौ प्राशने तु शुचिः स्मृतः॥३॥ वर्धमानः कर्णवेधे सद्यभोऽग्निश्चौलकर्मणि॥ जातवेदास्तूपनये व्रताऽऽदेशे समुद्भवः॥४॥ परिवर्तः समावर्त्ते विवाहे योजकः स्मृतः॥ चतुर्थ्यां जातवेदोऽग्निरग्निर्मूर्धा तु पञ्चमे॥५॥ वैश्वदेवे त्वावसथ्यः पचनः पाककर्मणि॥ सभ्योऽग्निर्बहुकृत्येषु दहनस्त्वभिचारके॥६॥ पूर्णाहुतौ मृडो नाम शान्तिके वरदः स्मृतः॥ प्रायश्चित्ते भवेच्चित्तिः पौष्टिके बलवर्धनः॥७॥ शुद्धिहोमे पावमानो वश्यार्थे कामदोऽनलः॥ कुक्षौ तु जाठरो वह्निः कव्यादो मृतभक्षणे॥८॥ दैविके हव्यवाहोग्निः पैतृके कव्यवाहनः॥ शुक्रो ह्यारण्यकस्याग्निर्व्रतवान् ब्रह्मचारिणः॥९॥ आत्मज्योतिर्यतीनां तु रायस्पोषः समृद्धिके॥ जात उत्तपनीयोऽग्निः कुतश्चित्तप्तभाण्डतः॥१०॥ सन्नात्तप्तकपालानांमुत्थः सान्तपनः स्मृतः॥ इत्येवमग्नयः प्रोक्तास्तत्तत्कर्मसु योजिताः॥११॥ ग्रहाणां भास्करादीनां नवानां च नवाग्नयः॥ प्रोक्तान् क्रमेण तान्सर्वांस्तत्तस्मै विनियोजयेत्॥१२॥ कपिलः पिङ्गलश्चैव धूमकेतुश्च जाठरः॥ शिखी च हाटको नाम महातेजा हुताशनः॥१३॥ रौद्रोऽग्निरित्यथैतस्मिन्कर्मणीज्याः पृथकपृथक्॥ ब्रह्मा तु गार्हपत्योऽग्निरन्वाहार्यो महेश्वरः॥१४॥ विष्णुस्त्वाहवनीयोऽग्निरग्निहोत्रे त्रयोऽग्नयः॥ अविदित्वा तु यो वह्निं जुहुयादविचक्षणः॥१५॥ न तद्धुतं भवेदग्नौ न होता फलभाग्भवेत्॥ इत्यग्निनिर्णयः॥

अथ स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानां सर्वकर्मणामादौ साधारणत्वेनावश्यं कर्तव्यत्वात्तान्यादौ लिख्यन्ते। सङ्ग्रहे "स्नानं च पवनं चैव मन्त्राचमनमेव च॥ मन्त्रप्रोक्षणमेतानि कुर्यात्संस्कार आदितः" इति। गृह्यसूत्रे "वेदकर्माणि प्रयोक्ष्यन्नादित एव तीर्थे स्नात्वोदेत्याहतंवासः परिधायापआचम्यालङ्कृत्यैकविंशतिदर्भ-पञ्जीलैरात्मानं पवयित्वा यस्य कर्वन भवति तं पवयति॥" "चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वित्येतैर्मन्त्रैर्मुखनाभिगुल्फं च त्रिस्त्रिस्सम्मार्ष्टि"

इति ।। ''अब्लिङ्गाभिस्त्रिः पिबेद्व्याहृतिभिस्त्रिः परिमृजेत्'' इति च ।। इति पवनविधिः ।। अथ मन्त्रप्रोक्षणम् ।। कारिकायां ''दधिकाव्ण इत्येक आपोहिष्ठादयस्त्रयः ।। यच्चिद्ध्यादित्रयो मन्त्रा हिरण्यादिचतुष्टयम् ।। पवमानानुवाकश्च संज्ञिताः पावना इमे'' इति। तच्छेषसूत्रे ''सुरभिमत्याऽब्लिङ्गाभिर्वारुणीभिर्हिरण्यवर्णाभिः पावमानीभिर्व्याहृतिभिश्च'' इति ।। अथ द्वात्रिंशन्मार्जने स्थाननिर्णयः ।। कारिकायां ''द्वात्रिंशन्मार्जनाः प्रोक्ताः शिरःपूर्वादयः क्रमात्। शिरो वक्त्र ग्रीवबाहुवक्षोहृन्नाभिपार्श्वयुक् ।। कटिगुह्योरुजान्वादिजङ्घापा-दाङ्गुलीषु च। सर्वाङ्गेषु च ते कार्या मार्जनाः पापनाशनाः ।। बाहुपार्श्वोरुजान्वङ्घ्रिष्वेकैकस्यैकमार्जनम्। शिरःपूर्वादिविज्ञेयौ मार्जनौ युग्मयुग्मकौ'' इति द्वात्रिंशत्। यथा दधिक्राव्णः १, आपोहिष्ठाः ३, यच्चिद्धिते ३, हिरण्यवर्णाः ४, पवमानस्सुवर्जनः १७, व्याहृतयः ४, इति द्वात्रिंशत् स्थानानि। शिरसि द्वे (२), मुखे द्वे (४), ग्रीवायां द्वे (६), बाह्वोरेकैकं (८), वक्षसि द्वे (१०), हृदि द्वे (१२), नाभौ द्वे (१४), पार्श्वयोरेकैकं (१६), कट्यांद्वे (१८), गुह्ये द्वे (२०), ऊर्वोरेकैकं (२२), जानुनोरेकैकं (२४) जङ्घयोरेकैकं (२६), पादयोरेकैकं (२८), पादा ङ्गुलीष्वेकैकं (३०), सर्वाङ्गे द्वे (३२), एवं द्वात्रिंशत्स्थानेषु उक्तमन्त्रैः क्रमेण मार्जयेत् ।। इति मन्त्रप्रोक्षणम् ।।

अथ सर्वत्र कर्मादौ विघ्नेश्वरपूजाया अवश्यकत्वात्तन्मण्डललेखनप्रकारो लिख्यते। यथा शक्रासुरानिलहुताशनवारुणेशभागाश्रितं तु विलिखेद्रसकोणमन्तः। पाशीशपावकसुदिश्युदितं त्रिकोणं विघ्नार्चने तु विहितं नवकोणचक्रम् ।। कारिकायां ''प्रादेशमात्रं च षडश्रयुक्तं बिम्बं च ब्राह्ये गुणवर्तुलाढ्यम्। बाह्ये चतुष्कोणयुतं लिखित्वा मध्ये यजेद्विघ्नपतिं हुतेषु'' इति। अस्यार्थः। आदौ पूर्वादारभ्य नैर्ऋत्यवायव्यकोणपर्यन्तं रेखां लिखित्वा पूर्वेण योजयेत्। एवं वरुणादारभ्येशानाग्नेयवरुणपर्यन्तं रेखां लिखेत्। एवं षट्कोणं सम्पाद्य तदन्तर्वरुणेशाग्नेयवरुणपर्यन्तं त्रिकोणं विलिख्य एवं नवकोणं सम्पाद्य तद्बहिस्त्रिवृत्तं तद्बहिश्चतुष्कोणमितिमण्डलं विलिख्य तन्मध्ये गणपतिं यजेत् ।। इति विघ्नेश्वरपूजामण्डलविधिः ।।

अथ गोचर्मलक्षणम् ।। गोमयेन गोचर्ममात्रं चतुरश्रं स्थण्डिलं कृत्वेति सूत्रम्। तल्लक्षणं तु कारिकायां ''अष्टाङ्गुलीभिः प्रादेशं सार्धेनैकेन तत्पदम्। पदैर्द्वादशभिश्चैव गोचर्म ऋषिभिः स्मृतम् ।। अङ्गुष्ठेन कनिष्ठान्तं योजनीयं प्रमाणतः ।। प्रादेशतालगोकर्णवितस्तिरिति कथ्यते'' इति ।। इति गोचर्मलक्षणम् ।।

अथ पुण्याहमण्डलम् ।। कारिकायां ''तिस्रस्तिस्रस्तु रेखा विलिखतु समगाः पूर्वभागादिमध्ये मध्ये युग्युग्मरेखा वृषशशिवदना वह्निमाहेश्वराग्राः। द्वे द्वे रेखेसमग्रेहुतवहशिवयोर्द्वन्द्वरेखेऽसमग्रे माहेशाग्न्योस्त्रिवृत्तं बहिरथ विहितं पुण्यकालेऽष्टदिक्षु ।।'' अस्यार्थः। समतलभूमावादौ पूर्वभागे पूर्वापवर्गास्तिस्रो रेखा उत्तराग्रा विलिखेत्, ततो दक्षिणभागे पूर्वाग्रा उत्तरापवर्गास्तिस्रः। पश्चिमे पूर्वापवर्गा उत्तराग्रास्तिस्रः। उत्तरे पूर्वाग्रा उत्तरापवर्गास्तिस्रो रेखा लिखेत्। वृषा=इन्द्रः, शशी=कुबेरः। उत्तरदिगित्यर्थः। अन्याः प्रसिद्धाः। एवं द्वादशरेखा विलिख्य, तन्मध्ये पूर्वग्रे द्वे, उत्तराग्रे द्वे, ईशानाग्रे द्वे, आग्नेयाग्रे द्वे, एवमष्टौ रेखाः। तत्रैव मध्ये दक्षिणत आरभ्य पूर्वाग्रे द्वे, एवमुत्तरादारभ्य पूर्वाग्रे द्वे, पश्चिमादारभ्य दक्षिणाग्रे द्वे, पुनः पश्चिमादारभ्योत्तराग्रे द्वे, इति मध्यकोष्ठचततुष्केष्वपि रेखाश्च लिखेत्, एवं कृतेऽष्टाविशतिरेखा भवन्ति। बहिरष्टदिक्षु पृथक्पृथग्वृत्तत्रयं लिखेत्। कारिकाया ''अष्टाविंशतिरेखाभिः संयुतं पुण्यमण्डलम्। दस्रादितारकारूपं कारयेद्धस्तमात्रकम् ।।'' दस्रादि=अश्विन्यादि। ''रेखाणां वृत्रहादीनामश्व्याद्या ऋक्षदेवताः। एकैकामङ्गुलिं न्यस्येत्तत्द्रेखान्तरालके।'' हस्तमात्रं=सरत्निमात्रमित्यर्थः। प्रकोष्ठो विस्तृतकरो हस्तो मुष्ट्या तु बद्धया। सरत्निः स्यादरत्निस्तु निष्कनिष्ठेन मुष्टिनेत्यमरः ।। इति पुण्याहमण्डलम् ।।

अथ नान्दीनिर्णयः ॥ गृह्यसूत्रे ''नैकाह्ना पित्र्यं दैवं च कुर्वन्ति प्रजा अस्य प्रमायुका भवन्ति'' इति। ''तस्मात्पितृभ्यः पूर्वेद्युः क्रियते'' इति श्रुतेश्च। पूर्वेद्युः सद्यो वा नान्दीश्राद्धं कुर्यादिति विष्णुभट्टः। ब्रह्मपुराणेऽपि ''वनस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा'' इति। गृह्यपरिशिष्टे ''महत्सु पूर्वेद्युस्तदहरल्पेषु'' इति। गृह्यसूत्रेऽपि ''तेषु पूर्वेद्युरेवर्धिपूर्तेषु'' इति। अत्रैवं व्यवस्था। विवाहचौलोपनयनसोमादिषु पूर्वेद्युरेव नान्दीश्राद्धं कुर्यात्। गर्भाधानादितात्कालिकसंस्कारेषु पूर्वेद्युः सद्यो वा कुर्यात्। सद्योविधिरापद्विषयः, निषेधस्य बलीयस्त्वात्॥ अथ नान्दीकालः॥ स्मृतौ ''एकविंशत्यहर्यज्ञे विवाहे दश वासराः। त्रिषट् चौलोपनयने नान्दीश्राद्धं विधीयते॥'' विष्णुपुराणे स्मृत्यन्तरे च नान्दीश्राद्धमवश्यं कर्तव्यमित्युक्तम्। ''नान्दीमुखान्पितॄनादौ तर्पयेत् प्रयतो गृही। नानिष्ट्वा पितृयज्ञेन दैविकं किञ्चिदाचरेत्'' इति। अत्र क्रममाह प्रचेताः ''मातृश्राद्धं तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्'' इति। स्मृत्यर्थसारे ''नान्दीमुखा ये पितरः षष्ठादुपरि संस्थिताः। लेपभागाश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः'' इति। पारिजाते ब्रह्मपुराणवचनं ''ये स्युः पितामहादूर्ध्वं ते च नान्दीमुखाः स्मृताः। प्रसन्नमुखसंज्ञास्तु मङ्गलीया यतस्तु ते॥ पिता पितामहश्चैव तथैव प्रपितामहः। त्रयोऽप्यश्रुमुखाह्येते पितरः सम्प्रकीर्तिताः॥ तेभ्यः पूर्वेऽत्र ये ये तु ते तु नान्दीमुखाः स्मृताः'' इति। ''ते पित्रादित्रिभ्यः पूर्वपितरः प्रोष्ठपदपौर्णमासीनिमित्तश्राद्धदैवता एव न पुत्रजन्मादिकालिके'' इति तत्रैव महालयप्रकरणे पठितत्वात्। इहैतावत्सिद्धम्। यन्नामकरणचौलोपनयनविवाहादिषु यः कर्ता स तत्कर्मणि नान्दीमुखविशेषणवद्भ्यो मनुष्यपितृभ्यः श्राद्धं कुर्यादिति। अत्र मात्रादिमनुष्यपितॄन्नान्दीमुखविशेषणकान् कृत्वाऽर्चयेदिति हेमाद्रौ प्रदर्शितम्॥ तथा च तत्रत्यवचनं ''ऊर्ध्ववक्त्रास्तु ये तत्र ते नान्दीमुखसंज्ञिताः'' इति। ते दिव्यपितरः। मात्रादयश्च मनुष्यपितरः प्राधान्येनोद्देश्याः। नान्दीमुखाश्च तदभेददृष्टिविधया उद्देश्यस्वरूपेऽन्तर्भावनीयाः॥ अतो मात्रादि पित्रादि मातामहादि त्रयो मनुष्यपितर एव प्रयोगकाले नान्दीमुखशब्दविशेषणपूर्वकं प्रयोक्तव्याः। अन्ये दिव्यपितरस्तु प्रोष्ठपदादिश्राद्धे ग्राह्याः॥ इति नान्दीदेवतानिर्णयः॥ ६॥ अथ नान्दीश्राद्धे दैवे पित्र्ये च द्वौ द्वौ प्रत्येकं निमन्त्रयेदित्युक्तमाचार्यैः ''द्वौ द्वौ निमन्त्र्य चैकैके सम्भोज्या ब्राह्मणाः शुभाः। निमन्त्रयेत्तान् पूर्वं द्वौ विश्वेदेवार्थमाहितौ॥ पितृभ्यस्तु यथाशक्ति युग्मान्गुणवतो द्विजान्'' इति ॥ ६॥ अथ जीवत्पितृकविषये=पारिजाते सायणीयवचनं ''नान्दीश्राद्धं पिता कुर्यादाद्यपाणिग्रहे पुनः। अत ऊर्ध्वं प्रकुर्वीत स्वयमेव तु नान्दिकम्'' इति। द्वितीयविवाहादौ वर एव कुर्यादित्यर्थः। आश्वलायनधर्मे ''नान्दीश्राद्धं वरः कुर्यात्स्वस्तिवाचनपूर्वकम्। गृहप्रवेशमारभ्य पितर्यपि च जीवति॥ स जीवत्पितृको नान्दीश्राद्धं चेत्कुरुते द्विजः। पितुश्चैव पितॄणां च प्रवदन्ति महर्षयः'' इति। कात्यायनस्तु ''स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मसु॥ येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः॥ पिण्डमोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्॥'' अस्यार्थः। सुतसंस्कारकर्मसु ओद्वाहनान्तं=विवाहपर्यन्तं पिता स्वपितृभ्यः पिण्डं दद्यात्॥ पिण्डोपलक्षितं वृद्धिश्राद्धं कुर्यात्। तस्याभावे तु=पितुरभावे तु ''असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः'' इत्युक्तत्वाज्ज्येष्ठभ्रात्रादयः स्वपितृभ्यो दद्युरित्यर्थः। एवमेव व्रतसमावर्तनादौ पिता तदभावे भ्राता तस्याप्यभावे स्वयमेव स्वपितृभ्यो दद्यादिति। तदभावे तु तत्क्रमादित्यंशस्यार्थो हेमाद्रौ दर्शितः। पितुरभावेऽन्यो यः संस्कर्ता स तत्क्रमात्तत्पितरमारभ्य यः संस्कार्यस्य पितृक्रमस्तेन क्रमेण दद्यात्। न तु स्वकीयपितृभ्यः। तथा च निगमे ''तस्मात् पितृव्याचार्यमातुलादयसंस्कार्यस्योपनेयादेरेव पितृभ्यः श्राद्धं दद्युर्न स्वपितृभ्यः'' इति। अत्र विशेषो गृह्यपरिशिष्टे ''जीवत्पिता सुतसंस्कारेषु मातृमातामहयोः कुर्यान्मातरि जीवत्यां मातामहस्यैव कुर्यात्'' इति। तथा च कात्यायनः ''स्वपितुः पितृकृत्येषु ह्यधिकारो न विद्यते। न जीवन्तमतिक्रम्य किञ्चिद्दद्यादिति श्रुतिः॥'' अत्र केचिदपवादा मैत्रायणीयपरिशिष्टे ''उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः'' इति। पुत्रस्य षडेते श्राद्धकाला इत्यर्थः। पित्र्येष्ट्यां=चातुर्मास्येषु। सौमिके मखे=सोमयागादौ। पुरोडाशवत्पिण्डदाने च। एतत्साग्निकाभिप्रायम्। अत एव सुमन्तुः ''न जीवतः पितुः कुर्यात् श्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः॥ पितामहेऽप्येवमेव कुर्याज्जीवति साग्निकः। साग्निकोऽपि न कुर्वीत जीवति प्रपितामहे'' इति। प्रपितामहग्रहणं पितृपितामहप्रपितामहप्रदर्शनार्थम्। अत एव विष्णुः ''पितरि पितामहे प्रपितामहे च जीवति नैव दद्यात्'' इति। पितरि पितामहे च जीवतिकथमिति चेत्स एवाह विष्णुः

''पितरि जीवति यत् श्राद्धं पिता येषां कुर्यात्तेषामेव कुयात् पितरि पितामहे च येषां पितामहः'' इति। यज्ञतन्त्रसुधानिधावपि ''जीवत्पितृकस्य नान्दीश्राद्धे ह्यनधिकार एव प्रतीयते'' इत्युपक्रम्य ''उद्वाहे पुत्रजनने पित्र्येष्ट्यां सौमिके मखे। तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः'' इति। पुत्रस्येति शेषः। एते श्राद्धकाला इत्यर्थः। ''न जीवत्पितृकः कुर्याच्छ्राद्धमग्निमृते द्विजः। येभ्य एव पिता दद्यात्तेभ्यः कुर्वीत साग्निकः॥ साग्निकोऽपि न कुर्वीत यो जीवत्प्रपितामः'' इति। पितृपितामहाभ्यां सह प्रपितामहे जीवतीत्यर्थः। त्रिष्वपि जीवत्सु नान्दीस्थाने त एव पूज्याः। तेषामेकस्मिन्नप्यविद्यमाने येभ्य एव पिता दद्यादित्यादिवचनस्य सावकाशत्वात् यद्यपि पितृष्वपि जीवत्सु इदं वचनं प्रवर्तते तथाऽपि ''साग्निकोऽपि न कुर्वीत यो जीवत्प्रपितामहः'' इति वचनेन बाध्यते। एवं मातरि जीवत्यां येभ्य एव पिता दद्यादित्ययमेव न्यायः। मातामहे जीवति पुत्रिकापुत्रस्य तु येभ्य एव पिता दद्यादित्यादिन्यायेनानुष्ठानमिति। अनेन जीवत्पितृकस्य स्वद्वितीयविवाहपुत्रपुत्रीकविवाहपुत्रजननचातुर्मास्याग्निष्टोमादियज्ञतीर्थयात्राश्रोत्रियागमनकालव्यतिरिक्तेषु कर्मसु नान्दीश्राद्धे अधिकारो नास्ति। विवाहपुत्रजन्मनोरपि जीवत्पितृमातृमातामहस्य नान्दीश्राद्धप्रयोगे जनकस्य मातृपितृमातामहवर्गानुद्दिश्य श्राद्धं दद्यात्। पितरि जीवति मातरि मातामहेऽप्यविद्यमाने आदौ स्वमातृवर्गमुक्त्वा जनकस्य पितृवर्गं स्वमातामहवर्गंचोक्त्वा श्राद्धं दद्यात्। पितरि मृते मातरि मातामहे च जीवति तदा पितृवर्ग एवोद्देश्यः। एवं जीवत्पितृकः मातृवर्गमातामहवर्गयोरन्यतरस्मिन्विद्यमाने विद्यमानवर्गं परित्यज्य दद्यादिति। विश्वपतिप्रयोगे तु ''जीवत्पितृकः पितृमात्रादिभ्यो वृद्धिश्राद्धं कुर्यात्। पितरि जीवति येषां पिता कुर्यात्पितरि पितामहे च येषां पितामहः, पितरि पितामहे प्रपितामहे च नैव दद्यात्। जीवत्पितृकवत् जीवन्मातृकस्य न मातामहपार्वणं द्वारलोपात्'' इति। अनेन जीवत्पितृकस्यापि सर्वत्र नान्दीश्राद्धाधिकारः प्रतीयते। तथासति ''विवाहे पुत्रजनन'' इति पूर्वोक्तवचनविरोधः स्यात्। अतो जीवत्पितृकेणाऽपि पुत्रजनने विवाहे चातुर्मास्ये सोमयागादिषु तीर्थे श्रोत्रियागमने चैवमुक्तप्रकारेणावश्यं श्राद्धं कुर्यात्, गर्भाधानादिषु तु जीवत्पितृकस्य नैवधिकारः तदा ते प्रत्यक्षेण पूज्या इति पारिजाते प्रपञ्चितम्। किञ्च मैत्रायणीयपरिशिष्टे ''वृद्धौ तीर्थे च संन्यस्ते ताते च पतिते सति। येभ्य एव पिता दद्यात्तेभ्यो दद्यात्स्वयं सुतः'' इति। अत्र वृद्धिशब्दग्रहणं ''विवाहे पुत्रजनने'' इति पूर्वोक्तस्थलेषु क्रियमाणवृद्धिश्राद्धपरम्॥ इति जीवत्पितृकनान्दीनिर्णयः॥छ॥ विधवाकर्तृकनान्दीश्राद्धविषये ''स्वभर्तृप्रभृतित्रिभ्यः स्वपितृभ्यस्तथैव च। विधवा कारयेत् श्राद्धं यथाकालमतन्द्रिता॥ न स्वधा नापसव्यं च न गोत्रं न च रूपकम्। तिलस्थाने यवः कार्यो दर्भस्थाने च दूर्वकाः'' इत्यादिवचनान्युपलभ्यन्ते। शिष्टाचारस्तु विधवाकर्तृकव्रतादौ तत्सुतादिभिरेव नान्दीश्राद्धं क्रियमाणं दृश्यते। तस्माद्यथाचारमनुष्ठानं युक्तमिति भाति॥ श्राद्धं तु त्रिविधं अन्नश्राद्धमामश्राद्धं हिरण्यश्राद्धमिति। एषामन्यतमेन वा कुर्यात्। वैश्वदेवानन्तरं नान्दीश्राद्धं कुर्यादित्युक्तम्। सङ्ग्रहे ''वृद्धावादौ, क्षये चान्ते, दर्शे मध्ये, महालये। आचान्तेषु च कर्तव्यं वैश्वदेवं चतुर्विधम्'' इति॥ इति नान्दीनिर्णयः॥

अथ पुण्याहनिर्णयः॥ गृह्यसूत्रे अथापरेद्युर्देवानामिति। पूर्वेद्युर्नान्दीश्रद्धं कृत्वाऽपरेद्युः पुण्याहं कुयारदित्यर्थः। ''अथ ब्राह्मणान् अन्नेन परिविष्य पुण्याहगुँ स्वस्ति ऋद्धिमिति वाचयित्वा'' इति सूत्रे। ''अन्नेनामेन हिरण्येन वा ब्राह्मणान्सम्पूज्य तैरेव पुण्याहं वाचयेत्'' इति विष्णुभट्टः। व्यासोऽपि ''सम्पूज्य गन्धमाल्याद्यैर्ब्राह्मणान्स्वस्ति वाचयेत्। धर्मकर्मणि माङ्गल्ये सङ्ग्रामेऽद्भुतदर्शने'' इति। गृह्यपरिशिष्टे ''अथ स्वस्तिवाचनमृद्धिपूर्तेषु'' इति। ऋद्धिर्विवाहान्ता अपत्यसंस्काराः। पूर्तं प्रतिष्ठाद्यापने। ''तत्तत्कर्मणश्चाद्यन्तयोः पुण्याहं कुर्यात्'' इति। आश्वलायनः ''वैदिके तान्त्रिके चादौ ततः पुण्याह इष्यते'' इति। शौनकोऽपि ''पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि। प्रयोज्यकर्मणामादावन्ते चोदयसिद्धये'' इति। पुण्याहकालस्तु। त्रिंशद्घटिकात्मकं दिवाप्रमाणं नवधा विभज्य विंशति कलाधिकघटिकात्रयात्मकनवभागेषु

प्रथमतृतीयपञ्चमसप्तमनवमभागाः पुण्याहाः। द्वितीयषष्ठभागौ श्लीलौ=अनिन्द्यावित्यर्थः। चतुर्थाष्टमभागावश्लीलौ=निन्द्यावित्यर्थः। पुण्याहवाचनं तु प्रयोगान्तर्गतमिति केचित्, प्रयोगबहिर्भूतमिति बहवः। अत्राद्यपक्षे प्रधानकर्मसङ्कल्पं कृत्वा पुण्याहं वाचयेत्। बहिर्भूतपक्षे पुण्याहानन्तरं कर्मसङ्कल्पं कुर्यात्। कारिकायां ''ततः पञ्च द्विजा अन्नैस्तर्पिता दर्भहस्तकाः। चत्वारः प्राङ्मुखाः स्थाप्यास्तेषां दक्षिणतोऽपरः॥ धारयन्नुदकुम्भं तु सापिधानमुदङ्मुखः। दक्षिणं बाहुमन्वास्य स्वयं तिष्ठेत्स्पृशन्निव॥ पुण्याहं वाचयेदन्यान्नुदकुम्भस्य धारकः। उक्तमुक्तं प्रतिब्रूयुः शान्तिरस्त्वादिसप्तकम्'' इति। गृह्यसूत्रेऽपि ''चत्वारः प्राङ्मुखाः स्थाप्याःप्राङ्मुखोऽपर उदकुम्भं धारयंस्तस्य पुण्याहं वाचयिष्यन्यद्दैवत्यं भवति तस्यनाम गृण्हात्यसौ प्रीयताम्'' इति। ''सम्पूजिता ब्राह्मणा अरिक्तपाणयः प्राङ्मुखा युग्मास्तिष्ठन्ति तेषां दक्षिणतः प्राङ्मुखोवोदङ्मुखो वाऽपिहितमुदकुंभं धारयन्वाचयिता तिष्ठत्यपरः कुम्भः स्थण्डिले तिष्ठति तस्य दक्षिणं बाहुमन्वितरस्तिष्टति'' इति। विष्णुभट्टोऽपि ''कुशान्दूर्वान्धारयमाणा अरिक्तपाणयः प्राङ्मुखाश्चत्वारस्तिष्ठन्ति तेषां दक्षिणत उदङ्मुखोऽपिहितं उदकुम्भं धारयित्वान्यस्तिष्ठति तस्य दक्षिणं बाहुमाश्रित्येतरो वरादिस्तिष्ठति'' इति॥ इति पुण्याहनिर्णयः॥

अथ नान्दीप्रयोगः॥ कर्ता पूर्वेद्युः प्रातः स्नानादि नित्यकर्म कृत्वा वैश्वदेवं हुत्वा गणपतिं सम्पूज्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम कुमारस्य श्वः करिष्यमाणामुककर्माङ्गतया विहितं पुण्याहपूर्वकं नान्दीसमाराधनं हिरण्येन करिष्ये (रात्रौ चेद्रात्रौ करिष्यमाण इति, सद्यश्चेदद्य करिष्यमाण इति) इति सङ्कल्प्य, ''अस्य नान्दीसमाराधनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु। अस्मै नान्दीसमाराधनकर्मणे स्वस्ति भवन्तो ब्रुवन्तु। अस्य नान्दीसमाराधनकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु। नान्दीमुखाः पितरः प्रीयन्ताम्'' इति पुण्याहं वाचयित्वा प्रोक्षणान्तं कृत्वा, विश्वेदेवार्थं चतुरो ब्राह्मणान् द्वौ वा मात्रादिवर्गत्रयस्य षट् द्वौ वा यथाशक्ति ब्राह्मणान्निमन्त्र्य, पूर्वाभिमुखानुपवेश्य, हस्ते गन्धाक्षतपुष्पदूर्वाङ्कुरान् गृहीत्वा ब्राह्मणपादेषु निनयति। नान्दीसत्यवसुसंज्ञिका विश्वेदेवा नान्दीमुखा भूर्भुवःसुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। नान्दीमातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवःसुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। नान्दीपितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवःसुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। नान्दीमातामहमातुःपितामहमातुःप्रपितामहा नान्दीमुखाः भूर्भुवःसुवरिदं वः पाद्यं स्वाहा न ममेयं च वृद्धिः। हस्ते गन्धयवाक्षतदूर्वाङ्कुरान् गृहीत्वा नान्दीसत्यवसुसंज्ञिका विश्वेदेवा नान्दीमुखा भूर्भुवःसुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः। नान्दीमातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवःसुवरिदं वो आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः। नान्दीपितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवःसुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा

न ममेयं च वृद्धिः । नान्दीमातामहमातुःपितामहमातुःप्रपितामहा नान्दीमुखाः भूर्भुवःसुवरिदं व आसनगन्धाद्युपचारकल्पनं स्वाहा न ममेयं च वृद्धिः । हस्ते हिरण्याक्षतजलं गृहीत्वा नान्दीसत्यवसुसंज्ञिका विश्वेदेवा नान्दीमुखा भूर्भुवःसुवरिदं वो युग्मब्रह्मणभोजनपर्याप्तान्ननिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा न ममेयं च वृद्धिः । नान्दीमातृपितामहीप्रपितामह्यो नान्दीमुख्यो भूर्भुवःसुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा न ममेयं च वृद्धिः । नान्दीपितृपितामहप्रपितामहा नान्दीमुखा भूर्भुवःसुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्ननिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा न ममेयं च वृद्धिः । नान्दीमातामहमातुःपितामहमातुःप्रपितामहा नान्दीमुखाभूर्भुवःसुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तान्न-निष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा न ममेयं च वृद्धिः ॥ ॐ इडा देवहूर्मनुर्यज्ञनीर्बृहस्पतिरुक्थामदानि शगुँसिषद्विश्वेदेवा-स्सूक्तवाचः पृथिविमातर्मामाहिगुँसीर्मधुमनिष्ये मधुजनिष्ये मधुवक्ष्यामि मधुवदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासगुँशुश्रूषेण्यां मनुष्येभ्यस्तम्मा देवा अवन्तु शोभायै पितरोनुमदन्तु ॥ "नान्दीमुखाः पितरः प्रीयन्ताम्" इति यवाक्षतदूर्वायुक्तापो निनीय । कृतस्य कर्मणः साङ्गतासिध्यर्थं द्राक्षामलकनिष्क्रयभूतं किञ्चिद्धिरण्यं स्वाहा न ममेयं च वृद्धिः ॥ ॐ इडामग्ने पुरुदगुँसगुँ सनिंगोःशश्वत्तमगुँ हवमानाय साध । स्यान्नः सूनुस्तनयो विजावाग्ने सा ते सुमतिर्भूत्वस्मे । इडएहि अदितएहि सरस्वत्येहि शिवगुँशिवम्, इति ताम्बूलगन्धाक्षतादियुक्तपात्रंवामहस्ते गृहीत्वाहिरण्येन तदधस्त्रिस्ताडयेदिति शिष्टाचारः ॥ यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ अनेन नान्दीसमाराधनकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ इति नान्दीश्राद्धप्रयोगः ॥ ६ ॥

आमश्राद्धपक्षे । पूर्वोक्तप्रकारेण पाद्यासनादिकं दत्वा, भोजनचतुर्गुणपरिमिततण्डुलान् ससोपस्करान् पात्रद्वये निधाय,

सव्याहृतिगायत्र्या प्रोक्ष्य। नान्दीसत्यवसुसंज्ञका विश्वेदेवा नान्दीमुखा भूर्भुवःसुवरिदं वो युग्मब्राह्मणभोजनपर्याप्तमिदमामं स्वाहा न ममेयं च वृद्धिः। पुनः पूर्ववत् प्रोक्ष्य। नान्दीमातृपितामहीत्यादि = युग्मब्राह्मणभोजनपर्याप्तमिदमामं स्वाहा न ममेयं च वृद्धिः॥ एवं पित्रादिभ्यो मातामहादिभ्यश्च दद्यात्॥ इत्यामश्राद्धविधिः॥ यस्मिन् दिने नान्दीश्राद्धं कुर्यात्तस्यामेव रात्रौ उदकशान्तिप्रतिसरबन्धौ कुर्यात्। तावग्रे वक्ष्येते॥

अथ स्नानपवनादिप्रयोगः॥ कारिकायां "नान्दीमुखं च पुण्याहं स्नानं पवनमाचमम्॥ मन्त्रप्रोक्षणकं कुर्यात् कर्मादौ षड्विधं गृही" इति॥ एतेषां कर्मादावावश्यकत्वादादौ स्नानपवनादिप्रयोगो लिख्यते॥ अथापरेद्युः कर्ता सपत्नीकस्संस्कार्येण सह प्रातर्मङ्गलस्नानादिनित्यकर्म कृत्वाऽऽसने प्राङ्मुख उपविश्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्यामुककर्मकर्तुं मम शरीरशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये इति सङ्कल्प्य॥ ॐ आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन। महेरणाय चक्षसे॥ ॐ योवः शिवतमो रसस्तस्य भाजयते ह नः। उशतीरिव मातरः॥ ॐ तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ। आपो जनयथा च नः॥ इति त्रिरुक्त्वा। नवमार्जनानि कृत्वा। तल्लक्षणं तु "भुवि मूर्ध्नि तथाऽकाशे मूर्ध्न्याकाशे तथा भुवि। आकाशे भुवि मूर्ध्नि स्यान्नवमार्जनलक्षणम्॥" अथैकविशतिदर्भपुञ्जीलान् त्रेधा विभज्य प्रथमभागं गृहीत्वा "ॐ भूः[1] चित्पतिस्त्वा पुनात्वच्छिद्रेण पवित्रेण वसोःसूर्यस्य रश्मिभिः" इत्यास्य[2]मारभ्य शिरोन्तं त्रिः परिमृजेत्। "ॐ भुवः वाक्पतिस्त्वा ....... रश्मिभिः" इति

---

[1] टिप्पणम्: - "यस्य कुर्वन् भवति तं पवयति" इति सूत्रे उक्तत्वेन मन्त्रेऽस्मिन् विद्यमानस्य "त्वा" शब्दस्य कियमाणकर्मार्थकत्वेन मन्त्रस्यास्य पवने विनियोगे स्वकतृकेऽपि न कोऽपि विरोधः। तेन "त्वा" शब्दस्यान्योद्देश्यकत्वाभिधायकं प्रलपनं निरस्तम्। अपि च चित्पतिस्त्वा पुनात्वित्यादि मन्त्रत्रयाणामादौ व्याहृतियोजन, विश्वामित्रकारिकायां व्याहृतिभिर्मार्जनस्योक्तत्वात् च युक्तमेव। बहुषु तथा शिष्टाचारस्यापि सत्वात्॥

[2] अत्र पूर्वं वेंकटेशीये दर्शितः प्राचीन प्रयोगोऽपि साधुरेव॥

नाभिमारभ्यास्यान्त त्रिः परिमृजेत्। "ॐ सुवः देवस्त्वा सविता पुनातु ..... रशिमभिः" इति नाभिमारभ्य गुल्फान्तं त्रिः परिमृजेत्। तान्दर्भानद्भिरभ्युक्ष्योदङ्निरस्यापउपस्पृश्य मन्त्राचमनं कुर्यात्। ॐ आपोहिष्ठा..... चक्षसे, इति प्रथमम्। ॐ योवःशिवत ..... मातरः इति द्वितीयम्। ॐ तस्मा ..... यथाचन, इति तृतीयम्। स्वाहेति प्राश्याङ्गुष्ठमूलेन मुखं व्याहृतिभिः त्रिः परिमृज्य सव्यं पाणिं पादौ प्रोक्ष्याङ्गुष्ठानामिकाभ्यां चक्षुषी, अङ्गुष्ठतर्जनीभ्यां नासिके, अङ्गुष्ठकनिष्ठिकाभ्यां श्रोत्रे, अङ्गुष्ठमध्यमाभ्यां बाहुमूले, अङ्गुष्ठेन नाभिं, पाणितलेन हृदयं, पञ्चभिः शिरः, इति प्रत्येकमुपस्पृश्य तूष्णींद्विराचमेदिति मन्त्राचमनम्।। अथ मन्त्रप्रोक्षणम्।। ॐ दधिकाव्णोअकारिषं जिष्णोरश्वस्यवाजिनः। सुरभिनोमुखाकरत्प्रणआयुगूँषितारिषत् (१)। ॐ आपोहिष्ठा ..... चक्षसे (२) इति शिरसि द्वे।। ॐ योवःशिवत ..... जनयथा च नः (४) इति मुखे द्वे। ॐ यच्चिद्धि ते विशो यथा प्रदेव वरुण व्रतम्। मिनीमसि द्यविद्यवि (५)। ॐ यत्किञ्चेदं वरुण दैव्ये जनेभिद्रोहं मनुष्याश्चरामसि। अचित्ती यत्तव धर्मा युयोपिममानस्तस्मादेनसो देवरीरिषः (६) इति ग्रीवायां द्वे। कितवासो यद्रिरिपुर्नदीवि यद्वाघासत्यमुतयन्नविद्म। सर्वाताविष्यशिथिरेव देवाथा तेस्याम वरुण प्रियासः (७)। ॐ हिरण्यवर्णाः शुचयः पावका यासु जातः कश्यपो यास्विन्द्रः। अग्निं या गर्भदधिरे विरूपास्तान आपः शगुँस्योना भवन्तु (८) इति दक्षिणवामबाह्वोः। ॐ यासागुँ राजा वरुणो याति मध्ये सत्यानृते अवपश्यं जनानाम्। मधुश्चतः शुचयो याः पावकास्तान आपः शगुँस्योना भवन्तु (९)। ॐ यासां देवा दिवि कृण्वन्ति भक्षं या अन्तरिक्षे बहुधा भवन्ति। याः पृथिवी पयसोदन्ति शुक्रास्तान आपः शगुँस्योना भवन्तु (१०) इति वक्षसि

द्वे। ॐ शिवेनमाचक्षुषा पश्यतापः शिवयातनुवोपस्पृशतत्वचं मे। सर्वागुँअग्नीःगुँ रप्सुषदोहुवेवोमयिवर्चोबलमोजो निधत्त (११)। ॐ पवमानस्सुवर्जनः। पवित्रेण विचर्षणिः। यः पोता स पुनातु मा (१२) इति हृदये द्वे। ॐ पुनन्तु मा देवजनाः। पुनन्तु मनवो धिया। पुनन्तु विश्व आयवः (१३)। ॐ जातवेदः पवित्रवत्। पवित्रेण पुनाहिमा। शुक्रेण देवदीद्यत्। अग्ने क्रत्वाक्रतूगुँरनु (१४) इति नाभौ द्वे। ॐ यत्ते पवित्रमर्चिषि। अग्ने विततमन्तरा। ब्रह्म तेन पुनीमहे (१५)। ॐ उभाभ्यां देव सवितः। पवित्रेण सवेन च। इदं ब्रह्म पुनीमहे (१६) इति पार्श्वयोर्द्वे। ॐ वैश्वदेवी पुनती देव्यागात्। यस्यै बह्वीस्तनुवो वीतपृष्ठाः। तया मदन्तः सधमाद्येषु। वयगुँ स्याम पतयो रयीणाम् (१७)। ॐ वैश्वानरोरश्मिभिर्मा पुनातु। वातः प्रोणेनेषिरो मयोभूः। द्यावापृथिवी पयसा पयोभिः। ऋतावरी यज्ञिये मा पुनीतम् (१८) इति कट्यां द्वे। ॐ बृहद्भिस्सवितस्तृभिः। वर्षिष्ठैर्देवमन्वभिः। अग्ने दक्षैः पुनाहि मा (१९) ॐ येन देवा अपुनत। येनापो दिव्यङ्कशः। तेन दिव्येन ब्रह्मणा। इदं ब्रह्म पुनीमहे (२०) इति गुह्ये द्वे। ॐ यः पावमानीरध्येति॥ ऋषिभिस्सम्भृतगुँ रसम्। सर्वगुँ स पूतमश्नाति। स्वदित मातरिश्वना (२१)। ॐ पावमाननीर्यो अध्येति। ऋषिभिस्सम्भृतगुँ रसम्। तस्मै सरस्वतीदुहे। क्षीरगुँ सर्पिर्मधूदकम् (२२) इत्यूर्वोर्द्वे। ॐ पावमानीः स्वस्त्ययनीः। सुदुघा हि पयस्वतीः। ऋषिभिस्सम्भृतो रसः। ब्राह्मणेष्वमृतगुँ हितम् (२३)। ॐ पावमानीर्दिशन्तु नः। इमँल्लोकमथो अमुम्। कामान्त्समर्धयन्तुःनः। देवीर्देवैस्समाभृताः (२४) इति जानुनोर्द्वे। ॐ पावमानीस्स्वस्त्ययनीः। सुदुघा हि घृतश्चुतः। ऋषिभिः सम्भृतो रसः। ब्राह्मणेष्वमृतगुँ हितम् (२५)। ॐ येन देवाः पवित्रेण। आत्मानं पुनते सदा।

तेन सहस्रधारेण। पावमान्यः पुनन्तु मा (२६) इति जङ्घयोर्द्वे। ॐ प्राजापत्य पवित्रम्। शतोद्यामगुँहिरण्मयम्। तेन ब्रह्मविदो वयम्। पूतं ब्रह्म पुनीमहे (२७) ॐ इन्द्रस्सुनीतीसह मा पुनातु। सोमः स्वस्त्या वरुणः समीच्या। यमोराजा प्रमृणाभिः पुनातु मा। जातवेदा मोर्जयन्त्या पुनातु (२८) इति पादयोर्द्वे। ॐ भूः (२९)। ॐ भुवः (३०) इति पादङ्गलीषु द्वे। ओगुँ सुवः (३१)। ॐ भूर्भुवःसुवः (३२) इति सर्वाङ्गे द्वे। इति द्वात्रिंशन्मार्जनानि षोडशस्थानेषु युग्मयुग्मक्रमेण मार्जयेत्। अन्यैश्च पवित्रमन्त्रैरात्मानं प्रोक्षेदित्युक्तत्वात्। ॐ शन्नोदेवीरभिष्टय आपो भवन्तु पीतये। शंयो रभि स्रवन्तु नः।। ॐ कयानश्चित्र आ भुव दूती सदा वृ धस्स खा। कयाशचिष्ठया वृता।। ॐ कस्त्वासत्योमदानांमगुँहिष्ठोमत्सदन्धसः। दृढाचिदारुजेवसु। अभीषुणस्सखीनामविताजरितृणां शतभ्भवास्यूतिभिः। ॐ तरत्समन्दी धावतिधारा सुतस्यान्धसः। तरत्समन्दीधावति। उस्रावेदवसूनां मर्तस्य देव्यवसः। तरत्समन्दीधावति। ध्वस्रयोः पुरुषन्त्योरासहस्राणि दद्महे। तरत्समन्दीधावति। आययोस्त्रिगुँशतन्तनासहस्राणिचदद्महे। तरत्समन्दीधावति (४) इति मार्जयित्वा, अनेन स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणकर्मणा श्रीपरमेश्वरः प्रीयताम्।।

अथ पुण्याहप्रयोगः।। अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं (द्वादशपदपरिमितमित्यर्थः) चतुरश्रं स्थण्डिलं कृत्वा श्वेतमृद्भिः पूर्वोक्तप्रकारेणाष्टाविंशतिरेखात्मकं पुण्याहमण्डलं कृत्वा तदुपरि तण्डुलैः स्थण्डिलं कृत्वा कलशद्वयं प्रतिष्ठाप्य जलेन पूरयित्वा तदन्तः पञ्चरत्नानि निक्षिप्य तदुपरि पञ्चपल्लवान्निधाय नारिकेलफलेनापिधाय तदुपरि कूर्चं निधाय गन्धाक्षतपुष्पादिभिरलङ्कृत्य तद्दक्षिणभागे पूर्वोक्तप्रकारेण गणपतिमण्डलं विलिख्य पूजयेत्। अत्र कलशयोः

स्थिरचरप्रकार उक्तो नारायणभट्टीये ''पुण्याहवाचने चैव यः कुर्यात्कलशार्चनम्। दक्षिणस्थः स्थिरश्चैव उत्तरस्थश्चरस्तथा ।। न चालयेद्दक्षिणस्थमुत्तरस्थं तु चालयेत्। अन्यथा कर्महानिस्स्यादेष धर्मस्सनातनः'' इति। अथ कर्ता कृतमङ्गलस्नानोऽलङ्कृतशरीरो दर्भपाणिः स्वोत्तरच्छदे भद्रासने प्राङ्मुख उपविश्य स्वदक्षिणभागे पत्नी तद्दक्षिणे संस्कार्यः पुत्रः पुत्री वा क्रमेणोपविश्य। अत्र कारिका ''होतुश्च दक्षिणे भागे यजमानो निषीदति। तद्दक्षिणे च तत्पत्नी दक्षिणे तत्सुतादयः'' इति। मण्डलस्य पश्चिमे भागे चत्वारो ब्राह्मणाः दर्भपाणयः स्थाप्यास्तद्दक्षिणेऽन्यः कलश धारयंस्तिष्ठति, तस्य दक्षिणं बाहुमन्वारभ्य कर्तोदङ्मुखस्तिष्ठति, कलशधारको ब्राह्मणान्पुण्याहं वाचयेत्। अथ कर्ता द्विराचम्य प्राणानायम्य गणेशादीन् प्रार्थयेत्। यथा। सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः ।। लम्बोदरश्च विकटो विघ्नराजो गणाधिपः ।।१।। धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः ।। द्वादशैतानि नामानि यः पठेच्छृणुयादपि ।।२।। विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा ।। सङ्ग्रामे सर्वकार्येषु विघ्नस्तस्य न जायते ।।३।। शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।। प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ।।४।। अभीप्सितार्थसिध्यर्थं पूजितो यः सुरैरपि ।। सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः ।।५।। सर्वेषु कालेषु समस्तदेशेष्वशेषकार्येषु तथेश्वरेश्वरः ।। सर्वैं स्वरूपैर्भगवाननादिर्ममास्तु माङ्गल्यविवृद्धये हरिः ।।६।। यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।। तत्र श्रीर्विजयो भूतिर्ध्रुवानीतिर्मतिर्मम ।।७।। अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ।।८।। स्मृते सकलकल्याणभाजनं यत्र जायते ।। पुरुषं तमहं नित्यं व्रजामि शरणं हरिम् ।।९ ।। सर्वेष्वारब्धकार्येषु त्रयस्त्रिभुवनेश्वराः ।। देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः ।।१०।। सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् ।। येषां हृदिस्थो भगवान्मङ्गलायतनं हरिः ।।११।। मङ्गलं भगवान्विष्णुर्मङ्गलं मधुसूदनः ।। मङ्गलं पुण्डरीकाक्षो मङ्गलं गरुडध्वजः ।।१२।। सर्वमङ्गलदातारौ पार्वतीपरमेश्वरौ ।। गणेशस्कन्दसंयुक्तौ वन्दे वाञ्छितसिद्धये ।।१३।। यः शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।। तयोस्संस्मरणात्पुंसां सर्वतो जयमङ्गलम् ।।१४।। तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं

स्मरामि ॥१५॥ लक्ष्मीनारायणाभ्यां नमः। सीतारामाभ्यां नमः। उमामहेश्वराभ्यां नमः। वाणीहिरण्यगर्भाभ्यां नमः। शचीपुरन्दराभ्या नमः। अरुन्धतीवसिष्ठाभ्यां नमः। दुर्गायै नमः। गणपतये नमः। क्षेत्रपालाय नमः। वास्तुपुरुषाय नमः। मातृभ्यो नमः। पितृभ्यो नमः। गुरुभ्यो नमः। आचार्येभ्यो नमः। ग्रामाधिदेवताभ्यो नमः। इष्टदेवताभ्यो नमः। कुलदेवताभ्यो नमः। सर्वेभ्यो देवेभ्यो नमः। सर्वेभ्यो ब्राह्मणेभ्यो नमः। श्रीमद्भगवद्बोधायनाचार्येभ्यो नमः ॥ सुमुहूर्तमस्त्विति भवन्तो ब्रुवन्तु। सुमुहूर्तमस्त्विति प्रतिवचनम् ॥ ॐ देवी वाचमजनयन्त देवाः। तां विश्वरूपाः पशवो वदन्ति। सा नो मन्द्रेषमूर्जं दुहाना। धेनुर्वागस्मानुपसुष्टुतैतु। ॐ भागधेयेनैवैनं प्रणयति। ब्राह्मण आर्षेय उद्धरेत्। ब्राह्मणो वै सर्वा देवताः। सर्वाभिरेवैनं देवताभिरुद्धरति ॥ सर्वेभ्यो ब्राह्मणेभ्यो नमः। इति ब्राह्मणान्नमस्कृत्य देशकालौ सङ्कीर्त्य एवं गुणविशेषणविशिष्टायां शुभतिथौ करिष्यमाणस्यामुककर्मणो निर्विघ्नेन परिसमाप्त्यर्थं गणपति पूजा करिष्ये ॥ ॐ गणानां त्वा गणपतिगुँहवामहे कविं कवीनामुपमश्रवस्तमम् ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पतआनः शृण्वन्नूतिभिस्सीद सादनम् ॥ गणपतये नमः ध्यानं समर्पयामि। दूर्वाक्षतान् गृहीत्वा। ॐ भूः गणपतिमावाहयामि। ॐ भुवः गणपतिमावाहयामि। ॐ सुवः गणपतिमावाहयामि। ॐ भूर्भुवःसुवः गणपतिमावाहयामि। ॐ गणपतये नमः आसनं समर्पयामि। गणपतये नमः पाद्यं समर्पयामि। गणपतये नमः अर्घ्यं समर्पयामि। गणपतये नमः आचमनं समर्पयामि। गणपतये नमः स्नानं समर्पयामि। गणपतये नमः पुनराचमनं समर्पयामि। गणपतये नमः वस्त्रं समर्पयामि। गणपतये नमः उपवीतं समर्पयामि। गणपतये नमः आभरणं समर्पयामि। गणपतये नमः गन्धान् समर्पयामि। गणपतये नमः अक्षतान् समर्पयामि। गणपतये नमः पुष्पाणि समर्पयामि। गणपतये नमः धूपं समर्पयामि। गणपतये नमः दीपं समर्पयामि।

गणपतये नमः नैवेद्यं समर्पयामि। गणपतये नमः ताम्बूलं समर्पयामि। गणपतये नमः नीराजनं समर्पयामि। गणपतये नमः मन्त्रपुष्पं समर्पयामि। गणपतये नमः प्रदक्षिणं समर्पयामि। गणपतये नमः नमस्कारं समर्पयामि। गणपतये नमः सुवर्णपुष्पं समर्पयामि। वक्रतुण्ड महाकाय सूर्यकोटि समप्रभ। अविघ्नं कुरु मे देव सर्वकार्येषु सर्वदा॥ गणपतये नमः प्रार्थनां समर्पयामि। गणपतये नमः सर्वोपचारपूजां समर्पयामि॥ अनेन पूजाराधनेन महागणपतिः प्रीयताम्॥ अथ हस्ते फलताम्बूलानि गृहीत्वा॥ ॐ क्षेत्रस्य पतिना वयगुँहितेनेव जयामसि॥ गामश्वं पोषयित्न्वा सनोमृडातीदृशे॥ ॐ क्षेत्रस्यपते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासुधुक्ष्व॥ मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु॥ क्षेत्रपालाय नमः॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः॥ यत्वेमहे प्रतितन्नोजुषस्व शन्न एधि द्विपदे शं चतुष्पदे॥ ॐ वास्तोष्पते शग्मया सगुँसदातेसक्षीमहिरण्मयागातुमत्या॥ आवःक्षेमउतयोगेवरन्नो यूयं पात स्वस्तिभिस्सदानः॥ ॐ अमीवहा वास्तोष्पते विश्वारूपाण्याविशन्॥ सखा सुशेव एधि नः॥ वास्तोष्पतये नमः॥ इत्यक्षतपुञ्जेषु फलताम्बूलानि निक्षिप्य पुण्याहवाचनं कुर्यात्॥ अथ कर्ता प्राणानायम्य देशकालौ सङ्कीर्त्य, एवंगुणविशेषणविशिष्टायां शुभतिथौ करिष्यमाणामुककर्माङ्गतयाविहितं शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थं वृद्ध्यर्थं च ब्राह्मणैस्सह स्वस्तिपुण्याहवाचनं करिष्ये, इति सङ्कल्प्य भूमि स्पृशेत्॥ ॐ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम्॥ पिपृतान्नोभरीमभिः॥ इति भूमिम्॥ ॐ ओषधयस्संवदन्ते सोमेन सह राज्ञा॥ यस्मै करोति ब्राह्मणस्तगुँराजन्पारयामसि॥ इति तण्डुलान्॥ ॐ आजिघ्र कलशं मह्युरुधारापयस्वत्या त्वा विशन्त्विन्दवस्समुद्रमिव सिंधवस्सामा सहस्र आभज प्रजया पशुभिस्सह पुनर्माविशताद्रयिः॥ इति कलशम्॥ ॐ तन्तुं तन्वनूरजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष

धिया कृतान् ॥ अनुल्बणं वयतजोगुवामपोमनुर्भव जनयादैव्यं जनम् ॥ इति तन्तून् ॥ ॐ इमं मे गङ्गे यमुने सरस्वति शुतुद्रिस्तोमगुँसचता परुष्णिया ॥ असिक्निया मरुद्वृधे वितस्तयार्जीकीये शृणुह्या सुषोमया ॥ इति जलं पूरयेत् ॥ ॐ स्योनापृथिविभवानृक्षरानिवेशनी ॥ यच्छानः शर्म सप्रथाः ॥ इति मृत्तिकाम् ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीगुँ सर्वभूताना तामिहोपह्वये श्रियम् ॥ इति गन्धान् ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन च । इति दूर्वाः ॥ ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिः कृता ॥ गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥ इति पल्लवान् ॥ ॐ याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिःप्रसूतास्तानो मुञ्चन्त्वगुँहसः ॥ इति फलम् ॥ ॐ बृहस्पते जुषस्व नो हव्यानि विश्वदेव्या ॥ रास्व रत्नानि दाशुषे ॥ इति रत्नानि ॥ ॐ अग्ने रेतश्चन्द्रगुँ हिरण्यम् ॥ अद्भ्यस्सम्भूतममृतं प्रजासु ॥ तत्सम्भरन्नुत्तरतो निधाय ॥ अतिप्रयच्छं दुरितिं तरेयम् ॥ इति हिरण्यम् ॥ ॐ युवा सुवासाः परिवीत आगात् ॥ स उ श्रेयान्भवति जायमानः ॥ तं धीरासः कवय उन्नयन्ति ॥ स्वाधियो मनसा देवयन्तः । इति वस्त्रम् ॥ ॐ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ वस्नेव विक्रीणावहा इषमूर्जगुँशतक्रतो ॥ इति तण्डुलपूर्णपात्रंनिधाय ॥ ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशगुँसमा न आयुः प्रमोषीः ॥ अस्मिन्कलशे वरुणाय नमः ॥ ॐ भूर्भुवःसुवः वरुणमावाहयामि ॥ वरुणाय नमः ध्यायामि ध्यानं समर्पयामि ॥ आवाहनम् ॥ आसनम् ॥ पाद्यम् ॥ अर्घ्यम् ॥

आचमनम् ॥ स्नानम् ॥ पुनराचमनम् ॥ वस्त्रम् ॥ उपवीतं । आभरणं । गन्धान् ॥ अक्षतान् ॥ पुष्पम् ॥ धूपम् ॥ दीपम् । नैवेद्यम् ॥ ताम्बूलम् ॥ सुवर्णपुष्पम् ॥ नीराजनम् ॥ मन्त्रपुष्पम् ॥ प्रदक्षिणम् ॥ नमस्कारान् ॥ प्रार्थनम् ॥ वरुणाय नमः सर्वोपचारपूजां समर्पयामि ॥ अथ कलशौ स्पृष्ट्वा कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः ॥ मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥ कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥ अङ्गैश्च सहिताः सर्वे कलश तु समाश्रिताः ॥ अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा ॥ आयान्तु मम देहस्य दुरितक्षयकारकाः ॥ सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ॥ गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ नर्मदे सिन्धुकावेरि जलेऽस्मिन्त्सन्निधिं करु ॥ गङ्गाद्याः सर्वतीर्थाः सन्निहिताः सन्तु ॥ मातृदेवो भव ॥ पितृदेवो भव ॥ आचार्यदेवो भव ॥ अतिथिदेवो भव ॥ इत्याशिषो गृहीत्वा ॥ पूर्वस्थापितचतुर्ब्राह्मणहस्ते जलं ददाति 'ॐ आपः' इति ॥ 'शिवा आपः सन्तु' इति प्रतिवचनम् ॥ 'ॐ गन्धाः' इति गन्धान् ददाति ॥ 'सुगन्धाः' इति प्रतिवचनम् । 'ॐ अक्षताः' इत्यक्षतान् ददाति ॥ 'अक्षतं चारिष्टं चास्तु' इति प्रतिवचनम् ॥ 'ॐ सुमनसः' इति पुष्पाणि ददाति ॥ 'सौमनस्यमस्तु' इति प्रतिवचनम् ॥ 'ॐ दक्षिणाः' इति दक्षिणां ददाति ॥ 'स्वस्ति दक्षिणाः पान्तु, बहुदेय चास्तु, पुण्यं वर्धताम्' इति प्रतिवचनम् ॥ शान्तिरस्तु । य कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्तन्ते तमहमोकारमादिं कृत्वा भवद्भिरनुज्ञातः पुण्याहं वाचयिष्ये ॥ 'वाच्यताम्' इति प्रतिवचनम् । ततः कलशधारकः उत्तरकलशं गृहीत्वा दक्षिणं जानुं भूमौ निधाय सव्यमुद्धृत्य इडादेवहूरिति जपित्वा ओमित्युत्थाय पत्न्याऽन्वारब्धयजमानदक्षिणबाहुनाऽन्वारब्धः कलशधारको 'मनस्समाधीयताम्' इति प्राङ्मुखस्थितान् ब्राह्मणान् वदति ॥ 'समाहितमनसः स्मः' इति ते ब्रूयुः ॥ प्रसीदन्तु भवन्तः ॥ 'प्रसन्नाः स्मः' इति प्रतिवचनम् ॥ ॐ शान्तिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ शिवं कर्मास्तु ॥ कर्मसिद्धिरस्तु ॥ इष्टसम्पदस्तु ॥ पुत्रसम्पदस्तु ॥ सरस्वतीसम्पदस्तु ॥ अहरहरभिवृद्धिरस्तु ॥ इति कलशदारकः ॥ 'अस्तु' इति प्रतिवचनम् ॥ ॐ यत्पुण्यं नक्षत्रम् ॥

तद्वट्कुर्वीतोपव्युषम्॥ यदा वै सूर्य उदेति॥ अथ नक्षत्रं नैति॥ यावति तत्र सूर्यो गच्छेत्॥ यत्र जघन्यं पश्येत् ॥ तावति कुर्वीत यत्कारी स्यात्॥ पुण्याह एव कुरुते॥ तानि वा एतानि यमनक्षत्राणि। यान्येव देवनक्षत्राणि॥ तेषु कुर्वीत यत्कारी स्यात्। पुण्याह एव कुरुते॥ 'मह्यं सहकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमाणामुककर्मणः ॐ पुण्याहं भवन्तो ब्रुवन्तु' इति मन्द्रमध्यमतारकक्रमेण त्रिर्वदेत्॥ क्रमादुच्चोच्चैरित्यर्थः॥ 'ॐ पुण्याहम्' इति प्रतिवचनं त्रिः॥ अग्रेप्येवं॥ ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः॥ स्वस्ति नः पूषा विश्ववेदाः॥ स्वस्ति नस्ताक्ष्र्यो अरिष्टनेमिः॥ स्वस्ति नो बृहस्पतिर्दधातु॥ अष्टौ देवा वसवः सोम्यासः॥ चतस्रो देवीरजराः श्रविष्ठाः॥ ते यज्ञं पान्तु रजसः परस्तात्॥ संवत्सरीणममृतगुँ स्वस्ति॥ 'मह्यं सहकुटुम्बिने महाजनान्नमस्कुर्वाणाय आशीर्वचनमपेक्षमाणाय करिष्यमाणामुककर्मणे ॐ स्वस्ति भवन्तो ब्रुवन्तु' एवं त्रिः पूर्ववत्॥ 'ॐ आयुष्मते स्वस्ति' इति प्रतिवचनम्॥ ॐ ऋध्या स्म हव्यैर्नमसोपसद्य॥ मित्रं धेयं मित्रधेयन्नो अस्तु॥ अनूराधान् हविषां वर्धयन्तः॥ शतं जीवेम शरदस्सवीराः॥ ॐ त्रीणि त्रीणि वै देवानामृद्धानि॥ त्रीणि छन्दगुँसि त्रीणि सवनानि। त्रय इमे लोकाः॥ ऋध्यामेव तद्वीर्य एषु लोकेषु प्रतितिष्ठति॥ 'मह्यं सहकुटुम्बिने महाजनान्नमस्कुर्वाणायाशीर्वचनमपेक्षमाणाय करिष्यमाणामककर्मणः। ॐ ऋद्धिं भवन्तो ब्रुवन्तु' एवं त्रिः पूर्ववत्॥ 'ॐ ऋध्यताम्' इति प्रतिवचनं त्रिः॥ शुक्राङ्गरकबुधबृहस्पतिशनैश्चरराहुकेतुआदित्यपुरोगाः सोमसहिताः सर्वे ग्रहाः प्रीयंताम्॥ या पक्वदेवता सा प्रीयताम्॥ अनाम्नातेषु प्रजापतिः प्रीयताम्॥ शकुननिमित्तस्वप्नाः शिवा भवन्तु॥ आयुषोऽभिवृद्धिरस्त्वायुषोभिवृद्धिरस्तु। शिवगुँ

शिवमस्तु ॥ सर्वग्रहसगुँस्थित्यमस्तु ॥ सत्या एता आशिषः सन्तु ॥ 'बहिर्देशेऽरिष्टनिरसनमस्तु' इति किञ्चित् कलशोदकमीशान्ये निनीय। यत्पापं तत्प्रतिहतमस्तु ॥ यच्छ्रेयस्तदस्तु ॥ उत्तरे कर्मण्यविघ्नमस्तु ॥ उत्तरोत्तरमहरहरभिवृद्धिरस्तु ॥ उत्तरोत्तराः कियाः शुभाः सम्पद्यन्ताम् ॥ तिथिकरणमुहूर्तनक्षत्रदिग्देवताः प्रीयन्ताम् ॥ अत्र शान्तिरस्त्वित्यादिषु सर्वत्र कलशोदकं पात्रान्तरे निनयेदिति विश्वपतिप्रयोगे लिखितं, तन्निर्मूलम् ॥ सूत्रे च विष्णुभट्टीये कारिकादावनुक्तत्वात् ॥ अथ कलशजलमन्योन्यं सगुँस्राव्य तज्जलं पात्रान्तरे निनीय तत्र हिरण्यं निधाय दर्भैर्दम्पती प्रोक्षेयुः ॥ तत्काले पत्नी वामभागे उपविशति ॥ अथ प्रोक्षणमन्त्राः ॥ गृह्यसूत्रे 'आपोहिष्ठेति तिसृभिर्यच्चिद्धित इति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानस्सुवर्जन इतिनाऽनुवाकेन देवस्यत्वेति तिसृभिश्चरणं पवित्रमिति द्वाभ्यां तच्छंयोरावृणीमह इति मार्जयित्वा शश्वम इति गृहं प्रोक्ष्य शेषमप्सु निनयति'' इति ॥ ॐ देवस्य त्वा सवितुः प्रसवे अश्विनोर्बाहुभ्यां पूष्णोहस्ताभ्याम् ॥ अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि ॥ ॐ देवस्य त्वा ..... हस्ताभ्याम्। सरस्वत्यै भैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामि ॥ ॐ देवस्य त्वा ..... हस्ताभ्याम् ॥ इन्द्रस्येन्द्रियेण श्रियै यशसे बलायाभिषिञ्चामि ॥ च वाजिनं। सोमगुँ राजानं वरुणमग्निमन्वारभामहे ॥ आदित्यान्विष्णुगुँ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यागुँसरस्वत्यै वाचो यन्तुर्यन्त्रेणाग्नेस्त्वासाम्राज्येनाभिषिञ्चामीद्रस्य बृहस्पतेस्त्वासाम्राज्येनाभिषिञ्चामि ॥ ॐ चरणं पवित्रं विततं पुराणं। येन पूतस्तरति दुष्कृतानि ॥ तेन पवित्रेण शुद्धेन पूताः। अति पाप्मानमरातिं तरेम ॥ ॐ लोकस्य द्वारमर्चिमत्पवित्रम् ॥ ज्योतिष्मद्भ्राजमानं महस्वत् ॥ अमृतस्य धारा बहुधा दोहमानम् ॥ चरणं नो लोके सुधितां दधातु ॥ ॐ तच्छंयोरावृणीमहे ॥ गातुं यज्ञाय ॥ गातुं यज्ञपतये ॥ दैवीः स्वस्तिरस्तु नः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वं जिगातु भेषजम् ॥

शन्नो अस्तु द्विपदे ॥ शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥ इत्येतैर्मार्जयित्वा शश्चमेमयश्चम इत्यनुवाकेन गृहं प्रोक्ष्य शेषोदकमप्सु निनयेत् ॥ ॐ उत्तिष्ठ ब्रह्मणस्पते ॥ देव यन्तस्त्वेमहे ॥ उपप्रयन्तु मरुतस्सुदानवः ॥ इन्द्र प्रासूर्भवा सचा ॥ यान्तु देवगणाः सर्वे पूजामादाय मत्कृताम् ॥ इष्टकाम्यार्थसिद्ध्यर्थं पुनरागमनाय च ॥ आवाहितदेवता यथास्थानमुद्वासयामि ॥ अनेन पुण्याहकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ इति सर्वसाधारणपुण्याहप्रयोगः ॥

अथ ग्रहशान्त्यादिशान्तिकपौष्टिककर्मस्वाचार्यादीन्वरयेत् ॥ 'आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः ॥ तथा त्वं मम योगेऽस्मिन्नाचार्यो भव सुव्रत ॥ अस्मिन्कर्मण्याचार्यं त्वां वृणे' इति स्वदक्षिणपाणिना तस्य दक्षिणपाणिं स्पृष्ट्वा वरयेत् ॥ 'यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः ॥ तथा त्वं मम योगेऽस्मिन्ब्रह्मा भव द्विजोत्तम ॥ अस्मिन् कर्मणि ब्रह्माणं त्वां वृणे' ॥ 'वृतोस्मि' इति प्रतिवचनम् ॥ [1]एवमेवर्त्विजो वरयेत् ॥ अथ प्रधानसङ्कल्पः ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'श्रीपरमेश्वरप्रीत्यर्थममुककर्म करिष्ये' इति सङ्कल्प्य, ततत्कर्म कुर्यात् इति प्रधानसङ्कल्पः ॥ अथ कुलदेवतास्थापनम् ॥ विवाहोपनयनचौलादिशुभकर्मणामादौ कर्ता सपत्नीकः तण्डुलपूर्णपात्रं सफलं स्वगृहदेवतापुरतो निधाय, तत्र फल-ताम्बूल-दीपादिकं निधाय, देशकालौ सङ्कीर्त्य, संकल्पितकर्मणो निर्विघ्नेन परिसमाप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं 'अमुककर्माङ्गत्वेन कुलदेवतास्थापनं करिष्ये' इति सङ्कल्प्य, 'ॐ भूर्भुवःसुवरों इष्टदेवतामावाहयामि' इत्यावाह्य, षोडशोपचारान् कृत्वा, यज्ञेन यज्ञमिति पुष्पाञ्जलिं दत्वा नमस्कुर्यात् ॥ इति कुलदेवतास्थापनम् ॥

अथोदकशान्तिप्रतिसरबन्धसमानतन्त्रप्रयोगः ॥ विवाहचौलोपनयनसमावर्तनाग्र्याधेयादिकर्मस्वन्येषु मङ्गलकार्येषु च यस्मिन्दिने नान्दीश्राद्धं कुर्यात्तस्यामेव रात्रौ प्रदोषान्ते उदकशान्तिमारभेत ॥ सद्यःकरणपक्षे नान्दीश्राद्धं कृत्वा तदानीमेवोदकशान्तिप्रतिसरबन्धौ कृत्वा ततः पवनादिप्रधानपुण्याहवाचनं कृत्वा विवाहादिकं कुर्यात् ॥ अथ शुचौ समे देशे गोमयेन गोचर्ममात्रं भूमिमुपलिप्य विंशतिरेखात्मकं अष्टदिक्ष्वश्वत्थदलाकारं चतुरस्रं स्थण्डिलं कृत्वा तन्मध्यत उद्धत्यापःस्पृष्ट्वाऽद्भिरवोक्ष्य युग्मान् ब्राह्मणान् सुप्रक्षालितपाणिपादानपआचम्य प्रतिदिशमासनेषूपवेश्याथ कर्ता सपत्नीकः संस्कार्येण सह प्रागग्रेषु दर्भेषूपविश्य दर्भान्धारयमाणः पवित्रपाणिर्द्विराचमनप्राणायामौ

---

[1] टिप्पणम्: - ''शक्रादीनां यथा स्वर्ग्रे दिगीशा मूर्तिपाः स्वयम् ॥ तथा त्वं मम यागेऽस्मिन् मूर्तिपो भव सुव्रत'' इति कलशपूजार्थं ऋत्विजं वरयेत् ॥ ''भवन्तः सर्वधर्मज्ञाः सर्वधर्मभृतां वराः ॥ वितते मम यागेऽस्मिन् ऋत्विजो भवत द्विजाः'' इति उपहोमादिषु ऋत्विजः वरयेत् ॥ ''त्व नो गुरुः पिता माता त्वं प्रभुस्त्वं परायणः ॥ आपद्विमोक्षणार्थाय सदस्य त्वामहं वृणे'' इति सदस्यं वरयेत् ॥ ''भगवन् सर्वधर्मज्ञ सर्वधर्मभृतां वर ॥ वितते मम यागेऽस्मिन् उपद्रष्टा भव द्विज'' इत्युपद्रष्टारं वरयेत् ॥ ''प्रारीप्सितस्य यज्ञस्य जपस्य हवनस्य च ॥ निर्विघ्नेन समाप्त्यर्थ त्वामहं गणपं वृणे'' इति गणपं वरयेत् ॥ एषां वरणे = यजमानस्य ऋत्विजां च शाखा-नाम-गोत्रादिकमुच्चारयेत् ॥ वरणानन्तरं अयं प्रार्थनाश्लोकश्च पठनीयः ''अस्य यागस्य निष्पत्तौ भवन्तोऽभ्यर्थिता मया ॥ सुप्रसन्नैः प्रकर्तव्यं कर्मेदं विधिपूर्वकम्'' इति ॥

कृत्वा देशकालौ सङ्कीर्त्य, 'मम सर्वामङ्गलनिवारणार्थं समस्तमाङ्गल्यप्राप्त्यर्थं चाद्य रात्रौ श्वो वा करिष्यमाणामुककर्माङ्गतया विहितावुदकशान्तिप्रतिसरबन्धौ समानतन्त्रेण करिष्ये ॥ तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजां करिष्ये' इति सङ्कल्प्य, तत्कृत्वा, अस्मिन्नुदकशान्तिप्रतिसरबन्धकर्मणि पूर्वस्यां दिशि ऋत्विजं त्वामहं वृणे ॥ उदकशान्ति-प्रतिसरबन्धसूक्तपठनार्थमिति वा ॥ एवमेव दक्षिणस्यां दिशि, पश्चिमस्यां दिशि, उत्तरस्यां दिशि ऋत्विजं त्वामहं वृणे ॥ इति चतुरोऽष्टौ वा ब्राह्मणान्वृत्वा ॥ वृतोऽस्मीति प्रतिवचनम् ॥ ततो वृतेभ्यः ऋत्विग्भ्यो नमः गन्धाद्युपचारान् समर्पयामीत्यभ्यर्च्यारत्निमात्रं समचतुरस्रं तण्डुलैः स्थण्डिलं कृत्वा प्रोक्ष्य समुँल्लिख्याद्भिरभ्युक्ष्य दूर्वाक्षतफलैरवकीर्य गन्धोदकेनाभ्युक्ष्य पुष्पैरवकीर्य तेषु ब्रह्मपात्रं सुधूपितं सूत्रवेष्टितं तदुत्तरतः प्रागग्रेषु दर्भेषु सादयित्वा दर्भैः प्रच्छाद्य कुम्भमुत्तानं कृत्वा तूर्ष्णीं संस्कृताभिरद्भिस्त्रिः प्रोक्ष्यब्रह्मजज्ञानमिति स्थण्डिले निधाय तिरःपवित्रमप आनयन्जपति ॥ ॐ तत्सवितुर्वरेण्यमिति । तत्र यवाक्षततण्डुलान् आवपति ॥ 'भूर्भुवःसुवः' इति ॥ ॐ देवस्यत्वेत्यादिभिश्चतुर्दिक्षु परिस्तीर्य दूर्वादर्भैः प्रच्छाद्याभिमृशति ॥ ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंयोरभिस्रवन्तु नः ॥ इति तस्योत्तरतस्तण्डुलपूर्णकांस्यपात्रे नवगुणयुतं नवसूत्रं गन्धलिप्तं भस्मयुतं निधाय ततः सर्वे ब्राह्मणाः कुभमन्वारभ्य जपन्ति ॥ ॐ भूर्भुवःसुवः ॥ ॐ तत्सवितुर्वरेण्यम् ॥ भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ इति पच्छोर्द्धर्चशोनवानमुक्त्वा वेदादीन् जपति ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारं रत्नधातमम् । ॐ इषे त्वोर्जे त्वा० ॥ यज्ञस्य घोषदसि० ॥ शुन्धध्वं दैव्याय कर्मणे० ॥ इति त्रीननुवाकान् ॥ ॐ अग्न आयाहिवीतये गृणानो हव्यदातये । निहोता सत्सि बर्हिषि ॥ ॐ शन्नो देवी ..... स्रवन्तु नः ॥ इति जपित्वा ॥ 'कृणुष्वपाजः प्रसितिन्नपृथ्वीं' इत्यारभ्य 'तिग्मायुधा रक्षसे हन्तवाउ' इत्यन्तम् ॥ 'इन्द्रं वो विश्वतस्परि' इत्येतमनुवाकम् ॥ यत इन्द्र भयामहे० ॥ स्वस्तिदसाविशस्पतिः० ॥ महागुँ इन्द्रो वज्रबाहुः० ॥ सजोषा इन्द्रसगणः० । इति चतुरो मन्त्रान् ॥ ये देवाः पुरस्सदोग्निनेत्रा रक्षोहणस्ते नः पान्तु ते नोवन्तु तेभ्यो नमस्तेभ्यः स्वाहा ॥ ये देवा दक्षिणसदो यमनेत्रा रक्षोहणः ..... स्वाहा ॥ ये देवाः पश्चात्सदस्सवितृनेत्रा रक्षोहणः ..... स्वाहा ॥

ये देवा उत्तरसदो वरुणनेत्रा रक्षोहणः ..... स्वाहा ॥ ये देवा उपरिषदो बृहस्पतिनेत्रा रक्षोहणः ..... स्वाहा ॥५॥ अग्नये रक्षोघ्ने। इतिपंच अग्निरायुष्मान्त्सवनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ बृह्मायुष्मत्तद्ब्रह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥ देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ॥५॥ या वामिन्द्रावरुणा यतव्या तनूस्तयेममँहसो मुञ्चतम्। या वामिन्द्रावरुणा सहस्या तनूस्तयेममँहसो मुञ्चतम् ॥ या वामिन्द्रावरुणा रक्षस्या तनूस्तयेममँहसो मुञ्चतम् ॥ या वामिन्द्रावरुणा तेजस्यातनूस्तयेममँहसो मुञ्चतम् ॥४॥ योवान्द्रिावरुणावग्नौ स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणा द्विपात्सु पशुषु स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणा चतुष्पात्सु पशुषु स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणा गोष्ठे स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणा गृहेषु स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणाप्सु स्रामस्तं वामेतेनावयजे। योवामिन्द्रावरुणौषधीषु स्रामस्तं वामेतेनावयजे ॥ योवामिन्द्रावरुणा वनस्पतिषु स्रामस्तं वामेतेनाव यजे ॥८ ॥ अग्ने यशस्विन्निति चतस्रः ॥ 'राष्ट्रभृतः ..... कृताषाडृतधामा' इत्येतमनुवाकम् ॥ नमो अस्तु सर्पेभ्यः० ॥ येदोरोचने दिवो० ॥ या इषवो यातुधानाना० ॥३॥ अयं पुरो हरिकेशःसूर्यरश्मिस्तस्य रथगृत्सश्च रथौजाश्च सेनानिग्रामण्यौ पुञ्जिकस्थला च कृतस्थला चाप्सरसौ यातुधाना हेती रक्षांसिप्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते य द्विष्मो यश्चनो द्वेष्टि तं वो जम्भे

दधामि ॥ अयं दक्षिणा विश्वकर्मा तस्य रथस्वनश्च रथेचित्रश्च सेनानिग्रामण्यौ मेनका च सहजन्या चाप्सरसौ दक्ष्णवः पशवो हेति पौरुषेयोवधःप्रहेतिस्तेभ्यो ..... दधामि ॥ अयं पश्चाद्विश्वव्यचास्तस्य रथप्रोतश्चासमरथश्च सेनानिग्रामण्यौ प्रम्लोचन्ती चानुम्लोचन्ती चाप्सरसौ सर्पा हेतिव्याघ्राः प्रहेतिस्तेभ्यो ..... दधामि ॥ अयमुत्तरात्संयद्वसुस्तस्य सेनजिच्च सुषेणश्च सेनानिग्रामण्यौ विश्वाची च घृताची चाप्सरसावापो हेतिर्वातः प्रहेतिस्तेभ्यो ..... दधामि ॥ अयमुपर्यर्वाग्वसुस्तस्य तार्क्ष्यश्चारिष्टनेमिश्च सेनानिग्रामण्यावुर्वशी च पूर्वचित्तिश्चाप्सरसौ विद्युद्धेतिरवस्फूर्जन्प्रहेतिस्तेभ्यो नमस्ते नो मृडयन्तु ते यं द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ ५ ॥

आशुःशिशानः० ॥ शञ्च मे मयश्च मे० ॥ ममाग्ने वर्चः० ॥ इति त्रीननुवाकान् ॥ अग्नेर्मन्वे० ॥ यस्येदं प्राणं० ॥ इन्द्रस्य मन्ये० यः सङ्ग्रामं ..... स नो मुञ्चत्वꣳहसः ॥ मन्वे वां मित्रावरुणा ..... ता नो मुञ्चतमागसः ॥ योवाꣳरथः० ॥ वायोः सवितुः ॥ उपश्रेष्ठानः० ॥ रथीतमौ रथीना० ॥ यदयातं वहतुं ..... तौ नो मुञ्चतमागसः ॥ मरुताम्मन्वे० ॥ तिग्ममायुधं० ॥ देवानांमन्वे० । यदिदं माभिशोचति ..... ते नो मुञ्चन्त्वेनसः ॥ अनुनोद्यानुमतिः० ॥ अन्विदनुमते त्वं मन्यासै० ॥ वैश्वानरो न ऊत्या० ॥ पृष्टो दिवि० ॥ इति चतुरः ॥ ये अप्रथेतां० ॥ उर्वी रोदसी ..... ते नो मुञ्चतमꣳहसः ॥ यत्ते वयं ..... यथाह तद्वसवः ॥ समीचीनामासि प्राचीदिक्तस्यास्तेग्निरधिपतिरसितो रक्षिता यश्चाधिपतिर्यश्च गोप्ता ताभ्यां नमस्तौ नो मृडयतां ते यं द्विष्मो यश्च नो द्वेष्टि तं वां जम्भे दधामि ॥ ओजस्विनीनामासि दक्षिणादिक्तस्यास्त इन्द्रोधिपतिः पृदाकूरक्षिता यश्चा ..... दधामि ॥ प्राचीनामासि प्रतीचीदिक्तस्यास्ते सोमोधिपतिः स्वजोरक्षिता ..... दधामि ॥ अवस्थावानामास्युदीचीदिक्तस्यास्ते वरुणोधिपतिस्तिरश्चराजी रक्षिता यश्चा ..... दधामि ॥ अधिपत्नीनामासि

बृहतीदिक्तस्यास्ते बृहस्पतिरधिपतिः श्वित्रोरक्षिता यश्चा ..... दधामि ॥ वशिनीनामासीयन्दिक्तस्यास्ते यमोधिपतिः कल्माषग्रीवोरक्षिता यश्चा ..... दधामि ॥ इति षट् ॥ हेतयोनामस्थ तेषां वः पुरोगृहा अग्निर्व इषवः सलिलोवातनामं तेभ्यो वो नमस्ते नो मृडयत ते य द्विष्मो यश्च नो द्वेष्टि तं वो जम्भे दधामि ॥ निलिम्पानामस्थ तेषां वो दक्षिणागृहाः पितरो व इषवः सगरोवातनामं तेभ्यो ..... दधामि ॥ वज्रिणोनामस्थ तेषां वः पश्चाद्गृहाः स्वप्नो व इषवो गह्वरो वातनामं तेभ्यो ..... दधामि ॥ अवस्थावानोनामस्थ तेषां व उत्तराद्गृहा आपो व इषवः समुद्रोवातनामं तेभ्यो ..... दधामि ॥ अधिपतयोनामस्थ तेषां व उपरिगृहावर्षं व इषवोऽवस्वान्वातनामं तेभ्यो ..... दधामि ॥ क्रव्यानामस्थ पार्थिवास्तेषां व इह गृहा अन्नं व इषवोऽनिमिषोवातनामं तेभ्यो ..... दधामि ॥ इति षट् ॥ 'शतायुधाय शतवीर्याय' इति पञ्च ॥ 'भूतं भव्यं भविष्यत्' इत्येतं अनुवाकम् ॥ 'इन्द्रो दधीचः' इत्येतमनुवाकम् ॥ 'चक्षुषो हेते' इति प्रतिपद्य 'भ्रातृव्यं पादयामसि' इत्यतं नवर्चसूक्तम् ॥ 'प्राणो रक्षति सिंहेव्याघ्र' इत्येतावनुवाकौ ॥ अस्मिन्ननुवाके 'तमहमस्मै' इत्यत्र संस्कार्यस्य नक्षत्रराशिनामानि चतुर्थ्यन्तेन गृह्णाति ॥ यथा 'तमहमस्मै अश्विनीनक्षत्रे मेषराशौ जाताय शिवशर्मणे तेजसे ब्रह्मवर्चसाय गृह्णामि' इत्यादि ॥ अहमस्मि प्रथमजा ऋतस्य ..... तपन्ति ॥ देवीं वाचमजनयन्त देवाः, यद्वाग्वदन्तीति द्वौ प्रतीकौ ॥ अनन्तामन्तादित्यादि निदधाति देवयुमित्यन्तम् ॥ नतानशन्ति, नतावरिणुककाट इति द्वौ प्रतीकौ ॥ गावो भगो गाव इत्यन्तमनुवाकम् ॥ तासूर्या० ॥ अग्निर्नः पातु० ॥ ऋद्ध्यास्म हव्यैः० ॥ अस्यानुवाकस्यान्ते 'निवेशनी सङ्गमनी' 'यत्ते देवा अदधुः' इति द्वौ ॥ 'नवोनवो भवति' 'यमादित्या' इति द्वौ ॥ ये विरूपे समनसा० ॥ उदुत्यं जातवेदसं- ॥ चित्र देवानां० ॥ अदितिर्न उरुष्यत्वदितिः ..... महीमूषुमातरं सुव्रतानां ॥ इदं विष्णुः० ॥ प्रतद्विष्णुः० ॥ अग्निर्मूर्द्धा० ॥ भुवो यज्ञस्य० पुष्टिदांवीरवत्तममित्यन्तं ॥ अनुनोद्यानुमतिः० ॥ अन्विदनुमते त्वं मन्यासै० ॥ हव्यवाहमभिमातिषाहं० ॥ स्विष्टमग्ने० ॥ इति द्वादश ॥ अग्नये स्वाहा कृत्तिकाभ्यः

स्वाहेत्यादिप्रश्नसमाप्तिपर्यन्तमुत्तमानुपहोमान् ।। दधिक्राव्णः ।। आपोहिष्ठेति तिस्रः ।। यच्चिद्धितेविश इति तिस्रः ।। हिरण्यवर्णा इति चतस्रः ।। पवमानःसुवर्जन इत्यनुवाकम् ।। भूः भुवः सुवः ।। तच्छंयोरावृणीमहे० ।। अथ घृतसूक्तम् ।। यो ब्रह्मा ब्रह्मण उज्जभार प्राणेश्वरः कृत्तिवासाः पिनाकी ।। ईशानो देवः स न आयुर्दधातु तस्मै जुहोमि हविषा घृतेन ।।१ ।। विभ्राजमानः सरिरस्य मध्याद्रोचमानो घर्मरुचिर्य आगात् ।। स मृत्युपाशादपनुद्य घोरादिहायुषे णो घृतमत्तु देवः ।।२ ।। ब्रह्मज्योतिर्ब्रह्मपत्नीषु गर्भं यमोऽदधात्पुरुरूपं जयन्तम् ।। सुवर्णरम्भं ग्रहमर्कमर्च्यं तमायुषे वर्धयामो घृतेन ।।३ ।। श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं जयामिन्द्रसेनेत्युदाहुः ।। तां विद्यां ब्रह्मयोनिꣳसरूपामिहायुषे तर्पयामो घृतेन ।।४ ।। दाक्षायण्यः सर्वयोन्यः सयोन्यः सहस्रशो विश्वरूपा विरूपाः ।। ससूनवः सपतयः सयूथ्या आयुषे णो घृतमिदं जुषन्ताम् ।।५ ।। दिव्या गणा बहुरूपाः पुराणा आयुच्छिदो नः प्रमथ्नं तु वीरान् ।। तेभ्यो जुहोमि बहुधा घृतेन मा नः प्रजागुँरीरिषो मोत वीरान् ।।६ ।। एकः पुरस्ताद्य इदं बभूव यतो बभूवुर्भुवनस्य गोपाः ।। यमप्येति भुवनगुँसाम्पराये स नो हविर्घृतमिहायुषेऽत्तु देवः ।।७ ।। वसून्रुद्रानादित्यान्मरुतोऽथ साध्यान्नृभून्यक्षान्गन्धर्वाꣳश्च पितॄꣳश्च विश्वान् ।। भृगून्त्सर्पागुँश्चाङ्गिरसोऽथ सर्वान् घृतगुँहुत्वा स्वायुष्यामहयाम शश्वत् ।।८ ।। इत्युदकशान्तिः ।।६ ।। अथ प्रतिसरबन्धः ।। तमेव कुम्भमन्वारभ्य व्याहृतिगायत्री वेदादींश्च पूर्ववज्जपित्वा ।। कृणुष्वपाज इत्यान्तमनुवाकम् ।। अग्नेयशस्विन्निति चतस्रः ।। 'हिरण्यवर्णाः शुचयः पावकाः०' 'पवमानः सुवर्जनः०' इत्येतावनुवाकौ ।। उदुत्तमं वरुण, अस्तभ्नाद्यां, यत्किञ्चेदं, कितवासः, अवतेहेडः, तत्वायामि, इति षड्वरुणसूक्तम् ।। परिणोरुद्रस्य, स्तुहिश्रुतं, मीढुष्टम, अर्हन्बिभर्षि, त्वमग्नेरुद्र, आवोराजानं, इति षड्रुद्रसूक्तम् ।। ब्रह्मजज्ञानं इति ब्रह्मसूक्तम् ।। विष्णोर्नुकं, तदस्यप्रियं, प्रतद्विष्णुः, परोमात्रया, विचक्रमे, त्रिर्देव, इति षड्विष्णुसूक्तम्म् ।। जातवेदस इति पञ्च दुर्गासूक्तम् ।। हिरण्यवर्णामिति श्रीसूक्तं पञ्चदशर्च ..... विन्देयं पुरुषानहम् ।।१५।। एतानि प्रतिसरसूक्तानि । 'ॐ नमो ब्रह्मण' इति त्रिरुक्त्वा ।। 'ॐ' इत्युदकुम्भमुत्थाप्य व्याहृतिभिः प्रोक्षत्यथ दक्षिणां ददाति ।। पुरस्तादुपविष्टाय हिरण्यं दक्षिणाः प्रतिपादयामि । दक्षिणत उपविष्टाय रजतं दक्षिणाः प्रतिपादयामि ।। पश्चादुपविष्टाय कांस्यं दक्षिणाः प्रतिपादयामि ।। उत्तरत उपविष्टाय वस्त्रं दक्षिणाः प्रतिपादयामि । सर्वत्र तत्तन्मूल्यं वा ।। ततः प्रतिसरसूत्रमादाय व्याहृतिभिः प्रोक्ष्य वासुकिं ध्यात्वा त्र्यम्बकंयजामह इति भस्मनोर्ध्वं त्रिः सम्मृज्य ।। 'ॐ बृहत्साम क्षत्रभृद्वृद्धवृष्णियं त्रिष्टुभौजः शुभितमुग्रवीरम् ।। इन्द्रस्तोमेन पञ्चदशेन मध्यमिदं वातेन सगरेण रक्ष' इति संस्कार्यादिदक्षिणहस्ते बध्वा स्त्रीणां वामहस्ते ।। अथ भस्म गृहीत्वा 'यो ब्रह्मा ब्रह्मण' इत्यष्टर्चेन रक्षां कृत्वा अग्निरायुष्मानिति पञ्चभिः पर्यायैराशीर्भिरभिनन्द्य ।। अनेनोदकशान्तिप्रतिसरबन्धकर्मणा श्री परमेश्वरः प्रीयताम् ।। आवाहितदेवतायै पुनः षोडशोपचारान्कृत्वा देवतामुद्वासयेत् ।।

अत्रोदकशान्तौ प्रणवव्याहृतिगायत्रीवेदादिमन्त्रपभृतीन् यथाक्रमं पठित्वा पुनः प्रतिसराङ्गत्वेन पृथगेव मन्त्राः पठनीयाः ।। [1]अन्यथा तयोः न्यूनातिरिक्तदोषप्रसङ्गः ।। समानतन्त्रस्य तु कलशसङ्कल्पकऋत्विग्वरणपूजादक्षिणादिषु चरितार्थत्वात् ।। न तु प्रधानमन्त्रेषु ।। अथवैतावुदकशान्तिप्रतिसरबन्धौ पृथक्कर्तव्यौ ।।

[1] टिप्पणम्: - ईश्वरप्रमादलब्धदिव्यज्ञानवैभवैः श्रीवेङ्कटेशभट्टैरस्मिन् विषये एवं स्पष्टमुद्घोषितेऽपि (जाग्रत्यपि) कैश्चित् गृह्यकर्मसमुच्चयकृद्भिः तदनुयायिभिश्च "उदकशान्तौ पठिता मन्त्राः प्रतिसरबन्धाङ्गत्वेन न पुनः पठ्यन्ते" समानतन्त्रत्वं तत्र हेतुं वदद्भिः ।। होत्रादिव्रतानां उत्सर्जनोपाकर्मणोः समानतन्त्रप्रयोगे तु याज्ञिक्याद्येकोनविंशत्याज्याहुतीः द्विवारं यथाशास्त्रमेव कुर्वतस्तान् श्रीजगदीशो निष्पापान् निर्दुराग्रहांश्च विधाय पालयतु इति तमेव प्रार्थयामः ।।०।।

अथोदकशान्तिकर्तव्यकालः ॥ स्वजन्मत्रये वा जन्मसप्तमाष्टमराशिषु वा ग्रहणे वा ग्रहोत्पाते वा मनुष्याणां पशूनां वा भयकाले पुण्यनक्षत्रे वोदकशान्तिं कुर्यात् ॥ एवमेव ज्वरगृहीतानां ग्रहगृहीतानां भूतोपसृष्टानां मित्रसम्बन्धिज्ञातिबान्धवानां राज्ञां राजपुरोहितानां वालवृद्धगर्भिणीकृशानां दीर्घरोगिणां हस्त्यश्वोष्ट्रगोमहिषीणां भृत्यानां गृहाणां च प्रोक्षति महत्स्वस्त्ययनं भवत्यपपुनः मृत्युं जयतीत्याह भगवान् बोधायनः ॥ इति प्रयोगमालायामुदकशान्तिप्रतिसरबन्ध प्रयोगः ॥ छ ॥

अथ सर्वकर्मसाधारणाग्निमुखप्रयोगः ॥ तत्रादौ होममण्डलप्रकारः ॥ विश्वमित्रकारिकायाम् ॥ साम्यं शुभ्रं कोणयुक्त प्रमाणं रेखाग्र्याढ्यं दिक्षुपत्रं विशुद्धम् ॥ कुर्यादेतन्मण्डलं सप्तचिह्नं चत्वारिंशत्साष्टसंख्याङ्गुलाढ्यम् ॥ गोचर्मान्तः षडङ्घ्रिं हिमकरसदृशं मण्डलं चाष्टकोणं रेखाभिस्तत्रयुक्तं तिसृभिरतिशुभं श्वेतमृद्भिर्नवक्रम् ॥ दिक्ष्वश्वत्थाकृतिं वै परिलिखतु बुधः स्वर्णयुक्तं यथावच्चान्योन्यं चाष्टकोणं सममिति विलिखेद्धोमकार्येष्वभीष्टम् ॥ पूर्वभागे तथा पूर्वे दक्षिणे च तदुत्तरे ॥ पश्चिमे पूर्वभागे च उत्तरे च तदुत्तरे ॥ इति मण्डललक्षणम् ॥६ ॥ अथ दर्भाः ॥ अथ सर्वदर्वीहोमानामष्टोत्तरशतं दर्भाः ॥ हस्तपवित्रे द्वे, आत्मासने द्वे, परिस्तरणार्थं प्राक्षोडश, दक्षिणतः सप्तदश, पश्चिमेऽष्टादश, उत्तरे सप्तदश, पात्राणां पञ्च, (पात्राच्छादनार्थमित्यर्थः) ब्रह्मासने सप्तदश, प्रणीतासने द्वे, उपरिष्टात् द्वे, आज्यपवित्रे द्वे, अभिद्योतने द्वे, दर्भाग्रे द्वे, पर्यग्निकरणे द्वे, [1]स्रुक्सम्मार्जने द्वे, इत्यष्टोत्तरशतम् ॥६ ॥ अथापस्पर्शनस्थानानि ॥ सर्वत्र छेदनभेदनखनननिरसनविस्रंसनदाहनिर्ऋतियमपितृराक्षसरौद्रात्माभिमर्शनेष्वप-उपस्पृशेत् ॥६ ॥ अथ परिसमूहनम् ॥ नृसिंहकारिकायाम् ॥ सजलेन करेण त्रिरैशानीं दिशमादितः ॥ प्रदक्षिणं तदाशान्तं यथाग्नौ न जलं पतेत् ॥ परितो मार्जयेत्तद्वदेतत्परिसमूहनम् ॥ पुनः पुनर्गृहीत्वाऽथ त्रिर्निषिञ्चेत्प्रदक्षिणम्। अन्यत्राऽपि 'पाणिना सोदकेनाग्नेः समन्तात्परिमार्जनम् ॥ तत्समूहनमित्युक्तं जयन्तवचनं यथा' इति ॥६ ॥ तिरश्चीनेन हस्तेन कार्यं पर्युक्षणं भवेत् ॥ अथ परिषेकादीनामङ्गुलिक्रम उक्तः सिङ्गाभट्टीये 'अष्टमे नवमे चैव दशमैकादशे तथा ॥ सेचनं परिधिश्चैव स्तरणं पूजनं क्रमात्' इति ॥ अत्र स्थण्डिलाद्बहिरष्टमेङ्गले अदितेनुमन्यस्वेत्यादिभिः परिषेचनं, तन्नवमे परिधिः, तद्दशमे परिस्तरणं, तदेकादशे पूजनं इति क्रमो ज्ञेयः ॥ छ ॥ अथ पात्राणि ॥ कारिकायाम् 'आज्यस्थाली स्रुवं चैव प्रणीतां प्रोक्षणीं तथा ॥ शूर्पं शिलापुत्रकं चाप्यथेध्मा बर्हिषी तथा ॥ स्फ्यं मेक्षणं चेति तेषां परिमाणानि मे श्रृणु ॥ आज्यस्थालीं प्रोक्षणीं च प्रसृतिद्वयसम्मिते ॥ प्रणीता द्विगुणा त्वष्टगुणा स्थाली चरोरपि ॥ दर्व्या दैर्ध्यप्रमाणं स्यादङ्गुलान्येकविंशतिः । पञ्चैव तु बिलं तस्या दण्डः स्यात्तु चतुर्दश ॥ अरत्निमात्री वा कार्या बाहुमात्रीत्यथापरे ॥ वैकङ्कत्यन्नहोमार्था पालाशी स्रुक्च तादृशी ॥ चतुर्गृहीतहोमार्था स्रुवस्तावत्प्रमाणकः ॥ पालाशः खादिरो वा स्यात्स च ताम्रायसोपि वा ॥ कृष्णायसस्त्वाभिचारे प्रादेशं मेक्षणं स्मृतम् ॥ पित्र्ये त्वौदुम्बरी दर्वी प्रमाणेन तथाविधा ॥ सर्वत्रोद्धननार्थाय खादिरः स्फ्य इहेष्यते ॥ पालाशं मध्यमं पर्णं स्रुक्स्रुवाणामसम्भवे ॥ प्रादेशमात्राः समिध इध्मस्याष्टादश स्मृताः ॥ त्रयः परिधयोऽरत्निसम्मिताः स्युः समामिथः ॥ मध्यमः परिधिः स्थूलो मितश्चोपकनिष्ठया ॥ परिधिर्दक्षिणार्द्धः स्यात्कनिष्ठामध्यमान्वितः ॥ कनिष्ठाग्रमितोऽणिष्ठः परिधिस्तूत्तरार्द्धकः ॥ समे द्वे स्थौल्यदैर्घ्याभ्यां साग्रे प्रादेशसम्मिते ॥ अग्नीशदिश्योर्निक्षेप्ये ते ऊर्ध्वे समिधे मते ॥ समौ प्रादेशमात्रौ च कुशौ साग्रौ तु दैविके ॥ पवित्रे ग्रथिते ज्ञेये पित्र्येत्वेकमबन्धनम् ॥ अरत्निमात्रं बर्हिः स्याच्छूर्पादीनां तु लोकतः' इति ॥ अथ प्रोक्षणादिलक्षणम् ॥ कारिकायाम् उत्तानेन तु हस्तेन कर्तव्यं प्रोक्षणं भवेत् ॥ अवाचीनेन हस्तेन कर्तव्यं स्यादवोक्षणम् ॥ मुष्टी कृत्वा तु यत्कार्यमभ्युक्षणमिति स्मृतम् ॥

---

[1] टिप्पणम्ः - अत्र यद्यपि महीशूरे मुद्रिते बौधायनगृह्यसूत्रे ''स्रुक्रसम्मार्जने चतुः'' इति वर्तते ॥ प्रणीताऽऽच्छादनार्थ दर्भद्वयं नोट्टङ्कितम् ॥ तथापि ताडपत्रलिखितसूत्रे त्वेवं सत्वात्तथैव स्थापितम् ॥

अथ होत्रुपवेशनलक्षणम् ।। तार्क्ष्यासने बद्धबिसासने वा पद्मासने स्वस्तिकविष्टरे वा ।। निवेश्य तत्राध्वरकर्म कुर्यात्प्राचीमुखश्शुद्धवपुर्विधिज्ञः ।। अन्यच्च ।। निधाय भूमावथ सव्यजानुं चोद्धृत्य वामं च तदङ्घ्रिपार्श्वे ।। स्पृष्ट्वा च पत्सव्यतलेन वामहस्तात्स्पृशन्दक्षिणबाहुमूलम् ।। अथोद्धन्यमानलक्षणम् ।। स्फ्यमध्यमं गृहीत्वाऽथ संयुक्ताङ्गुलिभिः पुरा ।। अन्त्याङ्गुलिमृते तत्र भुवं स्फ्याग्रेण सम्मृजेत् ।। मध्ये मध्ये च पश्चात्सुरपतिदिशि तद्दक्षिणे मध्यमेग्नौ तत्पश्चान्मध्य इन्दोर्दिशि शुचिसमिधा संस्पृशेत्पश्चिमैन्द्र्याम् ।। उद्धन्येत्यस्य वर्णैश्शरशर विशिखद्वीपबाणाङ्गसंख्यैर्भक्तैराम्नायशुष्मश्रुतय इति मतैर्यज्ञभूशुद्धये च इति ।। अथ पवित्रम् ।। चतुर्भिः पौष्टिके यज्ञे पञ्चभिस्त्वाभिचारके ।। पित्र्ये त्रिभिः पवित्रार्थं द्वौ दर्भौ नित्यकर्मणि ।। षोडशाङ्गलविस्तारं ग्रन्थिरेकाङ्गलं भवेत् ।। द्व्यङ्गलं वलयं प्रोक्तं पवित्रस्य प्रमाणकम् ।। अग्रं प्रदक्षिणी कृत्य पूर्वरन्ध्राद्विनिर्गतम् ।। अधो रन्ध्राद्विनिर्गत्य पवित्रस्य च लक्षणम् ।। अथोद्देशत्यागः ।। सङ्कल्पेन विनोद्देशत्यागेन च विना हुतम् ।। समन्त्रमपि तत्कर्म न यथोक्तफलप्रदम् ।। पूर्वं च पूर्वोदितदेवताश्च परं च पश्चादुदितक्रमेण ।। तत्तन्मनूक्तक्रमसम्प्रयुक्ता उद्दिश्य होमं परिदापयेत्ताः ।।छ ।। अथोपवेशनम् ।। 'संस्कारकस्तु सर्वत्र तिष्ठेदुत्तरतः सदा ।। संस्कार्यः पुरुषो वाऽथ स्त्री वा दक्षिणतः सदा ।। इयं व्यवस्था निर्णीता कपर्दिप्रमुखैरिह ।। स्मार्तकर्मसु सर्वत्र तस्मादेवं हि कारयेत्' इति ।।

अथाग्निमुखप्रयोगः ।। अथ शुचौ समे देशे तथाकृते वा ईषत्प्रागुदक्प्लवे गोमयेन गोचर्ममात्रं स्थण्डिलमुपलिप्य पूर्वोक्तप्रकारेण विंशतिरेखात्मकमष्टदिक्ष्वश्वत्थदलाकारमष्टकोणात्मकं होममण्डलं विलिख्य तत्पश्चात्कर्ता प्राङ्मुख उपविश्य द्विराचम्य पवित्रपाणिः प्राणानायम्य देशकालौ सङ्कीर्त्य, 'अमुककर्म कर्तुं स्थलशुद्ध्यर्थं स्थण्डिलोल्लेखनाख्यं कर्म करिष्मे' इति सङ्कल्प्य ।। स्फ्याग्रेण ..... उद्धन्यमानं ।। अस्या अमेध्यं ।। अप पाप्मानं ।। यजमानस्य हन्तु ।। शिवा नः सन्तु ।। प्रदिशश्चतस्रः ।। शन्नो माता ।। पृथिवी ।। तोकसाता ।। इति नवपदैः ।। मध्ये मध्यपश्चिमपूर्वेषु । तद्दक्षिणे मध्याऽग्नेयनिर्ऋतिषु ।। तदुत्तरे मध्यवायव्येशान्येषु ।। क्रमेण स्फ्येनोद्धत्यापउपस्पृश्य ।। ॐ शन्नो देवीरभिष्टय ..... वन्तु नः ।। इत्यधोमुखेन हस्तेनाद्भिरवोक्ष्य ।। तत्र सिकताः शुक्लाः अनार्द्राः शुद्धप्रदेशस्थिताः केशकीटतुषभस्माङ्गारपिपीलिकादिवर्जिताः पञ्चप्रस्थसम्मिता आनीय ।। ॐ देवस्यत्वा .....हस्ताभ्यामिति सिकतान्युप्य, ताभिररत्निमात्रं समचतुरस्रं चतुरङ्गुलोन्नतं प्रागुदक्प्लवं स्थण्डिलमीशान्यादारभ्येशानपर्यन्तं कृत्वा, सुवर्णरजतताम्रशकलव्रीहियवदर्भाणामन्यतममङ्गुष्ठानामिकाभ्यां गृहीत्वा, तस्य मध्ये प्राचीनं सन्ततमृजुमुल्लिखेत् ।। 'ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेन आवः ।। सबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च

विवः' इति ॥ अथ दक्षिणतः प्राचीनम् ॥ 'ॐ नाके सुपर्णमुपयत्पतन्तꣳ हृदा वेनन्तो अभ्यचक्षत त्वा ॥ हिरण्यपक्षं वरुणस्य दूतं यमस्य योनौ शकुनं भुरण्युम्' इति अपउपस्पृश्य ॥ अथोत्तरतः प्राचीनम् ॥ 'ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् ॥ भवावाजस्य सङ्गथे' इति पूर्वाग्रास्तिस्रः ॥ अथ मध्यादुदीचीनम् ॥ 'ॐ यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेश तस्मै रुद्राय नमो अस्तु' इति अपउपस्पृश्य ॥ अथ पश्चादुदीचीनम् ॥ 'ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पाꣳसुरे' इति ॥ अथ प्रागुदीचीनम् ॥ 'ॐ इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतमꣳ रथीनां वाजानाꣳ सत्पति पतिम्' इत्युत्तराग्रास्तिस्रः । तत ईशान्यां शकलं निधाय मुष्ट्याऽभ्युक्ष्य नैर्ऋत्यां दिशि तं शकलं निरस्यापउपस्पृश्य, विरलमुष्ट्या स्थण्डिलमभ्युक्ष्य अथ समृद्धं द्वादशाङ्गारयुक्तं विधूममग्निं मृन्मयादिपात्रद्वयेन सम्पुटीकृत्य सुवासिन्याऽऽऽहतं स्थण्डिलादाग्नेय्यां निधाय ॥ ॐ देवस्य त्वा ..... हस्ताभ्याम् ॥ 'ॐ भूर्भुवःसुवरो अमुकनामाग्निं प्रतिष्ठापयामि' इति आत्माभिमुखं पाणिभ्यां प्रतिष्ठाप्य तत्पात्रे साक्षतजलमासिच्य, ईशान्यां निधाय प्रोक्षितकाष्ठानि निक्षिप्य वेणुधमन्या प्रज्वाल्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'श्रीपरमेश्वरप्रीत्यर्थममुकहोमं करिष्ये ॥ अमुकहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ अमुकनामाऽग्निः सविता देवता उक्तद्रव्यं हविः अग्निःस्विष्टकृत् आज्यस्य मान्त्रवर्णिक्योदेवता एता अङ्गदेवताः प्रधानदेवताः ताः सर्वाः सन्निहिताः सन्तु, एवं साङ्गेन कर्मणा सद्यो यक्ष्ये, तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य ॥ ॐ भूः ॥ ॐ भुवः ॥ ॐꣳ सुवः ॥ इति मध्यदक्षिणोत्तरक्रमेण तिस्रस्समिध आधाय अथाग्नेरुत्तरतस्त्रिसन्धात्मकेन

प्रदक्षिणावृत्तेनोदीचीनाग्रं निहितेन शुल्बेनेध्ममेकविंशतिदारुकं तथैव बर्हिर्मुष्टिं सन्नह्य परिस्तरणाद्यर्थं दर्भैस्सहाग्न्यायतनात्पश्चाद्भागोपरि निधाय अथैनमग्निमुपतिष्ठते ।। 'ॐ जुष्टो दमूना अतिथिर्दुरोणे ।। इमं नो यज्ञमुपयाहि विद्वान् ।। विश्वा अग्नेऽभियुजो विहत्य ।। शत्रूयता मा भरा भोजनानि' अथाग्नेरीशानमारभ्य सजलेन हस्तेन प्रदक्षिणक्रमेण ईशानपर्यन्तं त्रिः परिसमूह्य पर्युक्ष्य स्थण्डिलाद्दशाङ्गुलिमिते देशे परिस्तृणाति ।। 'ॐ देवस्य त्वा ..... हस्ताभ्यां प्राच्यां दिशि परिस्तृणामि' इति पुरस्तादुदगग्रैः षोडशभिः ।। 'ॐ भूर्भुवःसुवः दक्षिणस्यां दिशि परिस्तृणामि' इति दक्षिणतः प्रागग्रैः सप्तदशभिः ।। 'ॐ उद्वयं तमसस्परिपश्यन्तो ज्योतिरुत्तरम् ।। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्, प्रतीच्यां दिशि परिस्तृणामि' इति पश्चादुदगग्रैरष्टादशभिः ।। 'ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ।। निहोता सत्सि बर्हिषि, उदीच्यां दिशि परिस्तृणामि' इत्युत्तरतः प्रागग्रैः सप्तदशभिः ।। इति परिस्तीर्य, दक्षिणान्दर्भान्पूर्वपश्चिमपरिस्तरणयोरुपरि कुर्यात् उत्तरांस्तयोरधः ।। अथ पात्रासादनार्थमग्नेरुत्तरतः प्रागारभ्य पश्चादपवर्गं दक्षिणत आरभ्योदगपवर्गं त्रिसन्धमग्रैर्गूलं सञ्छाद्य सँस्तृणाति ।। दक्षिणेनाग्निं ब्रह्मासनार्थं प्रागग्रान् सप्तदशदर्भान्निदधाति ।। 'ॐ भूर्भुवःसुवरों ब्रह्मन्बृह्मासि नमस्ते ब्रह्मन्ब्रह्मणे नमः' इति ।। अथोत्तरतः प्रणीतासादनार्थं दर्भद्वयं निदधाति ।। 'ॐ वरुणोसि धृतव्रतो वारुणमसि' इति ।। अथात्मासनार्थं प्रागग्रं दर्भद्वयं निधाय अथास्तीर्णेषु दर्भेषु द्वन्द्वमधोबिलानि पात्राणि सादयति ।। [1]आज्यस्थालीं स्रुवं दर्वीं स्रुचं प्रणीतां प्रोक्षणीं चरुस्थालीं मेक्षणं इध्मं बर्हिः स्फ्यं इध्मप्रव्रश्चनानि इति सादयित्वा पञ्चभिर्दर्भैः प्रच्छाद्य प्रादेशमात्रे समे अप्रच्छिन्नाग्रे अनखच्छिन्ने कुशद्वयात्मके

---

[1] टिप्पणम्ः - अत्र आसादने क्रम उक्तः ।। कारिकायां "आज्यस्थाली स्रुवं चैव दर्वी च स्रुचमेव च ।। प्रणीतां प्रोक्षणीं चैव चरुस्थालीं समेक्षणाम् ।। तथेध्मा बर्हिषी चैव यैरन्यैश्च प्रयोजनम् ।। व्रीहिनिर्वापपक्षे तु मुसलोलूखले तथा ।। शूर्पाजिने चेत्येतानि नित्यं पात्राणि सादयेत् ।। द्वन्द्वमेव सदा पात्राण्यासादयति देशिकः ।। द्वितीयस्य त्व[illegible] हि समिध दर्भमेव वा ।। द्वन्द्वार्थे तूपयोक्तव्यं एकं नासादयेत् क्वचित्" इति ।।

[1]पवित्रे कृत्वाऽद्भिरनुमृज्य प्रोक्षणीपात्रमुत्तानं कृत्वा तस्मिन्नुदगग्रे पवित्रे निधायाद्भिः पूरयित्वा हस्तयोरङ्गुष्ठानामिकाभ्यामुदगग्रे पवित्रे गृहीत्वा विच्छिद्य विच्छिद्य [2]त्रिरुत्पूय उत्तानेन पाणिना ताभिः एवाद्भिरपस्त्रिः प्रोक्ष्य पात्राण्युत्तानानि कृत्वा विस्नस्येध्मं त्रिस्सर्वं प्रोक्ष्य उदक्स्थितं ब्राह्मणमस्मिन्कर्मणि ब्रह्माणं त्वां वृणे इति स्वदक्षिणपाणिना तस्य दक्षिणपाणिं स्पृष्ट्वा वरयित्वा वृतोऽस्मीत्युक्ते तं गन्धादिभिरभ्यर्च्य अथ ब्रह्मा प्राङ्मुख उपविश्य द्विराचम्याग्रेणाग्निं परीत्य दक्षिणत उदङ्मुखस्तिष्ठन् तूष्णीं ब्रह्मसदनमुपस्थाय आसनतृणेषु दक्षिणभागस्थमेकं तृणमङ्गुष्ठानामिकाभ्यां गृहीत्वा नैर्ऋत्यां दिशि निरस्य अपउपस्पृश्य द्यावापृथिवी समीक्षमाण उपविशेत् ॥ ब्राह्मणाभावे ब्रह्मासनदर्भेषु प्रागग्रं कूर्च निधाय 'ॐ ब्रह्मन्ब्रह्मासि नमस्ते ब्रह्मन्ब्रह्मणे नमः' इति ब्रह्मासनमन्त्रेणोपस्थाय ॥ अथाग्नेः पश्चात्प्रणीतापात्रं निधाय तस्मिन्नुदगग्रे पवित्रे निधाय अद्भिः पूरयित्वा ब्रह्मन्नपः प्रणेष्यामीत्युक्त्वा ॐ प्रणय इत्युक्ते तस्मिन् गन्धपुष्पाक्षतान्निधायदर्भस्थं दर्भसंछन्नं मुखसममुद्धत्याविषिञ्चन् हृत्वोत्तरेणाग्निंदर्भयोः सादयित्वा दर्भद्वयेन प्रच्छाद्य, अथ पवित्रे आदायाग्नेः पश्चाच्चरुस्थालीं निधाय तत्र प्रागग्रे पवित्र निधाय 'ॐ देवस्य ..... हस्ताभ्यां, सवित्रे जुष्टं निर्वपामि' इति मन्त्रेण त्रिः, तूष्णीं चतुर्थम् ॥ अथ पवित्रे गृहीत्वा 'ॐ देवस्य त्वा ..... हस्ताभ्यां, सवित्रे वो जुष्टं प्रोक्षमि' इति सकृत् मन्त्रेण, द्विःतूष्णी प्रोक्ष्योत्तरत आसाद्य अथाग्नेः पश्चादाज्यस्थालीं निधाय तस्मिन्नुदगग्रे पवित्रे निधाय आज्यं विलीनमप्यग्नावधिश्रित्य तस्मिन्नाज्यमानीय अग्नेरुत्तरतःस्थितानङ्गारानग्नेरुदक् परिस्तरणाद्बहिर्निरूह्य तेष्वाज्यमधिश्रित्य अभिद्योतनकुशद्वयेनाभिद्योत्य अपउपस्पृश्य ॥ अथ अङ्गुष्ठपर्वमात्रं द्वे दर्भाग्रे प्रच्छिद्य प्रक्षाल्य आज्ये

द

---

[1] टिप्पणम्: - दर्भद्वयावयवकत्वेन पवित्रस्य ''पवित्रे'' इति द्विवचनं प्रयुक्तम् ॥ न तु पवित्रद्वयमत्र उपयोक्तव्यम् ॥ अवयवगतसङ्ख्याया अवयविन्यपि प्रयोगः साधुरेव बहुत्र तथा पेयोगदर्शनात् ॥ दर्भद्वयेनैव पवित्रमेतादृक्स्थल इति ज्ञापनार्थत्वेनाऽपि तस्य युक्तत्वात् ॥ एवमुत्तरत्राप्यूह्यम् ॥

[2] टिप्पणम्: - उत्पवनं आज्यसंस्कारे लिखितरीत्या कर्तव्यम् ॥

प्रत्यस्य पूर्वाभिद्योतनकुशाभ्यामेव पुनरभिद्योत्य अपउपस्पृश्य ॥ अथ कुशद्वयेन आज्यं हविश्च त्रिः पर्यग्निकृत्वा आज्यपात्रं कर्षन्निवोदगुद्वास्य अङ्गारानग्नौ प्रत्यस्य तत्रस्थमेवाज्यमुदीचीनाग्राभ्यां पवित्राभ्यामङ्गुष्ठोपकनिष्ठिकाभ्यामुत्ता-नाभ्यां पाणिभ्यां पुरस्तादारभ्य पश्चदानीय, पुनः पुरस्तादाहरति, स एकः पुनराहारः एव त्रिः कृत्वा पवित्रे उद्धरति ॥ तदेकमुत्पवनं एवं त्रिवारमुत्पूय विस्रस्य पवित्रे अद्भिः सꣳस्पृश्य प्रागग्रे पवित्रे अग्नावनुप्रहरति ॥ अथाग्नेः पश्चात्परिस्तरणाद्बहिरात्मानोऽग्रतो भुवं प्रोक्ष्य तस्मिन्बर्हिः सन्नहनं प्रागुदगग्रं प्रसार्य तस्मिन्बर्हिः सꣳस्तीर्य आज्यपात्रं निधाय दक्षिणेन हस्तेन स्रुवं स्रुचं दर्वीं मेक्षणं च गृहीत्वा वागेन कुशद्वयमादाय सहैवाग्नौ प्रतितप्य आज्यस्थाल्यां उत्तरतः क्रमेण स्रुवादीन् निधाय तद्दर्भद्वयेनदक्षिणकरं आवेष्ट्य, वामेन स्रुवमादाय दर्भाग्राभ्यां बिलं, मध्याभ्यां पृष्ठं, मूलाभ्यां दण्डमिति त्रिस्त्रिः सम्मृज्य अद्भिः सूँस्पृश्य पुनर्निष्टप्य प्रोक्ष्याऽज्यस्थाल्या उत्तरतो निदधाति एवं दर्वीं स्रुचं च सम्मृज्य तदुत्तरतो निधाय मेक्षणं गृहीत्वा अग्राभ्यामग्रं, मध्याभ्यां मध्यं, मूलाभ्यां मूलं च सम्मृज्य संस्पर्शन-निष्टपन-प्रोक्षणानि कृत्वा चरौ निदधाति दर्भाबद्भिः सꣳस्पृश्य अग्नावनुप्रहरति ॥ अथ स्रुवेण चरुमभिघार्योदगुद्वास्य अग्र्याज्यमध्येऽस्थापयन्नीत्वाऽऽज्यस्य दक्षिणतो बर्हिषि प्रतिष्ठाप्य अभिघारयति ॥ अरत्निमात्रान्परिधीन् स्थण्डिलान्नवाङ्गुलिमिते देशे परिदधाति मध्यमपरिधिरुदगग्रः तस्योपरि दक्षिणतः प्रागग्रः तस्याध उत्तरतः प्रागग्रः ॥ द्वे ऊर्ध्वसमिधावाग्नेयेशान्ययोः निपात्य निधाय प्रागादिप्रदक्षिणमग्निं परिसमूहति ॥ ॐ स्वाहा इत्येकां समिधमाधाय ॐ जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं घूममृण्वन् ॥ उपस्पृशदिव्यꣳसानस्तूपैस्सँरश्मभिस्ततनस्सूर्यस्य ॥ इति स्थण्डिलादष्टाङ्गुलिमिते देशे परिध्यन्तः प्रदक्षिणमग्निं परिषिञ्चति 'ॐ अदितेनुमन्यस्व' इति दक्षिणतः प्राचीनम् ॥ 'ॐ अनुमतेनुमन्यस्व' इति पश्चादुदीचीनम् ॥ 'ॐ सरस्वतेनुमन्यस्व' इत्युत्तरतः प्राचीनम् ॥ 'ॐ देवसवितः प्रसुव' इति प्रागादिसमन्तात्प्रदक्षिणमग्निं परिषिच्य स्थण्डिलादेकादशाङ्गुलिमिते देशे गन्धपुष्पाक्षतैः प्रागाद्यष्टदिक्षु

प्रदक्षिणमग्निमलङ्करोति। ॐ अग्नये नमः ॥ ॐ जातवेदसे नमः ॥ ॐ सहोजसे नमः ॥ ॐ अजिराप्रभवे नमः ॥ ॐ वैश्वानराय नमः ॥ ॐ नर्यापसे नमः। ॐ पङ्क्तिराधसे नमः ॥ ॐ विसर्पिणे नमः ॥ ॐ यज्ञेश्वराय नमः ॥ इति गन्धपूष्पाक्षतान् समर्पयामि ॥ 'अग्निं प्रज्ज्वलितं वन्दे जातवेदं हुताशनम् ॥ सुवर्णवर्णममलं समिद्धं विश्वतोमुखम्' इति प्रणम्य, एकं द्वे त्रीणीत्यादिभिः पञ्चदशसमिधो गणयित्वा, हस्ते धृत्वा, (अन्यां) एकां समिधं प्रणीतादेशे निधाय, रज्जुना स्फ्यꣳसंवेष्ट्य, अग्निमलङ्कृत्येध्ममलङ्कृत्य, स्वयमलङ्कृत्य ब्रह्माणमलंकृत्य इध्माग्रमध्यमूलान्यभिघार्य ॥ ॐ चत्वारिश्रृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्तहस्तासो अस्य ॥ त्रिधा बद्धा वृषभो रोरवीति महो देवो मर्त्याꣳआविवेश ॥ इत्यग्निं ध्यात्वा प्रजापति मनसा ध्यायन् स्वाहेति इध्मं हुत्वा प्रजापतय इदं न मम ॥ अथाघारावाघारयति 'ॐ प्रजापतये स्वाहा, प्रजापतय इदं न मम' इति मनसा उत्तरपरिधिसन्धिमारभ्य सन्ततमृजुमक्षणयाऽग्नि मध्यपर्यन्तं स्रुवेण जुहोति ॥ अथेध्यसन्नहनं स्फ्येनसङ्गृह्य मध्यमपरिधिमूलादारभ्याग्रपर्यन्तं त्रिस्त्रिः सम्मार्ष्टि ॥ ततोऽग्नेः पुरस्तादानीय दक्षिणपरिधिं तथैव सम्मृज्य तथैव प्रत्यानीय उत्तरपरिधिं तथैव सम्मार्ष्टि ॥ तथैवाग्निं त्रिः प्राचीनꣳसम्मृज्य पूर्ववत्प्रणीतापात्रे निधाय ॥ ॐ इन्द्राय स्वाहा, इन्द्रायेदम् ॥ इति उपाꣳशु दक्षिणपरिधिसन्धिमारभ्य अग्निमध्यपर्यन्तं पूर्ववद्धुत्वा अथाज्यभागौ जुहोति ॥ ॐ अग्नये स्वाहा, अग्नय इदम् ॥ इत्युत्तरार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति ॥ ॐ सोमाय स्वाहा, सोमाय इदम् ॥ इति दक्षिणार्धपूर्वार्धे प्रतिमुखं प्रबाहुग्जुहोति। अथ अग्निमुखं जुहोति ॐ युक्तोवह जातवेदः पुरस्तादग्ने विद्धि कर्म क्रियमाणं यथेदम् ॥ त्वं भिषग्भेषजस्यासि कर्ता त्वया गा अश्वान्पुरुषान्त्सनेमि स्वाहा ॥ जातवेदसेऽग्नय इदम् ॥१॥

ॐ चतस्र आशा प्रचरन्त्वग्नय इमन्नो यज्ञं नयतु प्रजानन् ॥ घृतं पिन्वन्नजरꣳसुवीरं ब्रह्म समिद्भवत्याहुतीनाꣳस्वाहा ॥ घृतं पिन्वतेग्नयेऽअजराय ब्रह्मण इदम् ॥२॥ ॐ आनो भद्राः क्रतवो यन्तु विश्वतोदब्धासो अपरीतास उद्भिदः ॥ देवानो यथा सदमिद्वृधेऽसन्नप्रायुवोरक्षितारो दिवेदिवे स्वाहा ॥ असन्नप्रायुभ्यो रक्षितृभ्यः क्रतुभ्यो देवेभ्य इदम् ॥३॥ ॐ विरूपाक्ष मा विबाधिष्ठा मा विबाधविबाधिथाः ॥ निर्ऋत्यै त्वा पुत्रमाहुः स नः कर्माणि साधय स्वाहा ॥ विरूपाक्षाय निर्ऋतिपुत्राय इदम् ॥४॥ ॐ विरूपाक्षमहं यजे निजङ्घꣳशबलोदरम् ॥ यो मा यं परिबाधते श्रियै पुष्ट्यै च नित्यदा तस्मै स्वाहा ॥ विरूपाक्षाय निजङ्घाय शबलोदराय मां परिबाधमानाय श्रियै पुष्ट्या इदम् ॥५ ॥ ॐ या तिरश्चीनिपद्यसेऽहं विधरणी इति ॥ ता त्वा घृतस्य धारयाग्नौ सꣳराधिनीयजे स्वाहा ॥ निर्यङ्ङिनपद्यमानायै विधरिण्यै सँराधिन्या इदम् ॥६॥ ॐ सँराधिन्यै देव्यै स्वाहा ॥ सँराधिन्यै देव्या इदम् ॥७॥ ॐ प्रसाधिन्यै देव्यै स्वाहा ॥ प्रसाधिन्यै देव्या इदम् ॥८॥ ॐ भूः स्वाहा ॥ अग्नय इदम् ॥९॥ ॐ भुवः स्वाहा ॥ वायव इदम् ॥१०॥ ॐ ꣳसुवः स्वाहा ॥ सूर्याय इदम् ॥११॥ ॐ भूर्भुवःसुवः स्वाहा ॥ प्रजापतय इदम् ॥१२॥ [१]अथ चरुप्रायश्चित्तम् ॥ ॐ इन्द्राय स्वाहा ॥ इन्द्रायेदम् ॥ ॐ अग्नये स्वाहा ॥ अग्नय इदम् ॥ ॐ यमाय स्वाहा ॥ यमाय इदम् ॥ अप उपस्पृश्य ॥ ॐ निर्ऋतये स्वाहा ॥ निर्ऋतय इदम् ॥ अप उपस्पृश्य ॥ ॐ वरुणाय स्वाहा ॥ वरुणायेदम् ॥ ॐ वायवे स्वाहा ॥ वायव इदम् ॥ ॐ सोमाय स्वाहा ॥

---

[१] अथ श्रप्यमाणे चरौ यस्यां दिश्युत्सिच्येत तस्यै देवतायै स्रुवाहुतिं जुहुयात्, यदि प्रागिन्द्राय यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः सोमाय यद्याग्नेय्यमाग्नये यदि रक्षसि निर्ऋतये यदि वायव्यां वायवे यदीशान्यामीशानाय यदि सर्वत एवोत्सिच्येत तदा ताभ्यः सर्वाभ्यः, उत्सिक्तं च चरुमाज्येनाप्याययति "आप्यायस्व०, सन्ते०" इति द्वाभ्याम ॥ इति ताडपत्रगतबौधायनसत्रे विद्यमानत्वेन सर्वोत्सेकपक्षमाश्रित्य इन्द्रादिभ्यः सर्वाभ्यः आहतयो विहिता इति ज्ञेयम् ॥

सोमायेदम् ।। ॐ ईशानाय स्वाहा ।। ईशानायेदम् ।। अथाज्येन चरुमाप्याययति = ॐ आप्यायस्व समेतु ते विश्वतः सोमवृष्णियम् ।। भवा वाजस्य सङ्गथे ।। ॐ सन्ते पयाꣳसि समुयन्तु वाजाः सवृष्णियान्यभिमातिषाहः ।। आप्यायमानो अमृताय सोम दिवि श्रवाꣳस्युत्तमानि धिष्व ।। इति द्वाभ्याम् ।। अत्र अव्रत्यप्रायश्चित्तार्थं मिन्दाद्वयं हुत्वा ।। अथ स्रुवेण दर्व्यामुपस्तीर्य पूर्वार्धाच्चरोरङ्गुष्ठपर्वमात्रमवदाय अपरार्धादवद्यति, पञ्चावत्तिनां तु मध्यात्पूर्वार्धादपरार्धादिति क्रमेण त्रिरवदानम् ।। द्वितीयाद्यवदाने तु अपरार्धादवराय पूर्वार्धादवद्यति, पञ्चावत्तिनां तु मध्यादपरार्धात्पूर्वार्धादिति त्रिरवदाय अभिघार्य ।। पात्रस्थचरुमप्यवत्तदेशक्रमेणाभिघार्य पुरस्तात्स्रुवाहुतिं हुत्वा ।। तत्तदुक्तकर्मप्रधानदेवतायै तत्तन्मन्त्राभ्यां याज्यापुरोऽनुवाक्यानुधर्मेण पक्वं हुत्वा ।। अथ अनाम्नातेषु ।। ॐ भूर्भुवःसुवरो३तत्सवितुः ..... प्रचोदयात्स्वहा ।। सवित्र इदम् ।। उपरिस्टात्स्रुवाहुतिं हुत्वा ।। यत्रैक एव मन्त्रः तत्र तं याज्यापुरोऽनुवाक्यार्थं द्विवारमुक्त्वा पूर्वमन्त्रस्यान्त्यस्वरादिस्थाने प्रणवं संयोज्य प्लुतमुक्त्वा अन्त्यमन्त्रस्यार्धर्चेऽवसाय मन्त्रान्ते जुहुयात् ।। सर्वत्र अवदानधर्मेण समन्त्रकहोमेऽयमेव न्यायो योज्यः ।। सर्वत्र स्वाहान्त आकारे होमः ।। न त्वाकारात्पूर्वम् ।। वत्सा बिदा आर्ष्णिषेणा जामदग्न्या इत्येते पञ्चावत्तिनः ।। इति पक्वं हुत्वा अथ तत्तत्कर्मोक्तप्रकारेण समिच्चर्वाज्यतिलादिकं तत्तदुक्तमन्त्रेण जुहुयात् ।। सर्वत्र मन्त्रादौ प्रणवमुक्त्वा स्वाहान्ते जुहुयात् ।। चरुहोमाभावे पक्वहोमानन्तरं स्रुवेण दर्व्यामुपस्तीर्य बिल्वफलप्रमाणं स्विष्टकृतं उत्तरार्धात्सकृदवदाय द्विरभिधार्य पञ्चावत्तिनां तु त्रिरभिघारणम् ।। न प्रत्यनक्ति अन्तःपरिधि सादयित्वा तत्तदुक्तमन्त्रेराज्यं हुत्वा तस्याप्यभावे व्याहृतिभिराज्यं उपहुत्य पुरस्तात्स्रुवाहुति हुत्वा ।। ॐ हव्यवाहमभिमातिषाहꣳरक्षोहणं पृतनासु जिष्णुम् ।। ज्योतिष्मन्तं दीद्यतं पुरंधिमग्निꣳस्विष्टकृतमाहुवेमो३ꣳस्विस्टमग्ने

अभितत्पृणाहि विश्वा देव पृतना अभिष्य ।। उरुन्नः पन्थां प्रदिशन्विभाहि ज्योतिष्मद्धेह्यजरन्न आयुः स्वाहा ।। अग्नये स्विष्टकृत इदम् ।। इत्युत्तरार्धपूर्वार्धे हुत्वा उपरि स्रुवाहुतिं हुत्वा मेक्षणमग्नौ प्रहृत्य स्रुचि चतुर्गृहीतं गृहीत्वा स्रुवेणाज्यमादाय द्वाभ्यां जुहोति ।। ॐ देवेभ्यः स्वाहा ।। देवेभ्य इदम् ।। अथ दर्व्यामुदकं पूरयित्वा अन्तःपरिधि उत्तरपरिधिसन्धिमारभ्य दक्षिणसन्धिपर्यन्तं निनयति ।। ॐ वैश्वानरे हविरिदं जुहोमि साहस्रमुत्सꣳशतधारमेतम् ।। स नः पितरं पितामहं प्रपितामहꣳस्वर्ग्रे लोके गच्छतु पिन्वमानꣳस्वधा नमः ।। इति ।। अथाप उपस्पृश्य ।। पुनः पूरयित्वा बहिःपरिध्युदीचीनं निनयति ।। ॐ इमꣳसमुद्रꣳशतधारमुत्संव्यच्यमानं भुवनस्य मध्ये ।। घृतं दुहानामदितिं जनायाग्ने माहिꣳसीः परमे व्योमन् ।। इति अनूयाजसमिधमाधाय केवलेनेध्मसन्नहनेन परिधीनग्निं च पूर्ववत्सकृत्सकृत्संमृज्य इध्मसन्नहनं विस्रस्य अद्भिःसꣳस्पृश्य ।। ॐ रुद्राय पशुपतये स्वाहा ।। रुद्राय पशुपतय इदम् ।। इति हुत्वा अप उपस्पृश्य ।। एतत् कर्मसमृद्ध्यर्थं जयादिहोमं करिष्ये ।। इति सङ्कल्प्य ।। ॐ [1]यन्म आत्मनो मिन्दाभूदग्निस्तत्पुनराहार्जातवेदा विचर्षणिः स्वाहा ।। अग्नये जातवेदसे विचर्षणय इदम् ।। ॐ पुनरग्निश्चक्षुरदात्पुनरिन्द्रो बृहस्पतिः ।। पुनर्मे अश्विनायुवं चक्षुराधत्तमक्ष्योः स्वाहा ।। अग्नीन्द्रबृहस्पत्यश्विभ्य इदम् ।। अथ चित्तश्चेत्यादित्रयोदशजयादिमन्त्राणां विश्वेदेवा ऋषयः लिङ्गोक्ता देवताः आज्यहोमे विनियोगः ।। ॐ चित्तश्च स्वाहा ।। चित्तायेदम् ।। ॐ चित्तिश्च स्वाहा ।। चित्या इदम् ।। ॐ आकूतं च स्वाहा ।। आकूतायेदम् ।। ॐ आकूतिश्च स्वाहा ।। आकूत्या इदम् ।। ॐ विज्ञातं च स्वाहा ।। विज्ञातायेदम् ।। ॐ विज्ञानं च स्वाहा ।। विज्ञानायेदम् ।। ॐ मनश्च स्वाहा ।। मनस इदम् ।। ॐ शक्करीश्च स्वाहा ।। शक्करीभ्य इदम् ।। ॐ

[1] जयाभ्यातानराष्ट्रभृदमात्यहोमेष्वादौ मिन्दाहुती जुहुयादिति विष्णुभट्टीये प्रोक्तत्वात् ।।

दर्शश्च स्वाहा ॥ दर्शायेदम् ॥ ॐ पूर्णमासश्च स्वाहा ॥ पूर्णमासायेदम् ॥ ॐ बृहच्च स्वाहा ॥ बृहत इतम् ॥ ॐ रथन्तरं च स्वाहा ॥ रथन्तरायेदम् ॥ ॐ प्रजापतिर्जयानिन्द्राय वृष्णे प्रायच्छदुग्रः पृतनाज्येषु तस्मै विशस्समनमन्त सर्वाः स उग्रः सहि हव्यो बभूव स्वाहा ॥ प्रजापताय इदम् ॥ ॐ यन्म आत्मनः०, ॐ पुनरग्निः०, ॐ अग्निर्भूतानां०, इति सप्तदशाभ्याताताताना विश्वेदेवा ऋषयः लिङ्गोक्ता देवता आज्यहोमे विनियोगः ॥ ॐ अग्निर्भूतानामधिपतिः समावत्वस्मिन्ब्रह्मन्नस्मिन्क्षत्रेऽस्यामाशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्यां स्वाहा ॥ अग्नये भूतानामधिपतय इदम् ॥१॥ ॐ इन्द्रो ज्येष्ठानां ..... स्वाहा ॥ इन्द्राय ज्येष्ठानामधिपतय इदम् ॥२ ॥ ॐ यमः पृथिव्या ..... स्वाहा ॥ यमाय पृथिव्या अधिपतय इदम् ॥३ ॥ अप उपस्पृश्य ॥ ॐ वायुरन्तरिक्षस्य ..... स्वाहा ॥ वायवेऽन्तरिक्षस्याधिपतय इदम् ॥४॥ ॐ सूर्यो दिवो ..... स्वाहा ॥ सूर्याय दिवोधिपतय इदम् ॥५ ॥ ॐ चद्रमा नक्षत्राणां ..... स्वाहा ॥ चद्रमसे नक्षत्राणमधिपतय इदम् ॥६ ॥ ॐ बृहस्पतिर्ब्रह्मणोधिपतिः ..... स्वाहा ॥ बृहस्पतये ब्रह्मणोधिपतय इदम् ॥७ ॥ ॐ मित्रः सत्यानां ..... स्वाहा ॥ मित्राय सत्यानामधिपतय इदम् ॥८ ॥ ॐ वरुणोपां ..... स्वाहां ॥ वरुणायापामधिपतय इदम् ॥९ ॥ ॐ समुद्रः स्रोत्यानां ..... स्वाहा ॥ समुद्राय स्रोत्यानामधिपतय इदम् ॥१०॥ ॐ अन्नं साम्राज्यानामधिपतितन्मावतु ..... स्वाहा ॥ अन्नाय साम्राज्यानामधिपतिन इदम् ॥११॥ ॐ सोम ओषधीनां ..... स्वाहा ॥ सोमायौषधीनामधिपतय इदम् ॥१२॥ ॐ सविता प्रसवानां ..... स्वाहा ॥ सवित्रे प्रसवानामधिपतय

इदम् ॥१३॥ ॐ रुद्रः पशूनां ..... स्वाहा ॥ रुद्राय पशूनामधिपतय इदम् ॥१४॥ अप उपस्पृश्य ॥ ॐ त्वष्टा रूपाणां ..... स्वाहा ॥ त्वष्ट्रे रूपाणामधिपतय इदम् ॥१५॥ ॐ विष्णुः पर्वतानां ..... स्वाहा ॥ विष्णवे पर्वतानामधिपतय इदम् ॥१६॥ ॐ मरुतो गणानामधिपतयस्ते मावन्त्वस्मिन् ..... स्वाहा ॥ मरुद्भ्यो गणानामधिपतिभ्य इदम् ॥१७॥ ॐ पितरः पितामहाः परेवरेततास्ततामहा इह मावन ॥ अस्मिन्ब्रह्मन्नस्मिन् क्षत्रेऽस्या माशिष्यस्यां पुरोधायामस्मिन्कर्मन्नस्यां देवहूत्याम् ॥ इति सप्तदशस्वपि होमान्ते प्रतिमन्त्रं जपेत् ॥ इहमावतेत्यन्तं प्रतिहोमं वा। सप्तदशान्ते वा जपेदिति विष्णुभट्टः ॥ जुहुयादिति विश्वपतिः ॥ तच्चिन्त्यम् ॥ तथा च गृह्यसूत्रे 'अग्निर्भूतानामधिपतिः समावत्स्वाहेन्द्रो ज्येष्ठानामधिपतिः समावत्स्वाहेति सप्तदश स्रुवाहुतीर्हुत्वा वाचयति पितरःपितामहा इहमावतेत्यान्तादनुवाकस्य' इति ॥ कारिकायां 'अनुषङ्गोऽधिपतिः स इत्यादिः स्याच्चतुष्पदैः ॥ अस्मिन्ब्रह्मंस्ततो ब्रूयादिति सप्तदशस्वपि ॥ जपेत्पितर इत्यादियजुर्होमे हुते हुते ॥ यद्वा पितर इत्यादि मन्त्रः सर्वो जपे भवेत्' इति ॥ प्रयोगतिलकेऽप्येवं ॥ 'अतः प्रतिमन्त्रमावृत्तिः कर्तव्या ॥ होमपक्षे सप्तदशाभ्यातानां इत्यस्य व्याघातः स्यात्, अतिरिक्तत्वापत्तेश्च ॥ अतः पितरः पितामहा इत्यादि देवहूत्यामित्यन्तं सप्तदशस्वपि होमान्ते प्रतिमन्त्रं, सर्वांते वा प्राचीनावीती दक्षिणां दिशं पश्यन् जपति ॥ अप उपस्पृश्य ॥ मिन्दाहुतीहुत्वा ॥ ऋताषाडित्यादिद्वाविंशतिराष्ट्रभृतांमन्त्राणां विश्वेदेवा ऋषयः लिङ्गोक्तादेवताः आज्यहोमे विनियोगः ॥ ॐ ऋताषाडृतधामाग्निर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ ऋतासाह ऋतधान्मेऽग्नये गन्धर्वाय तस्मा इदम् ॥१ ॥ ॐ तस्यौषधयोऽप्सरस ऊर्जोनाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ ओषधिभ्योऽप्सरोभ्य ऊर्भ्यस्ताभ्य इदम् ॥२ ॥ ॐ सꣳहितो विश्वसामा सूर्यो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ सꣳहिताय विश्वसाम्ने सूर्याय गन्धर्वाय तस्मा इदम् ॥३ ॥ ॐ तस्य मरीचयोऽप्सरस

आयुवो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ मरीचिभ्योऽप्सरोभ्य आयुभ्यस्ताभ्य इदम् ॥४॥ ॐ सुषुम्नः सूर्यरश्मिश्चन्द्रमा गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ सुषुम्नाय सूर्यरश्मये चन्द्रमसे गन्धर्वाय तस्मा इदम् ॥५॥ ॐ तस्य नक्षत्राण्यप्सरसो बेकुरयो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ नक्षत्रेभ्योऽप्सरोभ्यो बेकुरिभ्यस्ताभ्य इदम् ॥६॥ ॐ भुज्युः सुपर्णो यज्ञो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ भुज्यवे सुपर्णाय यज्ञाय गन्धर्वाय तस्मा इदम् ॥७॥ ॐ तस्य दक्षिणा अप्सरसः स्तवा नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ दक्षिणाभ्योऽप्सरोभ्यः स्तवाभ्यस्ताभ्य इदम् ॥८॥ ॐ प्रजापतिर्विश्वकर्मा मनो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ प्रजापतये विश्वकर्मणे मनसे गन्धर्वाय तस्मा इदम् ॥९॥ ॐ तस्य ऋक्सामान्यप्सरसो वह्नयो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ ऋक्सामेभ्योऽप्सरोभ्यो वह्निभ्यस्ताभ्य इदम् ॥१०॥ ॐ इषिरो विश्वव्यचा वातो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ इषिराय विश्वव्यचसे वाताय गन्धर्वाय तस्मा इदम् ॥११॥ ॐ तस्यापोऽप्सरसो मुदा नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ अभ्द्योऽप्सरोभ्यो मुदाभ्यस्ताभ्य इदम् ॥१२॥ ॐ भुवनस्य पते यस्य त उपरि गृहा इह च ॥ स नो रास्वाज्यानिꣳ रायस्पोषꣳ सुवीर्यꣳ संवत्सरीणाꣳ स्वस्तिꣳ स्वाहा ॥ भुवनस्य पत्या इदम् ॥१३॥ ॐ परमेष्ठ्यधिपतिर्मृत्युर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ परमेष्ठिनेधिपतये मृत्यवे गन्धर्वाय तस्मा इदम् ॥१४॥ ॐ तस्य विश्वमप्सरसो भुवो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ विश्वस्मा अप्सरोभ्यो भूभ्यस्ताभ्य इदम् ॥१५॥

ओ॒सुक्षितिः सुभूतिर्भद्रकृत्सुवर्वान्पर्जन्यो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ सुक्षितये सुभूतये भद्रकृते सुवर्वते पर्जन्याय गन्धर्वाय तस्मा इदम् ॥१६॥ ॐ तस्य विद्युतोप्सरसो रुचो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा ॥ वद्युिद्भ्योऽप्सरोभ्यो रुग्भ्यस्ताभ्य इदम् ॥१७॥ ॐ दूरे हेतिरमृडयो मृत्युर्गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ दूरेहेतये अमृडयाय मृत्यवे गन्धर्वाय तस्मा इदम् ॥१८॥ ॐ तस्य प्रजा अप्सरसो भीरुवो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्य स्वाहा ॥ प्रजाभ्योऽप्सरोभ्यो भीरुभ्यस्ताभ्य इदम् ॥१९॥ ॐ चारुः कृपणकाशी कामो गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा ॥ चारवे कृपणकाशिने कामाय गन्धर्वाय तस्मा इदम् ॥२०॥ ॐ तस्याधयोऽप्सरसः शोचयन्तीर्नाम ता इदं ब्रह्म क्षत्रं पान्तु तभ्यः स्वाहा ॥ आधिभ्योऽप्सरोभ्यः शोचयन्तीभ्यस्ताभ्य इदम् ॥२१॥ ॐ सनो भुवनस्य पते यस्य त उपरि गृहा इह च ॥ उरुब्रह्मणेऽस्मै क्षत्राय महि शर्म यच्छ स्वाहा ॥ भुवनस्य पत्ये ब्रह्मण इदम् ॥२२॥ ॐ यन्म आत्मनः० ॥ पुनरग्निः० ॥ अथामात्यहोमः ॥ ॐ यद्देवा देवहेडनं देवासश्चकृमा वयम् ॥ आदित्यास्तस्मान्मामुञ्चतर्तस्यर्तेन मामुत स्वाहा ॥ देवेभ्य आदित्येभ्य इदम् ॥१॥ ॐ देवा जीवनकाम्या यद्वाचाऽनृतमूदिम ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनस॒स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥२॥ ॐ ऋतेन द्यावापृथिवी ऋतेन त्व॒सरस्वति ॥ ऋतान्मामुञ्चता॒हसो यदन्यकृतमारिम स्वाहा ॥ द्यावापृथिवीभ्या॒सरस्वत्या इदम् ॥३॥ ॐ सजातश॒सादुत वाजामि श॒साज्यायसश्श॒सादुत वा कनीयसः ॥ अनाज्ञातं देवकृतं यदेनस्तस्मात्वमस्माञ्जातवेदो मुमुग्धि स्वाहा ॥ जातवेदस इदम् ॥४॥ ॐ यद्वाचा यन्मनसा

बाहुभ्यामूरुभ्यामष्ठीवद्भ्याꣳशिश्नैर्यदनृतं चकृमा वयम् ॥ अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेनसꣳस्वाहा ॥ अग्नये गार्हपत्याय इदम् ॥५॥ ॐ यद्धस्ताभ्यां चकर किल्बिषाण्यक्षाणां वग्नुमुपजिघ्नमानः ॥ दूरे पश्याच राष्ट्रभृच्च तान्यप्सरसावनुदत्तामृणानि स्वाहा ॥ दूरे पश्यायै राष्ट्रभृतेऽप्सरोभ्यामिदम् ॥६॥ ॐ अदीव्यन्नृणं यदहं चकार यद्वा दास्यन्त्सञ्जगारा जनेभ्यः ॥ अग्निर्मा तस्मा ..... स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥७॥ ॐ यन्मयि माता गर्भे सत्येनश्चकार यत्पिता ॥ अग्निर्मा तस्मा ..... स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥८॥ ॐ यदा पिपेष मातरं पितरं पुत्रः प्रमुदितो धयन् ॥ अहिꣳसितौ पितरौ मया तत्तदग्ने अनृणो भवामि स्वाहा ॥ अग्नय इदम् ॥९॥ ॐ यदन्तरिक्षं पृथिवीमुतद्यां यन्मातरं पितरं वा जिहिꣳसिम् ॥ अग्निर्मा तस्मा ..... स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥१०॥ ॐ यदासशसा निशसा यत्पराशसा यदेनश्चकृमा नूतनं यत्पुराणम् ॥ अग्निर्मा तस्मा ..... स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥११॥ ॐ अतिक्रामामि दुरितं यदेनो जहामि रिप्रं परमे सधस्थे ॥ यत्र यन्ति सुकृतो नापि दुष्कृतस्तमारोहामि सुकृतां नु लोकꣳस्वाहा ॥ अग्नये सुकृताꣳल्लोकाय इदम् ॥१२॥ ॐ त्रिते देवा अमृजतैतदेनस्त्रित एतन्मनुष्येषु मा मृजे ॥ ततो मायदि किञ्चिदानशेऽग्निर्मा तस्मा ..... स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥१३॥ ॐ दिवि जाता अप्सु जाता या जाता ओषधीभ्यः ॥ अथो या अग्निजा आपस्तानश्शुन्धन्तु शुन्धनीः स्वाहा ॥ अद्भ्यः शुन्धनीभ्य इदम् ॥१४॥ ॐ यदापो नक्तं दुरितं चराम यद्वा दिवा नूतनं यत्पुराणम् ॥ हिरण्यवर्णास्तत उत्पुनीत नः

स्वाहा ॥ अद्भ्यो हिरण्यवर्णाभ्य इदम् ॥१५॥ ॐ इमं मे वरुण श्रुधीहवमद्या च मृडय ॥ त्वामवस्युराचके स्वाहा ॥ वरुणायेदम्॥१६॥ ॐ तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः॥ अहेडमानो वरुणेह बोध्युरुश ँ स मा न आयुः प्रमोषीः स्वाहा ॥ वरुणाय इदम् ॥१७॥ ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देवस्य हेडोऽवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वाद्वेषा ँ सि प्रमुमुग्ध्यस्मत् स्वाहा ॥ अग्निवरुणाभ्यामिदम् ॥१८॥ ॐ स त्वन्नो अग्नेऽवमो भवोती नेदिष्ठो अस्या उषसो व्युष्टौ ॥ अव यक्ष्वनो वरुण ँ रराणो वीहि मृडीक ँ सुहवो न एधि स्वाहा ॥ अग्निवरुणाभ्यामिदम् ॥१९॥ ॐ त्वमग्ने अयास्ययासन्मनसा हितः ॥ अयासन्हव्यमूहिषेऽयानो धेहि भेषज ँ स्वाहा ॥ अग्नये अयस इदम् ॥२०॥ ॐ प्रजापते न त्वदेतान्यन्यो विश्वा जातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वय ँ स्याम पतयो रयीणा ँ स्वाहा ॥ प्रजापतय इदम् ॥२१॥ अथेध्मप्रव्रश्चनान्यभ्याधाय ॥ अथ प्रायश्चित्ताहुतीर्जुहोति ॥ [1]द्रव्यहविर्मन्त्रसंस्कारणां चतुर्णां मध्ये अन्यतमदोषस्य नित्यत्वात् तन्निमित्तप्रायश्चितहोमं करिष्ये ॥ ॐ मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञ ँ समिमं दधातु ॥ या इष्टा उषसो निम्रुचश्च ताः सन्दधामि हविषा घृतेन स्वाहा ॥ मनसे ज्योतिष उषोभ्यो निम्रुग्भ्य इदम् ॥१॥ ॐ अयाश्चाग्नेस्यनभिशस्तीश्च सत्यमित्वमया असि ॥ अयसा मनसा धृतोयसा हव्यमूहिषेऽयानो धेहि भेषज ँ स्वाहा ॥ अग्नये अयस इदम् ॥२॥ ॐ यदस्मिन्कर्मण्यन्तरगाम मन्त्रतः कर्मतो वा ॥ अनयाऽऽहुत्या तच्छमयामि सर्वं तृप्यन्तु देवा आवृषन्तां घृतेन स्वाहा ॥ देवेभ्य इदम् ॥३॥ ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु स्वाहा ॥ इन्द्राय

---

[1] अत्र ''द्रव्यहविर्मन्त्रसंस्काराणां न्यूनातिरेकदोषप्रायश्चित्तहोमं करिष्ये'' इति सङ्कल्पः सूचितः ॥

वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये (स्वस्तये) बृहस्पतय इदम् ।।४।। ॐ तत्सवितुः ..... प्रचोदयात्स्वाहा ।। सवित्र इदम् ।।५।। ॐ यन्म आत्मनः० ।। पुनरग्निः० ।। ॐ भूः स्वाहा ।। अग्नय इदम् ।। ॐ भुवः स्वाहा ।। वायव इदम् ।। आꣳसुवः स्वाहा ।। सूर्याय इदम् ।। ॐ भूर्भुवःसुवः स्वाहा ।। प्रजापतय इदम् ।। ॐ इष्टेभ्यः स्वाहा ।। इष्टेभ्य इदम् ।। ॐ वषडनिष्टेभ्यः स्वाहा ।। वषडनिष्टेभ्य इदम् ।। ॐ भेषजं दुरिष्ट्यै स्वाहा ।। दुरिष्ट्या इदम् ।। ॐ निष्कृत्यै स्वाहा ।। निष्कृत्या इदम् ।। ॐ दौराध्यै स्वाहा ।। दौराध्यी इदम् । ॐ दैवीभ्यस्तनूभ्यः स्वाहा ।। दैवीभ्यस्तनूभ्य इदम् ।। ॐ ऋद्ध्यै स्वाहा ।। ऋद्ध्या इदम् ।। ॐ समृद्ध्यै स्वाहा ।। समृद्ध्या इदम् ।। ॐ सर्वसमृद्ध्यै स्वाहा ।। सर्वसमृद्ध्या इदम् ।। ॐ यत इन्द्र भयामहे ततो नो अभयं कृधि ।। मघवञ्छग्धि तव तन्न ऊतये विद्विषो विमृधो जहि स्वाहा ।। अभयङ्करेन्द्रायेदम् ।। ॐ स्वस्तिददा विशस्पतिर्वृत्रहा विमृधो वशी ।। वृषेन्द्रः पुर एतु नः स्वस्तिदा अभयङ्करः स्वाहा ।। अभयङ्करेन्द्रायेदम् ।। ॐ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ।। यदा स्तोतृभ्यो महिगोत्रा रुजासि भूयिष्ठभाजो अधते स्याम स्वाहा ।। हरिवते वर्धमानायेदम् ।। ॐ अनाज्ञातं यदा ज्ञातं यज्ञस्य क्रियते मिथु ।। अग्ने तदस्य कल्पय त्वꣳहिवेत्थ यथातथꣳस्वाहा ।। अग्नय इदम् ।। ॐ पुरुषसम्मितो यज्ञो यज्ञः पुरुष सम्मितः ।। अग्ने तदस्य कल्पय त्वꣳहिवेत्थ यथातथꣳस्वाहा ।। अग्नय इदम् ।। ॐ यत्पाकत्रा मनसा दीनदक्षान यज्ञस्य मन्वते मर्तासः ।। अग्निष्टद्धोता क्रतुविद्विजानन्यजिष्ठो देवाꣳऋतुशो यजाति स्वाहा ।। अग्नय इदम् ।। ॐ भूरग्नये च पृथिव्यै च महते च

स्वाहा ॥ अग्नये पृथिव्यै महत इदम् ॥ ॐ भुवो वायवे चान्तरिक्षाय च महते च स्वाहा ॥ वायवेऽन्तरिक्षाय महत इदम् ॥ ओ३ सुवरादित्याय च दिवे च महते च स्वाहा ॥ आदित्याय दिवे महत इदम् ॥ ॐ भूर्भुवःसुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा ॥ चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् ॥ ॐ पाहि नो अग्न एनसे स्वाहा ॥ अग्नय इदम् ॥ ॐ पाहि नो विश्ववेदसे स्वाहा ॥ विश्ववेदस इदम् ॥ ॐ यज्ञं पाहि विभावसो स्वाहा ॥ विभावसव इदम् ॥ ॐ सर्वं पाहि शतक्रतो स्वाहा ॥ शतक्रतव इदम् ॥ ॐ पाहि नो अग्न एकया ॥ पाह्युत द्वितीयया । पाह्यूर्जं तृतीयया ॥ पाहि गीर्भिश्चतसृभिर्वसो स्वाहा ॥ अग्नय इदम् ॥ ॐ सप्त ते अग्ने समिधःसप्तजिह्वाः सप्तर्षयः सप्तधाम प्रियाणि ॥ सप्त होत्राः सप्तधा त्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन स्वाहा ॥ अग्नये सप्तवत इदम् ॥ ॐ पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुनीथ यज्ञैः ॥ घृतेन त्वं तनुवो वर्धयस्व सत्याः सन्तु यजमानस्य कामाः स्वाहा ॥ आदित्येभ्यो रुद्रेभ्यो वसुभ्यो ब्रह्मेभ्यो वसुनीथायेदम् ॥ इत्येकामाज्याक्तसमिधं हुत्वा, पुनरेतयैव स्रुवाहुतिं जुहुयात् इति प्रयोगरत्ने प्रयोगतिलके विश्वावित्रकारिकायामप्युक्तम् ॥ ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतः सुरुचो वेनआवः ॥ सबुध्निया उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः स्वाहा ॥ ब्रह्मण इदम् ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् ॥ समूढमस्य पा३ सुरे स्वाहा ॥ विष्णव इदम् ॥ ॐ त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मा मृतात्स्वाहा ॥ त्र्यम्बकायेदम् ॥ ॐ गणानां त्वा गणपति३ हवामहे कविं कवीनामुपमश्रवस्तमम् ॥ ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनशृण्वन्नूतिभिःसीद सादन३ स्वाहा ॥ गणपतय इदम् ॥ ॐ जातवेदसे सुनवाम

सोममराती यतो निदहाति वेदः ।। सनः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहा ।। दुर्गाया इदम् ।।
ॐ ब्रह्मप्रतिष्ठा मनसो ब्रह्मवाचः ।। ब्रह्मयज्ञाना॒ꣳहविषामाज्यस्य ।। अतिरिक्तं कर्मणो यच्च हीनं ।। यज्ञः पर्वाणि
प्रतिरन्नेति कल्पयन् स्वाहाकृताहुतीरेतु देवान् स्वाहा ।। यज्ञायेदम् ।। ॐ आश्रावितमत्याश्रावितं वषट्कृतमत्यनूक्तं
च यज्ञे ।। अतिरिक्तं ..... देवान् स्वाहा ।। यज्ञायेदम् ।। ॐ यद्वो देवा अतिपादयानि ।। वाचा चित्प्रयतं देवहेडनम् ।।
अरायो अस्मा॒ꣳअभिदुच्छुनायते ।। अन्यत्रास्मिन्मरुतस्सन्निधेतन स्वाहा ।। देवेभ्यो मरुद्भ्य इदम् ।। ॐ ततम्म
आपस्तदुतायते पुनः ।। स्वाधिष्ठाधीतिरुचथायशस्यते ।। अय॒ꣳसमुद्र उत विश्वभेषजः ।। स्वाहाकृतस्य समुतृप्णुतर्भुवः
स्वाहा ।। ऋभुभ्य इदम् ।। ॐ क्षेत्रस्य पतिना वय॒ꣳहितेनेव जयामसि ।। गामश्वं पोषयित्न्वासनोमृडातीदृशे स्वाहा ।।
क्षेत्रपतय इदम् ।। ॐ वास्तोष्पते प्रतिजानीह्यस्मान्त्स्वावेशो अनमीवो भवानः ।। यत्वेमहे प्रतितन्नोजुषस्व शन्न एधि
द्विपदे शं चतुष्पदे स्वाहा ।। वास्तोष्पतय इदम् ।। ॐ विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजा॒ꣳसि यो
अस्कभायदुत्तर॒ꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः स्वाहा ।। विष्णव इदम् ।। ॐ तदस्य प्रियमभिपाथो अश्यान्नरो यत्र
देवयवो मदन्ति ।। उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः स्वाहा ।। विष्णव इदम् ।। ॐ प्रतद्विष्णुस्तवते
वीर्याय मृगो न भीमः कुचरो गिरिष्ठाः ।। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा स्वाहा ।। विष्णव
इदम् ।। ॐ परो मात्रया तनुवा वृधान न ते महित्वमन्वश्नुवन्ति ।। उभे ते विद्म रजसी पृथिव्या विष्णो देव त्वं परमस्य

वित्से स्वाहा ॥ विष्णव इदम् ॥ ॐ विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् ॥ ध्रुवासो अस्य कीरयो जनास उरुक्षितिꣳसुजनिमा चकार स्वाहा ॥ विष्णव इदम् ॥ ॐ त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा ॥ प्रविष्णुरस्तु तवसस्तवीयान् त्वेषꣳह्यस्य स्थविरस्य नाम स्वाहा ॥ विष्णव इदम् ॥ ॐ यदस्य कर्मणोऽत्यरीरिचं यद्वान्यूनमिहाकरम् ॥ अग्निष्टत्स्विष्टकृद्विद्वान्त्सर्वꣳस्विष्टꣳसुहुतं करोतु मेऽग्नये स्विष्टकृते सुहुतहुत आहुतीनां कामानाꣳसमर्धयित्रे स्वाहा ॥ (इत्युत्तरार्धपूर्वार्धे) अग्नये स्विष्टकृत इदम् ॥ अथाज्येन परिधीन् मध्यमदक्षिणोत्तरकमेणानक्ति ॥ अथ प्रागादिस्थितपरिस्तरणदर्भानादाय आज्यस्थाल्यामग्रमध्यमूलानि सम्मृज्य दर्भमेकं पृथक्कृत्य दर्भत्रयं प्राञ्चं ऊर्ध्वाग्रं अतिर्यञ्चं अकम्पयन्नग्रादारभ्य मूलान्तं दाहयन्नेव प्रास्येत् ॥ पृथक्कृतमपि तथैव प्रास्य ॥ मध्यमं परिधिमनुप्रहृत्य ॥ अथेतरौ युगपत्प्रहृत्य द्वेऊर्ध्वसमिधावपि प्रहृत्य तेषु सꣳस्रावं जुहोति तूष्णीम् ॥ प्रजापतय इदम् ॥ "यत्तूष्णीं तत्प्राजापत्यम्" इति श्रुतेः ॥ ॐ तच्छंयोरावृणीमहे ॥ गातुं यज्ञाय ॥ गातुं यज्ञपतये ॥ दैवी स्वस्तिरस्तु नः स्वाहा ॥ शंयुवाकायेदम् ॥ ॐ स्वस्तिर्मानुषेभ्यः ॥ उर्ध्वं जिगातु भेषजम् ॥ शन्नो अस्तु द्विपदे ॥ शं चतुष्पदे स्वाहा ॥ शंयुवाकायेदम् ॥ अथ सर्वप्रायश्चित्तं करिष्ये ॥ ॐ भूर्भुवःसुवः स्वाहा ॥ प्रजापतय इदम् ॥ [1]अथ पूर्णाहुतिः । ॐ यज्ञ यज्ञं गच्छ यज्ञपतिं गच्छ स्वां योनिं गच्छ स्वाहैष ते यज्ञो यज्ञपते सह सूक्तवाकः सुवीरः स्वाहा देवा गातुविदो गातुं वित्वा गातुमित मनसस्पत इमन्नो देव देवेषु यज्ञꣳस्वाहा वाचि स्वाहा वातेधाः स्वाहा ॥ देवेभ्यो गातुविभ्द्यो यज्ञायेदम् ॥ ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ॥ कविꣳसम्राजमतिथिं

[1] फल-वस्त्र-भूषण-हिरण्यादिकं हौम्यद्रव्यं वा हनेदिति विष्णुभट्टीये प्रयोगसारे चोक्तम् ॥ "इदं फलं मया देव स्थापितं तु हुताशन ॥ तेन मे सुफलावाप्तिर्भवेज्जन्मनि ॥ अथ

जनानामासन्नापात्रं जनयन्त देवाः स्वाहा ॥ मूर्घाग्नय इदम् ॥ (अत्र 'ॐ वसोर्धारां जुहोति' इत्यनुवाकेन 'अन्नाद्यवि' इत्यन्तेन वसोर्धारा शिष्टाचारप्राप्ता कारिकोक्ता च ॥ स चानुवाको ग्रहशान्त्यन्ते लिख्यते ॥) ॐ पूर्णाहुतिमुत्तमां जुहोति ॥ सर्वं वै पूर्णाहुतिः ॥ सर्वमेवाप्नोति ॥ अथो इयं वै पूर्णाहुतिः ॥ अस्यामेव प्रतितिष्ठति ॥ (एतदनन्तरम् = ॐ नमस्ते हरसे शोचिषे नमस्ते अस्त्वर्चिषे ॥ अन्यन्ते अस्मत्तपन्तु हेतयः पावको अस्मभ्यꣳशिवो भव ॥ ॐ अग्ने नय सुपथा राये 'अस्मान्' विश्वानि देव वयुनानि विद्वान् ॥ युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्ति विधेम ॥ ॐ प्रवः शुक्राय भानवे भरध्वं ॥ हव्यं मतिं चाग्नये सुपूतम् ॥ यो दैव्यानि मानुषा जनूꣳषि ॥ अन्तर्विश्वानि विद्मना जिगाति ॥ ॐ अच्छागिरो मतयो देवयन्तीः ॥ अग्नियन्ति द्रविणं भिक्षमाणाः ॥ सुसन्दृशꣳसुप्रतीकꣳस्वञ्चम् ॥ हव्यवाहमरतिं मानुषाणाम् ॥ ॐ अग्ने त्वमस्मद्युयोध्यमीवाः ॥ अनग्नित्रा अभ्यमन्त कृष्टीः ॥ पुनरस्मभ्यꣳसुविताय देवाः ॥ क्षां विश्वेभिरजरेभिर्यजत्र ॥ ॐ अग्ने त्वं पारयानव्यो अस्मान् ॥ स्वस्तिभिरति दुर्गाणि विश्वा ॥ पूश्च पृथ्वी बहुला न उर्वी ॥ भवातोकाय तनयाय शंयोः ॥ ॐ प्रकारवो मनना वच्यमानाः ॥ देवद्रीचीं नयत देवयन्तः ॥ दक्षिणा वाड्वाजिनी प्राच्येति ॥ हविर्भरन्त्यग्नये घृताची ॥ ॐ सकृत्ते अग्ने नमः ॥ द्विस्ते नमः ॥ त्रिस्ते नमः ॥ चतुस्ते नमः ॥ पञ्चकृत्वस्ते नमः ॥ दशकृत्वस्ते नमः ॥ शतकृत्वस्ते नमः ॥ सहस्रकृत्वस्ते नमः ॥ अपरिमितकृत्वस्ते नमः ॥ नमस्ते अस्तु मा मा हिꣳसीः ॥ नमस्ते गार्हपत्याय० ॥ काण्डद्वयमुपात्ताय० ॥ यज्ञेशाच्युत गोविन्द माधवानन्त

केशव ॥ कृष्ण विष्णो हृषीकेश तुभ्यं विश्वात्मने नमः ॥ (इति अग्निप्रार्थनामन्त्राः शिष्टै पठ्यमाना दृश्यन्ते ॥ अतोऽत्र अध्येतृसौकर्याय निवेशिताः ॥) अथ हुतशेषनिधानप्राशनाद्युपरिष्टात्तन्त्राण्यप्यत्रैव कार्याणि ॥ अत्र कारिका 'हुतशेषनिधानं च प्राशनं मूर्ध्नि चाहुतिम् ॥ कुर्यात्कर्मसमाप्तेः प्राक् परिषेकविसर्जनात्' इति ॥ सर्वत्रानाम्नातेषु व्याहृत्या हुतशेषनिधानं प्राशनं चेति प्रयोगसारे ॥ पुनर्जुषस्वन इत्यादि ॥ अदितेऽन्वमꣳस्थाः ॥ अनुमतेऽन्वमꣳस्थाः ॥ सरस्वतेऽन्वमꣳस्थाः ॥ देवसवितः प्रासावीः ॥ इति पूर्ववत् प्रागादिपरिषिच्य अथोत्थाय समिद्धस्त उपतिष्ठते ॥ ॐ यत्ते अग्ने तेजस्तेनाहं तेजस्वी भूयासम् ॥ यत्ते अग्ने वर्चस्तेनाहं वर्चस्वी भूयासम् ॥ यत्ते अग्ने हरस्तेनाहꣳहरस्वी भूयासम् ॥ मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु ॥ मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु ॥ मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥ इति षड्भिरुपस्थाय अथोपविश्य ॥ ॐ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ॥ वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तो नमसा विधेमते ॥ इति प्राग्वोदग्वा हुतभस्म गृहीत्वा ॥ 'ओजोसि' इति ललाटे ॥ 'सहोसि' इति कण्ठे ॥ 'बलमसि' इति दक्षिणबाहुमूले ॥ 'भ्राजोसि' इति कण्ठपृष्ठे ॥ 'देवानां धाम नामासि' इति नाभौ ॥ 'विश्वमसि विश्वायुः' इति हृदये ॥ 'सर्वमसि सर्वायुरभिभूरोम्' इति शिरसि ॥ इत्यभिमृश्य ॥ मन्त्रहीनं क्रियाहीनं भक्तिहीनं हुताशन ॥ यद्धुतं तु मया देव परिपूर्णं तदस्तु मे ॥ अज्ञानाद्वा प्रमादाद्वा वैकल्यात्साधनस्य वा ॥ यन्यूनमतिरिक्तं च तत्सर्वं क्षन्तुमर्हसि ॥ श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन ॥ अन्यथा शरणं नास्ति त्वमेव शरणं मम ॥ तस्मात्कारुण्यभावेन रक्ष रक्ष हुताशन ॥ इति प्रार्थ्य ॥ प्रणीतापात्रमग्नेः पश्चाद्बर्हिषि निधाय अभिमृशन् दिशो मार्जयते ॥ ॐ सदसि सन्मे भूयाः सर्वमसि सर्व मे भूयाः पूर्णमसि पूर्णं मे भूया अक्षितमसि मामेक्षेष्ठाः ॥ ॐ प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् ॥ ॐ दक्षिणायां दिशि मासाः

पितरो मार्जयन्ताम् ॥ अप उपस्पृश्य ॥ॐ प्रतीच्यां दिशि गृहाः पशवो मार्जयन्ताम् ॥ ॐ उदीच्यां दिश्याप ओषधयो वनस्पतयो मार्जयन्ताम् ॥ ॐ ऊर्ध्वायां दिशि यज्ञः संवत्सरो यज्ञपतिर्मार्जयन्ताम् ॥ इति कुशाग्रैः तत्तद्दिक्षु मार्जयित्वा ॥ 'ॐ समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपि गच्छत ॥ अच्छिद्रः प्रजया भूयासं मा परासेचिमत्पयः' इति पराचीर्निनीय ताभिरद्भिः कुशाग्रैर्दम्पती प्रोक्षेत् ॥ अत्र यजमानः वामपार्श्वस्थितपत्न्यञ्जलौ प्रणीतापात्रजलं प्राङ्मुखं निषिच्य आचार्योऽञ्जलिस्थजलैः पापनिरसनार्थं यजमानं पत्नीं च प्रोक्षति पत्नी तज्जलं बर्हिषि निषिञ्चति ॥ अथवा यजमानः स्ववामपाणिं बर्हिषि निधाय उत्तानीकृत्य दक्षिणपाणिना प्रणीतापात्रं गृहीत्वा तज्जलं प्रत्यङ्मुखं तत्र निषिच्य 'ता आपः समुद्रं गच्छन्ति' इति ध्यायति आचार्यः पाणिस्थजलैः यजमानं पत्नीं च प्रोक्षेत् ॥ अथ ब्रह्मणे वरं ददाति 'ब्रह्मन्वरं ते ददामि' इति (गामित्यर्थः) ॥ यथाशक्ति तन्मूल्यं वा दद्यात् ॥ अनुपविष्टे ब्रह्मणि ब्राह्मणमेकं भोजयित्वा यथाशक्ति दक्षिणां दत्वा सदस्येभ्यश्च दक्षिणां दत्वा ॥ 'यस्य स्मृत्या च नामोक्त्या तपो यज्ञक्रियादिषु ॥ न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्' ॥ अनेनामुकहोमकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ इतीश्वरार्पणं कृत्वा ॥ 'नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये ॥ नम आहवनीयाय महावेद्यै नमो नमः ॥ काण्डद्वयमुपात्ताय कर्मब्रह्मस्वरूपिणे ॥स्वर्गापवर्गदात्रे च यज्ञेशाय नमो नमः ॥ इति नमस्कृत्य ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ तद्विष्णोः स्मरणादेव सम्पूर्णं स्यादिति श्रुतिः ॥ विष्णो विष्णो विष्णो इति विष्णुस्मरणं कुर्यात् ॥ इति सर्वसाधारणाग्निमुखप्रयोगः ॥

अथाग्निहोत्रिकप्रयोगः ॥ अथ देवयजनोल्लेखनप्रभृत्यग्निप्रतिष्ठापनान्तं कृत्वा ॥ प्राणानायम्य देशकालौ सङ्कीर्त्य अमुकहोमं करिष्ये ॥ अमुकहोमः कर्म आग्निहोत्रिकं तन्त्रम् ॥ मृडोनामाग्निरिति पूर्णाहुतौ ॥ अन्यत्र तत्रतत्रोक्ताग्निः ॥ अमुको देवता ॥ आज्यं हविः ॥ अग्निः स्विष्टकृत् ॥ आज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि सङ्कल्प्य अन्वाधानादिकृत्वा ॥ पात्रासादनकाले 'आज्यस्थालीं स्रुवं चैव स्रुचं च समिधं तथा ॥ कूर्चं प्रोक्षणपात्रं च सादयेदाग्निहोत्रिके' इत्यासाद्य ॥ पवित्रकरणादिप्रोक्षण्याज्यसंस्कारस्रुक्सम्मार्जनान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा उपरि समिधं निधाय कूर्चे स्रुचं निधाय ॥ 'जुषस्वन' इत्यादि 'अदितेनुमन्यस्व'

इत्यादिभिः परिषिच्य 'अग्नये नमः' इत्यादिभिरभ्यर्च्य समिधमग्नौ निधाय आद्यन्तयोः स्पृष्ट्वा तस्यामादीप्तायां यत्कर्म करोति तस्य प्रधानमन्त्रान् सर्वान्त्सहैवानुच्छ्वसन्ननुद्धृत्य याज्यानुवाक्यानुरूपं विना सर्वान्ते स्वाहाकारे समिधोपरार्धे सकृदेवार्धं जुहोति ॥ मन्त्रलिङ्गदेवताभ्य उद्देशत्यागः ॥ ततः स्रुचं सकृत्सन्ताप्य अथाग्नये स्विष्टकृते स्वाहेति पूर्वामाहुतिमतिहाय समिध्येव पूर्वार्धे हुत्वा अथ स्रुचं त्रिः सन्ताप्य कूर्चे निधाय प्रातःकालिके कर्मण्यूर्ध्वमुन्मृज्य प्राच्युत्तानेन पाणिना कूर्चे स्रुग्बिलस्थघृतलेपमुन्मार्ष्टि तूष्णीमुत्तरभागे ॥ अथ चेत् अन्यकालिकं कर्म प्राचीनावीती तर्ह्यवाचीनमवमृज्य प्रतीच्यानीय पाणिना कूर्चे लेपन्निमार्ष्टि तूर्ष्णीं दक्षिणभागे अप उपस्पृश्य यज्ञोपवीती द्विरङ्गुल्या प्राश्य अप आचम्य उदङ्मुखः प्राचीनदण्डया स्रुचा हस्तेन वा भक्षयित्वा अप आचम्य दर्भैः स्रुचं निमृज्य निष्टप्य अद्भिः पूरयित्वा पात्रेषु स्थापयित्वा सर्वप्रायश्चित्तार्थं मिन्दाहुतीव्याहृतीश्च हुत्वा उत्तरपरिषेकादिकं कुर्यात् ॥ इत्याग्निहोत्रिकविधिः ॥६॥ अथाऽपूर्विकम् ॥ अथाऽपूर्विके स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा सङ्कल्प्य अन्वाधाय ॥ पात्रासादनकाले 'आज्यस्थालीं स्रुवं चैव चरुस्थालीं समेक्षणाम् ॥ दर्वीं च प्रोक्षणीं चैव चतस्रः समिधस्तथा' एतान्यासाद्य ॥ पवित्रकरणादि हविर्निर्वापप्रोक्षणाज्यसंस्काराग्न्यलङ्करणान्तं कृत्वा ताश्चतस्रः समिधोभ्याधाय व्याहृतीर्हुत्वा पूर्ववद्धविरादाय तत्तदुक्तमन्त्रैर्नाममन्त्रैर्वा पक्वं हुत्वा पूर्ववत्स्विष्टकृतमवदाय यथागोत्रमभिघार्य 'अग्नये स्विष्टकृते स्वाहा' इति नाममन्त्रेण स्विष्टकृतं हुत्वा मिन्दाहुतीव्याहृतीश्च हुत्वा परिस्तरणप्रहरणाद्युत्तरपरिषेकान्तं कृत्वा समापयेत् ॥ 'न परिधिर्नच ब्रह्मा न प्रणीता न बर्हिषः ॥ न च स्विष्टकृदादीनि तन्त्रमापूर्विकं स्मृतम् ॥ आग्निहोत्रापूर्विकयो नाघारौनचचक्षुषी नमुखाहुतयो युक्तोवहादिद्वादशैव च ॥ याज्यापुरोनुवाक्यं च प्रधानादौ नयोजयेत् । न हव्यवाहस्विष्टं च न यदस्य जयादयः इतिकारिकायाम् ॥ एतेषां त्रयाणां तन्त्राणां परस्परसङ्करं न कुर्यात् ॥ अशक्तः सङ्कटे रोगे द्रव्याभावे नृपाद्भये ॥ कुर्यादापूर्विकेनैव सुकृता चैव सा भवेत् ॥' इत्यापूर्विकविधिः ॥६॥ अथापूर्वतन्त्रं गृह्यसूत्रे ॥ अथातोपूऽर्वविधिं व्याख्यास्यामः ॥ परिसमूह्य पर्युक्ष्य परिस्तीर्य परिषिच्य उपसमाधाय अलङ्कृत्य यावदान्मातमाज्याहुतीर्जुहोत्याद्यन्तयोः व्याहृतिभिः परिधानं प्रणीताप्रणयनं ब्रह्मोपवेशनं च न विद्यते इति ॥ इत्यपूर्वविधिः ॥ इति वेङ्कटेशीयप्रयोग मालायां आघाराद्यग्निमुखप्रयोगः ॥

अथ सर्वकर्माङ्गप्रायश्चित्तम् ॥ तस्य कालः 'प्रधानस्यादितोन्ते वा प्राक् स्विष्टकृत एव वा ॥ प्रायश्चित्ताहुतीः कुर्यादर्थलुप्तेष्वनादरः' (अर्थलुप्तेषु प्रयोजनसून्येष्वित्यर्थः) इति ॥ तत्र प्रायश्चित्तमेव ॥ अथ होमार्थमुपलिप्तं देशं श्वा वैडको वा कीटो वा पिण्डकारी गच्छेत्तं देशं पुनरुपलिप्य प्रोक्षति ॥ ॐ देवस्य त्वा ..... हस्ताभ्यामग्नेस्तेजसा प्रोक्षामि' इति प्रोक्ष्य स्थण्डिलमुद्धरेत् ॥ अथोद्धृतं स्थण्डिलं गौरश्वो वा श्वापदमधितिष्ठेत् 'ॐ शन्नो देवी ..... रभिस्रवन्तु नः' इति तस्य पदमभ्युक्ष्य ॥ 'ॐ पृथिवि देवयजन्योषध्यास्ते मूलं माहिꣳसिषम्' इति जपति ॥ अथ यदि प्रणीतापात्रं भिद्येत तदभिमन्त्रयते 'ॐ अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः' इति ॥ अथान्यदाहरति 'ॐ घर्मो देवाꣳअप्येतु' इति पूरयित्वा उपतिष्ठते 'ॐ भूर्भुवःसुवः' इति ॥ अथ यदि प्रणीतानां प्रणीयमानानां वा विप्रषो यदि पतेयुः स्रवेद्रा

'आपोहिष्ठा' इति तिसृभिर्व्याहृतिभिश्च पूरयित्वा स्रावितमभिमन्त्रयते ।। 'ॐ अक्षितोस्यक्षित्यै त्वा मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोके' इति ।। अथ पूरितमुपतिष्ठते ।। 'ॐ भूरायुर्मे धारयत प्राणान्मे धारयत प्रजांमे धारयत पशून्मे धारयत मा म आयुः प्राणाः प्रजाः पशवः परासिच्येरन्' इति ।। अथ जुहोति 'ततम्म आपस्तदुतायते पुनः ।। स्वादिष्ठाधीतिरुचथा यशस्यते ।। अय॑ँसमुद्र उतविश्वभेषजः ।। स्वाहाकृतस्य समुतृप्णुतर्भुवः स्वाहा ।। ऋभुभ्य इदम्' ।।६।। अथ आज्यस्थालीभेदे 'ॐ अभिन्नो घर्मो जीरदानुर्यत आत्तस्तदगन्पुनः' इत्यभिन्त्र्य आज्यं संस्कृत्य स्रुचि चतुर्गृहीतं गृहीत्वा ।। ॐ इध्मो वेदिः परिधयश्च सर्वे यज्ञस्यायुरनुसञ्चरन्ति स्वाहा ।। यज्ञायेदम् ।। इति हुत्वा अथान्यामाहरति 'ॐ घर्मोदेवा॑ँअप्येतु' इति ।। सर्वत्र स्रुव-दर्वी-कूर्च-प्रस्तर-बर्हिः-पवित्रेध्म-परिधिद्रव्यसम्भाराणां छेददाहोपघातेषु नाशे वाऽन्यं यथालिङ्गं कृत्वाऽसाद्य 'ॐ त्वं नो अग्ने०, सत्वन्नो अग्ने०त्वमग्ने, अयासि०, प्रजापते०' इति चतुर्भिः स्रुवाहुतीः जुहुयात् ।। परिस्तरणदाहे 'ॐ अग्नये क्षामवते स्वाहा ।। अग्नये क्षामवत इदम्' इति हुत्वा परिस्तृणाति 'ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ।। अस्माकमस्तु केवलः ।।१।। ॐ इन्द्र नरोने मधिता हवं ते यत्पार्यायुनजते धियस्ताः ।। शूरो नृषाताशवसश्चकान आगोमति व्रजे भजात्वन्नः ।।२ ।। इति द्वाभ्या परिस्तीर्य 'ॐ इन्द्राय स्वाहा' इति पुनः जुहुयात् ।। परिधिदाहे अन्येन परिधाय 'ॐ परित्वाऽग्ने पुरं वयं विप्र॑ँसहस्य धीमहि ।। धृषद्वर्णं दिवेदिवे भेत्तारं भङ्गुरावतः स्वाहा ।। अग्नय इदम् ' इति जुहुयात् ।। वस्त्राणां प्रोक्षितानां छेददाहोपघातेषु अन्यद्यथालिङ्गं धृत्वा

'ॐ सोमाय स्वाहा' इति आहुतिं जुहुयात् ॥ सर्वत्र स्कन्ने भिन्ने छिन्ने कर्मविपर्यासे दाहे ऊनातिरेके पवित्रनाशे पात्रभेदे च द्वे मिन्दाहुती जुहुयात् ॥६॥ अथ मशकमक्षिककेशकीटपिपीलिकादिभिः हविषि दुष्टे तदुत्सृज्य प्रजापतेनत्वदिति हुत्वा अन्यदासादयेत् ॥ मन्त्रस्य पदाक्षरस्वरवर्णवृत्तादिभ्रंशे 'ॐ आभिर्गीर्भिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ॥ यदा स्तोतृभ्यो महि गोत्रा रुजासि भूयिष्ठभाजो अध ते स्याम स्वाहा ॥ हरिवते वर्धमानायेदम्' इति ॥ परिस्तरादिकर्मविपर्यासे 'ततम्म आपो यत्पाकत्रा मनोज्योतिः' इति जुहुयात् ॥ यदि परकीयवस्त्रप्रांताद्यभिघातः स्यात्तदभिमन्त्रयते 'ॐ सिगसिनसि वज्रोसि नमस्ते अस्तु मा माहिꣳसीः' इति ॥ दशासूत्रमादाय मुखवातेन ध्वंसयेत् ॥ यदि गौः वा श्वा वा अश्वमृगमेषमहिषदंष्ट्रिणामन्यद्वा श्वापदमन्तराग्र्यपसव्यं गच्छेत्तस्य पदं शन्नोदेवीरित्यभ्युक्ष्य जपति 'ॐ तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः ॥ दिवीव चक्षुराततम् ॥ तद्विप्रासो विपन्यवो जागृवाꣳसः समिन्धते ॥ विष्णोर्यत्परम पदम्' इति ॥ अथवैतेषां पदानि इदं विष्णुरिति भस्मना ध्वंसयित्वा मनोज्योतिरिति स्रुवाहुतिं जुहुयात् ॥ यद्येते गौरश्वादयो रौद्रमभिव्याहरेयुः 'ॐ त्वमग्ने रुद्रो असुरो महो दिवस्त्वꣳशर्धो मारुतं पृक्ष ईशिषे ॥ त्वं वातैररुणैर्यासि शङ्गयस्त्वं पूषा विधतः पासि नुत्मना स्वाहा ॥ अग्नय इदम् ॥ ॐ आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः ॥ अग्निं पुरा तनयित्नो रचित्ताद्धिरण्यरूपम वसे कृणुध्वꣳस्वाहा ॥ रुद्रायाग्नय इदम्' इति जुहुयाज्जपेद्वा ॥ यदि पक्षिणोभिव्याहरेयुस्तां वाचमनुमन्त्रयते 'ॐ द्विपच्चतुष्पदस्माकꣳसर्वमस्त्वनातुरम् ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु शंससि ॥ स्वस्ति नः शकुने अस्तु प्रतिनः सुमना भव' इति ॥ अथ यदि सृगाली वानरी वाश्येतत्तां वाचमनुमन्त्रयते 'ॐ दीर्घमुखिदुर्हणु ॥ मास्म दक्षिणतो वदः ॥ यदि दक्षिणतो वदा द्विषन्तं मेऽवबाधासै' इति ॥ अथ

यद्यग्नेरेकदेशमुपहरेयुस्तदा मनोज्योतिरिति स्रुवाहुतिं जुहुयात् ॥ यदि परिकासे परिक्षवे वा अप उपस्पृश्य यथालिङ्गं जपेत् 'ॐ अनुहवं परिहवं परीवादं परिक्षपम् ॥ दुःस्वप्नं दुरुदितं तद्विषद्भ्यो दिशाम्यहम् ॥ अनुहूतं परिहूतꣳशकुनेर्यदशाकुनम् ॥ मृगस्य स्रुतमक्ष्णया तद्विषद्भ्यो दिशाम्यहम्' इति ॥ दीक्षितोऽन्यदीक्षितेन न समेयाद्यदि समेयात् 'ॐ कयानश्चित्र आभुवदूती सदा वृधः सखा ॥ कया शचिष्ठया वृता' इति जपेत् ॥ सर्वत्र दीक्षितः सूर्योदयास्तसमये वा देवयजनागारादन्यत्र यदि शयीत 'ॐ सूर्यो मा देवो देवेभ्यः पातु वायुरन्तरिक्षाद्यजमानोग्निर्मा पातु चक्षुषः ॥ सक्षशूष सवितविश्वचर्षण एतेभिः सोमनामभिर्विधेमते तेभिः सोमनामभिर्विधेमते' इति जपेत् ॥ अथ स्वयं प्रज्वलितेऽग्नौ 'ॐ उद्दीप्यस्व जातवेदोपघ्नं निर्ऋतिं मम ॥ पशूँश्च मह्यमावह जीवनं च दिशो दिश स्वाहा ॥ जातवेदसेऽग्नय इदम् ॥ ॐ मा नो हिꣳसीज्जातवेदो गामश्वं पुरुषं जगत् ॥ अबिभ्रदग्न आगहि श्रिया मा परिपातय स्वाहा ॥ जातवेदसेऽग्नय इदम्' इति द्वाभ्यां समिधौ जुहुयात् ॥ अथ द्विजश्व-चाण्डाल-बिडाल-काक-खर-मृग-पशु-पक्षि-सरीसृपाणामन्यतमः कीटो वा ऋत्विजोग्नीनन्तरागच्छेयुः तदा द्वादशगृहीतेन स्रुचं पूरयित्वा 'ॐ जातवेदसे० ॥ जातवेदसेऽग्नय इदम् ॥ ॐ मनोज्योतिः० ॥ मनसे ज्योतिष इदम् ॥' महाव्याहृतीस्तिस्रस्तन्तुमतीश्च विग्राहं जुहुयात् ॥ अथ सप्तपाकयज्ञानां द्रव्यहविर्मन्त्रसंस्कारादीनां अतिपन्ने स्कन्न-भिन्न-भग्न-नष्ट-दुष्ट-विपरीत-दग्ध-अति-शृत-अशृतानां अनाम्नातेषु ॐ मनोज्योतिरयाश्चाग्नेः, यदस्मिन्कर्मणि, स्वस्ति न इन्द्रो वृद्धश्रवाः, व्याहृतयश्च प्रायश्चित्तम् ॥ अथ गर्भाधान-पुंसवन-सीमन्तोन्नयन-विष्णुबलि-जातकर्म-नामकरण-उपनिष्क्रमण-अन्नप्राशन-कर्णवेधन-चौल-

व्रतादीनां मुख्यकालातिक्रमे-चित्तश्चेत्यादित्रयोदश, अग्निर्भूतानां इत्यादिरुद्रः पशूनामित्यन्तं चतुर्दश, ततम्म आपो, यत्पाकत्रा, मनोज्योतिः, मिन्दाहुती, महाव्याहृतीः, व्याहृतीश्च प्रायश्चित्तं जुहुयात्।। प्रधानादौ प्रधानादौ च व्याहृतिपूर्वकं द्वे द्वे मिन्दाहुती जुहुयात्।। अथ सर्वत्र विपरीतदर्भास्तरण-पवित्रकरण-पात्रासादन-प्रोक्षणीसंस्कारब्रह्म-प्रणीता-हविर्निर्वाप-आज्यसंस्कार-पर्यग्निकरण-स्रुवसम्मार्जन-परिधि-परिषेचनेध्माधाने-ॐततम्म आपो, यत्पाकत्रा, मनोज्योतिः, मिन्दाहुती महाव्याहृतीः व्याहृतीश्च जुहुयात्।। अथ सर्वत्र रौद्र-राक्षस-नैर्ऋति-यम-छेदन-भेदन-खनन विस्रंसन-निरसन-आत्माभिमर्शनेषु अप उपस्पृशेत्।। अथ 'स्कन्देद्धविर्गृहीतं तु चरुर्वा परिधेर्बहिः।। तद्भूपतय इत्यादिमन्त्रैः स्कन्नं तु मन्त्रयेत्।। सुरभिमतीतन्तुमती चेत्याभ्यां जुहुयात् ततः।। प्रणवंव्याहृतीः हुत्वा पुनः शेषं समाचरेत्' इति।। यथा 'ॐ भूपतये स्वाहा।। ॐ भुवनपतये स्वाहा।। ॐ भूतानांपतये स्वाहा।। इति स्कन्नं हविरभिमन्त्र्य।। ॐ दधिकाव्णो आकारिषं ..... तारिषत्स्वाहा।। दधिक्रावण इदम्।। ॐ तन्तुं तन्वन्० ।। तन्तुमत इदम्।। ओ३स्वाहा।। सवित्र इदम्।। व्याहृतीर्हुत्वा शेषं समाचरेत्।। अथवा शीतभस्मनि तत् निधाय मिन्दाहुतीहुत्वा अन्यं निर्वपेत्, आज्येन वा प्रचरेत्।। अथान्तरागमने।। ॐ चित्तिः स्रुक्।। चित्तमाज्यम्।। वाग्वेदिः।। आधीतं बर्हिः।। केतो अग्निः।। विज्ञातमग्निः।। वाक्पतिर्होता।। मन उपवक्ता।। प्राणो हविः।। सामाध्वर्युः।। वाचस्पते विधेनामन्।। विधेमते नाम।। विधेस्त्वमस्माकं नाम।। वाचस्पतिः सोमं पिबतु।। आस्मासु नृम्णं धात्स्वाहा।। वाचस्पतये ब्रह्मण इदम्।। ॐ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः।। अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततान स्वाहा।। अग्नये द्यावापृथिवीभ्यामिदम्।। इति सप्तपाकयज्ञेऽन्तरागमने ज्ञेयम्।। अथ मण्डूक-सर्प-मूषक-मार्जारान्तरागमने।। ॐ वाग्धोता।। दीक्षा पत्नी।। वातोध्वर्युः।। आपोभिगरः।। मनो हविः।। तपसि जुहोमि।। भूर्भुवःसुवः।। ब्रह्म स्वयम्भु।।

ब्रह्मणे स्वयम्भुवे स्वाहा ॥ ब्रह्मणेस्वयंभुव इदम् ॥ ॐ तच्छंयोरावृणीमहे ..... स्वस्तिरस्तु नः स्वाहा ॥ शंयुवाकाय इदम् ॥ ॐ स्वस्तिर्मानुषेभ्यः ..... चतुष्पदे स्वाहा ॥ शंयुवाकायेदम् ॥ ॐ अन्वग्निः० ॥ अग्नये द्यावापृथिवीभ्यामिदम् ॥ अथ पतितचाण्डालसूतिकोदक्यारजकादिवाक्यश्रवणे ॥ ॐ महाहविर्होता ॥ सत्यहविरध्वर्युः ॥ अच्युतपाजा अग्नीत् ॥ अच्युतमना उपवक्ता ॥ अनाधृष्यश्चाप्रतिधृष्यश्च यज्ञस्याभिगरौ ॥ अयास्य उद्गाता ॥ वाचस्पते हृद्विधेनामन् ॥ विधेम ते नाम ॥ विधेस्त्वमस्माकं नाम ॥ वाचस्पतिः सोममपात् ॥ मा दैव्यस्तन्तुच्छेदिमा मनुष्यः ॥ नमो दिवे ॥ नमः पृथिव्यै स्वाहा ॥ वाचस्पतये ब्रह्मण इदम् ॥ ॐ अन्वग्निरुषसा० ॥ अग्नये द्यावापृथिवीभ्यामिदम् ॥ इति जुहुयात् ॥ अथ श्रप्यमाणे चरौ यस्यां दिश्युत्सिच्येत तस्यै तस्यै देवतायै स्रुवाहुतिं जुहुयात् ॥ यथा ॥ पूर्वादि - ॐ इन्द्राय स्वाहा ॥ इन्द्रायेदम् ॥ ॐ अग्नये स्वाहा ॥ अग्नय इदम् ॥ ॐ यमाय स्वाहा ॥ यमायेदम् ॥ अप उपस्पृश्य ॥ ॐ निर्ऋतये स्वाहा ॥ निर्ऋतये इदम् ॥ अप उपस्पृश्य ॥ ॐ वरुणाय स्वाहा ॥ वरुणायेदम् ॥ ॐ वायवे स्वाहा ॥ वायव इदम् ॥ ॐ सोमाय स्वाहा ॥ सोमायेदम् ॥ ॐ ईशानाय स्वाहा ॥ ईशानायेदम् ॥ इति हुत्वा ॥ ॐ आप्यायस्व सन्तेपयाꣳसीति द्वाभ्यां आज्येन चरुं आप्याययति ॥ अथाग्नावुद्वाते ॥ अथ यदि होमकालेऽग्निरुद्वातः स्यात् अथवोपनयनाग्निर्विवाहाग्निर्जातकर्माग्निः श्मशानाग्निराचतुर्थादाद्वादशाहादासञ्चयनादुद्वातः स्यात् ॥ 'ॐ अपहता असुरा रक्षाꣳसि पिशाचा ये क्षियन्ति पृथिवीमनु ॥ अन्यत्रैतो गच्छन्तु यत्रैषां गतं मनः' इति तत्सर्वं भस्माद्भिः प्रोक्ष्य ॐ अयं ते योनिर्ऋत्विय' इति क्षिप्रं भस्म-समिधि-समारोप्य लौकिकाग्निं प्रतिष्ठाप्य सम्परिस्तीर्य आजुह्वान, उद्बुध्यस्वाग्न, इति द्वाभ्यामारोपितं

समिधमाधाय आज्यं संस्कृत्य स्रुवेणाज्यमादाय जुहोति ॥ 'ॐ अयाश्चाग्ने ॥ अग्नय अयस इदम् ॥ ॐ अग्निर्होता० ॥ इन्द्राय सोमायेदम् ॥ 'ॐ ब्राह्मण एक होता' इत्यादि दश, मिन्दाहुतीमहाव्याहृतीर्व्याहृतीश्च जुहुयात् ॥ अथ संस्कारान्तेऽग्नावुद्वाते तद्भस्मोष्णं 'अयं ते योनिर्ऋत्विय' इति समिधि समारोप्याजुह्वान उद्बुध्यस्वेति लौकिकाग्नौ समिधं आधाय आज्यं संस्कृत्य महाव्याहृतिभिः प्रणवेन मनस्वत्या च जुहुयात् ॥ अथान्वाधानेष्टिमध्ये सोमसूर्योपरागे प्राप्ते - ॐ उद्वयंतमसस्परि पश्यन्तो ज्योतिरुत्तरम् ॥ देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमꣳस्वाहा ॥ सूर्याय ज्योतिष इदम् ॥ ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः ॥ दृशे विश्वाय सूर्यꣳस्वाहा ॥ सूर्यायेदम् ॥ ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ आप्राद्यावापृथिवी अन्तरिक्षꣳसूर्य आत्मा जगतस्तस्थुषश्च स्वाहा ॥ द्यावापृथिवीभ्यामन्तरिक्षाय सूर्यायेदम् ॥ इति सूर्योपरागे ॥ ॐ आप्यायस्व समेतु ते० ॥ सोमायेदम् ॥ ॐ सन्ते पयाꣳसि० ॥ सोमायेदम् ॥ ॐ त्वन्नः सोम विश्वतो रक्षा राजन्नघायतः ॥ नरिष्ये त्वावतः सखा स्वाहा ॥ सोमायेदम् ॥ ॐ या ते धामानि दिवि या पृथिव्यां या पर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैः सुमना अहेडन्राजन्त्सोम प्रतिहव्यांगृभाय स्वाहा ॥ सोमायेदम् ॥७॥ मिन्दाहुतीव्याहृतीश्च जुहुयात् ॥ इति चन्द्रोपरागे ॥ अथ प्रधानकर्मण्यन्तरिते विपर्यासे च 'ॐ त्वन्नो अग्ने०, सत्वन्नो अग्ने०' इति द्वाभ्यां जुहुयात् ॥ अथाज्यस्थाली चरुस्थाली वोद्धृते चरुस्थालीवेपने स्पन्दने भेदने संसर्पणे वा प्रभूतेन सर्पिषाऽवसिच्याभिमन्त्रयते ॥ 'ॐ किमुत्पतसि किमुत्प्रोष्ठाः शान्ताः शान्तेरिहागहि ॥ अघोरो यज्ञियो भूत्वा सीदसदनꣳस्वम्' इत्यभिमन्त्र्य ।। ॐ त्वमग्ने अयास्ययासन्मनसा०, प्रजापते०, मिन्दाहुतीव्याहृतीश्च जुहुयात् ॥ अथ यदि मृन्मयस्थाली तामपोह्य ॥ 'ॐ भूमिर्भूमिमगान्माता मातरमप्यगात् ॥ भूयास्म

पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यताम्' इत्यथान्यदाहरति ॥ 'ॐ घर्मो देवा ँ अप्येतु' इति ॥ ब्रह्म प्रतिष्ठा मनस इति प्रतिष्ठाप्य पुनः ॐ ब्रह्म प्रतिष्ठा मनस० ॥ ब्रह्मण इदम् ॥ ॐ यद्वोदे ..... तन स्वाहा ॥ देवेभ्यो मरुद्भ्य इदम् ॥ ॐ यत्पाकत्रा० ॥ अग्नये देवेभ्य इदम् ॥ इति जुहुयात् ॥ ॥६॥ अथ गृहमेधिनो वा ब्रह्मचारिणो वाऽग्निरुद्वातः स्यात् होमकालातिक्रमे पर्वातिक्रमे आग्रयणेनानिष्पन्ननवान्नभक्षणे आज्यसंस्काराभावे स्कन्नावधूतमन्त्रहीनाधिकत्वेषु अकृतसीमन्तायां प्रसूतौ गोस्त्रियोर्यमलजन्मनि रजस्वलागमने पतितसम्भाषणे दिवामैथुने शूद्राभिगमने स्वप्ने रेतस्कन्ने चोदके मूत्रपुरीषकरणे कुमारस्य संस्काराकरणेऽग्नेश्च मिश्रणे देवतामन्त्रतन्त्रविपर्यासे कर्मविपर्यासे ब्रह्मचारिणो व्रतविपर्यासे दण्डोपवीतमेखलाकृष्णाजिनानां अधारणे दण्डभङ्गे सन्ध्याग्निकार्योदकुम्भभिक्षाध्ययनलोपेषु अन्येष्वेवंविधेषु प्रायश्चित्तम् ॥ उल्लेखनादाज्यसंस्कारान्तं कृत्वा चतस्रो व्याहृतीः 'पाहिनो अग्ने' इति पञ्च पुनर्व्याहृतिचतुष्टयं जुहुयात् ॥ एवं पाहित्रयोदशहोमं सर्वत्र कर्मान्ते जुहुयात् ॥ यथाकालकरणमविच्छिन्नं सन्ततं भवतीति सूत्रं ॥ अथाग्नौ मुखवात-हस्तवात-शूर्पादिवायुभिर्वा हते सावित्र्या जुहुयात् ॥ अथर्त्विजो यजमानस्य वोच्छिष्टस्पर्शे 'पवमानः सुवर्जन' इति जुहुयात् ॥ इति वेङ्कटेशीयप्रयोगमालायां प्रायश्चित्तप्रयोगः ॥ (अन्यान्यपि प्रायश्चित्तानि अन्यत्रोक्तानि आवश्यकत्वात् तान्यत्र लिख्यन्ते ॥ यथा 'मनुष्यमार्जारमृगाखुपूर्वा ब्रह्माग्निमध्ये यदि चेत् प्रयाताः ॥ ब्रह्मप्रतिष्ठा मनसोऽग्निहोता त्वग्नौ मनोज्योतिरिति स्रुवाज्यम्' इति ब्रह्माग्नि मध्येऽन्तरागमने ॥ यजमानाग्निमध्ये अन्तरागमने तु 'यजमानस्य वह्नेश्च गच्छेयुश्चान्तरे यदि ॥ पृथ्वीहोतादिनाऽन्वग्नौमनस्वत्याहुतिंहुनेत्' इति ॥ यदि विस्फोटितोऽङ्गारो निर्गतः परिधेर्बहिः ॥ अध्वर्यु-ब्रह्म-पत्न्यग्नि-पशूनां व्याधिमाहरेत् ॥ यजमानस्य च तदा प्रागारभ्य दिशां क्रमात् 'तदङ्गारं समाहृत्य स्रुवपृष्ठेन देशिकः ॥ मातमाद्येन मन्त्रेण माहिंसीरन्तकेन च ॥ अमुं स्थाने नाम चैषां प्रयोज्याग्नौ विनिक्षिपेत् ॥

सहस्रशृङ्गमन्त्रेण जुहुयाच्च स्रुवाहुतिम्' इति ।। अङ्गारस्य परिधिबहिर्भागे स्फोटे 'ॐ मा तमो मा यज्ञस्तमन्मा यजमानस्तमत् ।। नमस्ते अस्त्वाय ते ।। नमो रुद्र पराय ते ।। नमो यत्र निषीदसि ।। अमुं (नारायणशर्माणं) माहिꣳसीः इत्यनेन अङ्गारकणमग्नौ निक्षिप्य 'ॐ सहस्रशृङ्गो वृषभो जातवेदाः ।। स्तोम पृष्ठो घृतवान् सुप्रतीकः ।। मानो हासीन्मेत्थितो नेत्वा जहाम ।। गोपोषं नो वीरपोषं च यच्छ स्वाहा' इति स्रुवाहुतिं जुहुयात् ।। पुरोनुवाक्यायाज्यायाश्चान्तरुच्छ्वासे तु - 'पुरोनुवाक्यायाज्यान्तरुच्छवासे होतुरायुषः ।। क्षयः स्यादायुरायुर्दा इति द्वाभ्यां हुनेद्बुधः ।। प्रायश्चित्तं च जुहुयादथवा पाहिपञ्चकैः ।।' (आयुष्टे = आयुर्दाअग्ने इति द्वाभ्यां स्रुवाहुती जुहुयादित्यर्थः ।।)

अथौपासनप्रायश्चित्तम् ।। औपासनाग्निर्विवाहादारभ्य दम्पतीभ्यां यतो नित्यो धार्यः ।। यदि विवाहव्रतमध्येऽग्नावनुगते पूर्वोक्तप्रायश्चित्तमेव कुर्यात् ।। अत ऊर्ध्वमनुगते पत्नी पतिर्वा उपवसेत् ।। अथ सद्यःसन्धानपक्षेऽग्निं प्रतिष्ठाप्य अयाश्चाग्न इति जुहुयात् ।। द्वितीयेहनि सन्धाने मनस्वतीम् ।। तृतीये वारुणीम् ।। मनस्वत्या सह इमम्मे वरुणेति जुहुयात् ।। चतुर्थेह्नि तन्तुमतीः ।। मनोज्योतिरिमम्मे वरुणेति च हुत्वा तन्तुन्तन्वन्नुद्बुध्यस्वाग्नेत्रयस्त्रिꣳशत्तन्तव इति जुहुयात् ।। पञ्चाहादारभ्य द्वादशाहपर्यन्तमभ्यावर्तिनीः ।। पूर्वोक्ताहुतिभिः सहाग्नेभ्यावर्तिन्नग्नेअङ्गिरः पूनरूर्जा सहरय्येति जुहुयात् ।। द्वादशाहादूर्ध्वमनुगते यथा प्रकृति प्रणवेनाहरति (पुनः सन्धानं कुर्यादित्यर्थः) ।। नास्तिक्यादग्निं परित्यज्य प्राजापत्यं चरेत् ।। किञ्च आसायं कर्मणः प्रातराप्रातः सायङ्कर्मणः इति होमकालस्यावधेरुक्तत्वात् सायं होमः प्रभाते क्रियेत प्रातर्होमः सायङ्काले वा तदा कालातिपन्नप्रायश्चित्तार्थं मनस्वतीं जुहुयात् ।। विष्णुभट्टीयप्रयोगे तु 'आदशरात्राद्धोमाभावे मनस्वतीं जुहुयात्, आविंशतिरात्राद्धोमाभावे तिस्रस्तन्तुमतीर्जुहुयात्, आत्रिंशद्रात्राद्धोमाभावे त्वेकाहमुपवासः, आषष्ठिरात्रं त्र्यहमुपवासः, अतः परं प्राजापत्यं चरेत् ।। एवं षण्मासपर्यन्तम् ।। सत्यग्नौ होमाभावे पुनराधानं वर्जयित्वा षाण्मासप्रायश्चित्तमेव कुर्यात् ।। दशरात्रपर्यन्तं प्रायश्चित्तानन्तरमतीतहोमान् कुर्यात् ।। अत ऊर्ध्वं होमद्रव्यं परिगणय्य

श्रोत्रियाय दद्यात्' इति ।। गृह्यसूत्रे 'अथास्याहुतप्रायश्चित्तम् - मनोज्योतिरित्युपक्रम्य एकाहं मनस्वतीं द्व्यहं वारुणीं त्र्यहं तन्तुमतीश्चतुरहाद्द्वादशाहमभ्यावर्तिनीः' इति ।। कारिकायाम् 'कालात्यये तु होमस्य मनस्वत्यैव निष्कृतिः ।। अग्नेनयेत्र्यगृद्वयेन होमपार्वणहानिषु' इति तत्रैव 'एकाहहोमातिपत्तौ मनस्वत्याहुतिं हुनेत् ।। इमम्मे वरुणेत्याभ्यां द्व्यहे वापि त्र्यहे तथा ।। आभ्यां तन्तुमतीभिश्च चतूरात्रिव्यतिक्रमे ।। एभिः पूर्वादिकैश्चाग्नेऽभ्यावर्तिचतुष्टयैः ।। ऊर्ध्वं चतुरहादर्वाक् द्वादशाहादयं विधिः ।। अतो होमे व्यतीतेऽग्नेः पुनराधानमिष्यते' इत्युक्तत्वाद्द्वादशाहादूर्ध्वं षण्मासपर्यन्तं ''सत्यग्नौ होमाभाव'' इति विष्णुभट्टोक्तं, तस्य मूलं मृग्य शिष्टैरनादृतत्वात् ।। धार्याग्निपक्ष इति केचित् ।। अतो मुख्यकालातिक्रमे एकाहव्यतिक्रमे च मनोज्योतिरिति जुहुयात् ।। द्विदिने होमाभावे मनोज्योतिरिमम्मेवरुणेत्याभ्यां जुहुयात् ।। त्रिदिने होमाभावे मनोज्योतिरिमम्मेवरुण तन्तुन्तनवन्नुद्बुध्यस्वाग्ने त्रयस्त्रि्ँशत्तन्तव इति जुहुयात् ।। चतुरहादारभ्य द्वादशरात्रिपर्यन्तं होमाभावे पूर्वोक्तमनोज्योतिरित्यादिभिः सह अग्नेभ्यावर्तिन्नग्नेअङ्गिरः पुनरुर्जा सहरय्येत्येतैः जुहुयात् ।। द्वादशाहादूर्ध्वं षण्मासपर्यन्तं पुनराधानमेव कुर्यात् ।। षण्मासादूर्ध्वं प्राजापत्यकृच्छ्रं कृत्वा पुनराधानं कृत्वा षाण्मासप्रायश्चित्तं कुर्यात् ।। अथ यदि द्वादशरात्रादर्वागग्नावनुगते तस्यानुगतस्य या प्रकृतिः तत आहरणमुपवासश्चान्यतरस्य भार्यायाः पत्युर्वाऽपिवैतां जुहुयात् अयाश्चाग्न इति सूत्र उक्त त्वात् ।। सद्यश्चचेत् 'ॐ अपहता असुरा रक्षाँसि पिशाचा ये क्षियन्ति पृथिवीमनु ।। अन्यत्रैतो गच्छन्तु यत्रैषां गतं मनः' इति तत्सर्वं भस्म प्रोक्ष्य 'अयन्ते योनिः' इति तदुष्णं भस्म समिधि समारोप्य आजुह्वान उद्बुध्यस्वाग्न इति लौकिकाग्नौ समिधमाधाय आज्यसंस्कारं कृत्वा अयाश्चाग्न इति जुहुयात् ।। कालान्तरे चेत्पुनःसन्धानमेव कार्यम् ।।६।। अथ पुनःसन्धानप्रयोगः ।। तत्रादौ मन्त्रानुक्रमणिका ।। सप्ततेअग्ने तन्तुन्तन्वन्नुदबुध्यस्वाग्ने त्रयस्त्रि्ँशत्तन्तवोऽग्नेभ्यावर्तिन्नग्ने अङ्गिरः पुनरूर्जा सहरय्या

मनोज्योतिः प्रजापत अन्वग्निरयाश्चाग्न उद्वयमायुर्दा यन्मआत्मनोमिन्दाभूत्पुनरग्निः तत्सवितुर्महाव्याहृतयो व्याहृतयश्च होतव्या इति सूत्रम् ।। अथ शुचौ समे देशे गोमयेनोपलिप्य उद्धृत्यावोक्ष्य व्याहृतिभिः सिकतान्युप्य स्थण्डिलं कृत्वा ।। आखूत्करो वल्मीकवपा सूदः पुष्करपर्णं वराहविहतं शर्करा अश्वत्थौदूम्बरं पर्णं शमीविकङ्कता अशनिहता इत्येतेऽग्याधेयिकसम्भाराः ।। तेषु यथोपपन्नमाहृत्य व्याहतिभिर्निर्युप्य तत्र प्रणवेन लौकिकाग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ सङ्कीर्त्य नष्टमग्निं पुनःसन्धास्य इति सङ्कल्प्य पुनःसन्धानहोमः कर्माग्निहोत्रिकं तन्त्रं आपूर्विकं वा मृडोनामाग्निः अग्निस्तन्तुमान् अग्नेभ्यावर्ति मनोज्योतिः प्रजापतिः अग्निर्द्यावापृथिवी अग्निरयाः सूर्योज्योतिः अग्निर्वायुः सूर्यः प्रजापतिर्देवता आज्यं हविः एता अङ्गदेवताः प्रधानदेवताः ताः सर्वाः सन्निहिताः सन्तु एवं साङ्गेन कर्मणा सद्यो यक्ष्ये तदङ्गमन्वाधानं करिष्ये इति सङ्कल्प्य अन्वाधानं कृत्वा 'आज्यस्थालीं स्रुवं चैव स्रुचं च समिधं तथा ।। कूर्चं प्रोक्षणपात्रं च सादयेदाग्निहोत्रके' इति पात्राण्यासाद्य स्रुक्स्रुवसम्मार्जनान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा समिधमेकामग्नौ निधाय परिश्रिते पूर्णाहुतिं जुहोति ।। ॐ सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तर्षयः सप्तधाम प्रियाणि ।। सप्तहोत्राः सप्तधात्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन स्वाहा ।। अग्नये सप्तवत इदम् ।। ब्रह्मणे वरं ददाति ।। धेनुंवृषभमनड्वाहं हिरण्यं कांस्यं वासोवेति यथासम्भवं दत्वा ।। अथातिपन्नहोमद्रव्यं परिगणय्य ममौपासनविच्छित्तिदिनादारभ्यैतत् कालपर्यन्तमौपासनाहुतिपरिमितं द्रव्यं परिगणय्य ब्राह्मणाय दातुमहमुत्सृजे ।। इति ब्राह्मणाय दत्वा औपासनविच्छित्तिदोषपरिहारोस्त्विति वाचयित्वा ।। पुनश्चतुर्गृहीतं गृहीत्वा तिस्रस्तन्तुमतीर्विग्राहं जुहोति ।। ॐ तन्तुन्तन्वन्रजसो भानुमन्विहि ज्योतिष्मतः पथो रक्ष धिया कृतान् ।। अनुल्बणं वयतजोगुवामपोमनुर्भव जनया दैव्यं जनꣳस्वाहा ।। अग्नये तन्तुमत इदम् ।। ॐ उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च ।। पुनःकृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसीत्वयि तन्तुमेतꣳस्वाहा ।। अग्नये तन्तुमत इदम् ।। ॐ त्रयस्त्रिꣳशत्तन्तवो ये वितत्निरे य इमं

यज्ञꣳस्वधया ददन्ते तेषां छिन्नं प्रत्येतद्दधामि स्वाहा घर्मो देवाꣳअप्येतु स्वाहा ॥ अग्नये तन्तुमत इदम् ॥ अपरं चतुर्गृहीतं गृहीत्वा चतस्रोऽभ्यावर्तिनीर्विग्राहं जुहोति ॥ ॐ अग्नेभ्यावर्तिन्नभि न आवर्तस्वायुषा वर्चसा सन्या मेधया प्रजया धनेन स्वाहा ॥ अग्नयेऽभ्यावर्तिन इदम् ॥ ॐ अग्ने अङ्गिरश्शतं ते सन्त्वावृतः सहस्रं त उपावृतः ॥ तासां पोषस्य पोषेण पुनर्नो नष्टमाकृधिं पुनर्नो रयिमाकृधि स्वाहा ॥ अग्नयेऽभ्यावर्तिन इदम् ॥ ॐ पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ॥ पुनर्नः पाहि विश्वतः स्वाहा ॥ अग्नयेऽभ्यावर्तिन इदम् ॥ ॐ सहरय्या निवर्तस्वाग्ने पिन्वस्व धारया ॥ विश्वप्स्निया विश्वतस्परि स्वाहा ॥ अग्नयेऽभ्यावर्तिन इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वा मनस्वतीं जुहोति ॥ ॐ मनोज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳसमिमं दधातु ॥ या इष्टा उषसो निम्रुचश्च ताः सन्दधामि हविषा घृतेन स्वाहा ॥ मनसे ज्योतिष उषोभ्यो निम्रुग्भ्य इदम् ॥ पुनश्चतुगृहीतं गृहीत्वा प्राजापत्यां जुहोति ॥ ॐ प्रजापते ..... ꣳस्वाहा ॥ प्रजापतय इदम् ॥ अपरं चतुर्गृहीतं गृहीत्वा अनुख्यां जुहोति ॥ ॐ अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ॥ अनुसूर्यस्य पुरुत्रा च रश्मीननुद्यावापृथिवी आततान स्वाहा ॥ अनुख्यायाग्नये जातवेदसे द्यावापृथिवीभ्यामिदम् ॥ पुनः चतुर्गृहीतं गृहीत्वा ॥ आयसीं जुहोति ॥ ॐ अयाश्चाग्नेऽस्यनभिशस्तीश्च सत्यमित्वमया असि ॥ अयसा मनसा धृतोऽयसा हव्यमूहिषेऽया नो धेहि भेषजꣳस्वाहा ॥ अग्नये अयस इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वाज्योतिष्मतीं जुहोति ॥ ॐ उद्वयन्तमसः ..... मꣳस्वाहा ॥ सूर्याय ज्योतिष इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वाऽयुर्दां जुहोति ॥ ॐ आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको

घृतयोनिरेधि ॥ घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभिरक्षतादिमं स्वाहा ॥ आयुर्दाग्नय इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वा द्वे मिन्दाहुती विग्राहं जुहोति ॥ ॐ यन्म आत्मनो० ॥ अग्नये जातवेदसे विचर्षणय इदम् ॥ ॐ पुनरग्निः० ॥ अग्नीन्द्रबृहस्पत्याश्वभ्य इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वा सावित्रीं जुहोति ॥ ॐ तत्सवितुः० ॥ सवित्र इदम् ॥ पुनश्चतुर्गृहीतं गृहीत्वा महाव्याहृतीर्विग्राहं जुहोति ॥ ॐ भूरग्नय इत्यादि चतस्रः ॥ पुनश्चतुर्गृहीतं गृहीत्वा व्याहृतीर्विग्राहं जुहोति ॥ ॐ भूस्वाहेत्यादि चतस्रः ॥ इति हुत्वा अथाग्नये स्विष्टकृते स्वाहेत्युत्तरार्धपूर्वार्धे स्रुवाहुतिं हुत्वा कूर्चसम्मार्जनादिसर्वमाग्निहोत्रिकतन्त्रवत्कुर्यात् ॥६॥ अथवा पूर्णाहुतिवरदानान्तं सर्वं पूर्ववत्कृत्वा पुनस्त्वादित्या इत्येकां समिधं हुत्वा पुनस्तथैव चतुर्गृहीतं गृहीत्वा जुहुयात् ॥ ॐ पुनस्त्वा ..... नस्य कामाः स्वाहा ॥ आदित्येभ्यो रुद्रेभ्यो वसुभ्यो ब्रह्मभ्यो वसुनीथायेदम् ॥ इत्येकयाऽऽहुत्या वा प्रसन्ध्याय शेषं समापयेत् ॥ इदं तु सद्यःसन्धानपक्षे वेदितव्यम् ॥ अत्र समारोपणं न कुर्वन्ति ॥ अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति न्यायात् ॥६॥ ततः सायङ्कालपर्यन्तं स्थित्वा सायं सन्ध्यामुपास्य औपासनं कृत्वा समारोपण कुर्यात् ॥ इति पुनःसन्धानविधिः ॥६॥ अथ षाण्मासप्रायश्चित्तप्रयोगः ॥ यद्यग्निः षाण्मासादूर्ध्वं विच्छिन्नः स्यात्तत्र प्रायश्चित्तम् ॥ आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'पुनःसन्धानषाण्मासप्रायश्चित्तहोमं कर्तुं मम शरीरशुध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये' इति सङ्कल्प्य तत्कृत्वा गणपतिं सम्पूज्य पुण्याहं वाचयित्वा ॥ सविताऽग्यादयश्च प्रीयन्तामिति वाचयित्वा प्रोक्षणान्तं कृत्वा ॥ अथ स्थण्डिलोल्लेखनादि सम्भाराहरणाद्यग्निप्रतिष्ठापनान्तं कृत्वा पूर्वोक्तप्रकारेण पुनःसन्धानं कृत्वा ॥ तत्रैव पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य 'षण्मासादूर्ध्वमौपासनविच्छित्तिदोषपरिहारार्थं षाण्मासाप्रायश्चित्तहोमं करिष्ये ॥ षाण्मासप्रायश्चित्तहोमः कर्म, आघारवत्तन्त्रं, पञ्चदशदारुरिध्मः, अग्नीषोमावाज्यभागौ, चित्तिर्नामाग्निः, सविता देवता, चरुर्हविः, अग्निः सोमः, अग्निरन्नवान्, अग्निरन्नादः, अग्निरन्नपतिः, अग्निः पवमानः, अग्निः पावकः, अग्निः शुचिः, अग्निर्ज्योतिष्मान्, अग्निर्व्रतपतिः, अग्निः पथिकृत्, अग्निस्तन्तुमान्, अग्निर्वैश्वानरः सूर्यः, प्रजापतिर्देवता, आज्याक्तचरुर्हविः, अग्निः स्विष्टकृत्, आज्यस्य मान्त्रवर्णिक्यो देवता' इत्यादि सङ्कल्प्य अन्वाधानाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ॥ ॐ भूर्भुवःसुवर्रो तत्सवितुः ..... प्रचोदयात्स्वाहा ॥ सवित्र इदम् ॥ अथ चरौ प्रभूतं आज्यमानीय मेक्षणेन गृहीत्वा हस्तेनैव जुहोति ॥ तत्रानुक्रमणिका 'अग्निः सोमोन्नवांश्चैव अन्नादोऽन्नपतिस्तथा ॥ पवमानः पावकश्च शुचिर्ज्योतिष्मदात्मकः ॥ व्रतपतिः पथिकृच्च तन्तुर्वैश्वानरस्तथा ॥ सूर्यः प्रजापतिश्चैव व्याहृतीश्च ततः परम् ॥ अन्नादयोऽग्निपूर्वास्ते प्रोक्ता वैश्वानरान्तकाः' इति ॥ ॐ अग्नये स्वाहा ॥ अग्नय इदम् ॥ ॐ सोमाय स्वाहा ॥ सोमायेदम् ॥ ॐ अग्नयेन्नवते स्वाहा ॥ अग्नयेन्नवत इदम् ॥ ॐ अग्नयेन्नादाय स्वाहा ॥ अग्नयेन्नादायेदम् ॥ ॐ अग्नयेन्नपतये स्वाहा ॥ अग्नयेन्नपतय इदम् ॥ ॐ अग्नये पवमानाय स्वाहा ॥ अग्नये पवमानायेदम् ॥ ॐ अग्नये पावकाय स्वाहा अग्नये पावकायेदम् ॥ ॐ अग्नये शुचये स्वाहा ॥ अग्नये शुचय इदम् ॥ ॐ अग्नये ज्योतिष्मते स्वाहा ॥ अग्नये ज्योतिष्मत इदम् ॥ ॐ अग्नये व्रतपतये स्वाहा ॥ अग्नये व्रतपतय

इदम्॥ ॐ अग्नये पथिकृते स्वाहा॥ अग्नये पथिकृत इदम्॥ ॐ अग्नये तन्तुमते स्वाहा॥ अग्नये तन्तुमत इदम्॥ ॐ अग्नये वैश्वानराय स्वाहा॥ अग्नये वैश्वानरायेदम्॥ ॐ सूर्याय स्वाहा॥ सूर्यायेदम्॥ ॐ प्रजापतये स्वाहा॥ प्रजापतय इदम्॥ ॐ भूः स्वाहा॥ अग्नय इदम्॥ ॐ भुवः स्वाहा॥ वायव इदम्॥ ॐ सुवः स्वाहा॥ सूर्यायेदम्॥ ॐ भूर्भुवःसुवः स्वाहा प्रजापतय इदम्॥ अथ स्विष्टकृतमवदायान्तः परिधौ निधाय व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृतिवरदानान्तं कृत्वा शेषं समाप्य पूर्ववत्सायमौपासनं हुत्वा पालाशाश्वत्थखादिरौदुम्बराणामन्यतमसमिधि समारोपणं कुर्यात्॥ सङ्ग्रहे॥ यदा सन्धीयते वह्निः प्रातर्मध्यंदिनेऽपि वा॥ तदा सायं विजानीयात्सायमाहुतिपूर्वकम्॥ अग्न्युत्पत्तिर्निशायां यत्सन्धानं सायमेव च॥ प्रातर्यदि तु सन्धानं सायं पूर्वविधीयते॥ अहस्तु पुनराधाने हूयते प्रातराहुतिः॥ सायमारभ्य जुहुयादाहुतीनां चतुष्टयम्॥ यद्यहः सन्धानं कृत्वा प्रातर्होमो हूयते तदा पूर्वतन सायमाहुतिपूर्वकं आहुतिचतुष्टयं जुहुयादित्यर्थः॥ एतानि वचनानि सद्यःसन्धानविषयाणि॥ यत्र पुनस्त्वादित्या इति मन्त्रेण सद्यःसन्धानं क्रियते तत्र ह्यस्तनसायमाहुतिं हुत्वा तद्दिने प्रातराहुतिं च हुत्वा तदानीमेव कर्तव्यं कर्म कृत्वा तमग्निं विसृजेत्॥ अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति न्यायात्॥ अथ पुनःसन्धाने विशेष उक्त आश्वलायनेन 'अनश्नन्नग्निमाहृत्य सायं हुत्वा विवाहवत्॥ अश्नीयान्नात्रदीक्षास्यात्स्वस्तिवादनमेव च' इति॥ इति प्रयोगमालायां पुनःसन्धानषाण्मासप्रायश्चित्तप्रयोगः॥

अथाग्निनाशनिमित्तानि॥ कारिकायाम्॥ सायं प्रातरुपास्योऽग्निर्दम्पतीभ्यां न संशयः॥ तयोरन्यतरेणाऽपि सायमेव विशेषतः॥ उभयोर्विप्रवासे तु ग्रामसीमावधेर्बहिः॥ सायं चेन्नाश एवाग्नेः प्रायश्चित्तमिनोदये॥ ममनामादिमन्त्राभ्यामुपस्थाय हुताशनम्॥ चतुश्चतुर्गृहीतं तु जुहुयात् सुसमाहितः॥ सप्ततन्तुमतीस्तद्वन्महाव्याहृतयस्तथा॥ तत्राग्निर्यत्र भार्या स्यात् सा प्रधाना हि तं प्रति॥ यद्यनाशौचिनो वह्निरन्यप्रेतगृहे वसेत्॥ शवे तत्रस्थिते त्यागः सर्वथाग्नेर्विधीयते॥ असंस्थिते शवे तस्मान्निर्गमय्यानलं बुधः॥ प्रायश्चित्तं तु जुहुयादापोहिष्ठादिभिस्त्रिभिः॥ दधिकाव्णादिना चाग्न आद्यैः षड्भिर्विशुद्धये॥ सूतके सूतिकागारात्परितो द्वियुगादधः॥ स्थितस्याग्नेर्विनाशः स्याद्वहिश्चेत्पूर्ववद्विधिः॥६॥ अथ ग्रहणप्रायश्चित्तम्॥ राहुरश्मिहते सूर्ये हुनेदिन्दौ च निष्कृतिः॥ उद्वयं च तथोदुत्यं चित्राद्यैर्व्याहृतीरपि॥ बृहन्नारदीये॥ सम्प्राप्ते होमकाले तु ग्रहणे चन्द्रसूर्ययोः॥ चन्द्रोपरागे जुहुयादप्सुमेसोम इत्यृचा॥ आप्यायस्वेति च द्वाभ्यामाप्यायस्वमदिन्तम॥ सूर्योपरागे जुहुयादासत्याद्येन चाहुतिम्॥ उद्वयाद्यैस्त्रिभिर्मन्त्रैर्महाव्याहृतिभिस्तथा॥ व्याहृतीभिश्च विप्रेन्द्राः कुर्युः कर्म यथोदितम्॥ यदि नद्युत्तरणे॥ नावा च तारिते वह्नौ प्लवेनान्येन वा नदीम्॥ समुद्रायादिना जातवेदसे च मनस्वतीम्॥ मिन्दाहुतीव्याहृतीश्च महाद्या जुहुयाद्बुधः॥ अनादिष्टेषु सर्वेषु वह्नेर्दोषेषु बुद्धिमान्॥ प्रायश्चित्तं मनस्वत्या महाद्यान् व्याहृतीर्हुनेत्॥ प्रयोगतिलके॥ हुतमध्ये विनष्टेग्नावयमेव विधिः स्मृतः॥ पुनराधानकर्मैवमुद्वातस्य च नान्यथा॥ समारूढाग्निररणिः समिद्वा पतिता यदि॥ जले वा जलसिक्ता वा तामादायाग्निना विना॥ संशोष्य लौकिकाग्नौ तां अभ्याधाय विधानतः॥ जातवेदादि पश्चाग्न आद्यैः षड्भिर्मनस्वतीम्॥ मिन्दाहुतीव्याहृतीश्च जुहुयाच्च स्रुवेण तु॥ प्रत्यक्षधारितो वह्निः संस्पृष्टोऽन्येन वह्निना॥ उभौ विविच्य जुहुयादुभयत्र स्रुवाहुती॥ वितेत्वामादिमन्त्राभ्यां मनो मिन्दा च व्याहृतीः॥ अरण्योः समिधोश्चैव मिथः स्पर्शे त्वयं विधिः॥ एकदेशयुतस्याग्नेर्विभागो नोपपद्यते॥ पूर्वोक्तैर्जुहुयात्तत्र मन्त्रैरेतैः स्रुवाहुतीः॥ लौकिकाग्नियुतस्यापि वह्नेरेवं विधिः स्मृतः॥ प्रयोगसङ्ग्रहे॥ औपासनपरित्यागे दोष उक्तः॥ औपासनविहीनस्तु स्वभार्यागमनं द्विजः॥ स्वमातृगमनं तस्य तज्जातश्चैव शूद्रजः॥ द्वादशाहमनग्निः स्यात्सन्ध्याहीनो दिनत्रयम्॥ चतुर्वेदधरो विप्रः शूद्र एव न संशयः॥ अनग्निकस्य विप्रस्य भार्यया पच्यते हविः॥ गोमांसेन समं ह्यन्नं द्विजश्चण्डाल एव सः॥ अनग्निकः सन्विप्रस्तु पुत्रमुत्पादयेद्यदि॥ सा नारी गणिका प्रोक्ता तत्पुत्रो गोलको भवेत्॥ अनग्निकस्य

विप्रस्य करे यः कर्मदो भवेत्॥ आभिचारत्वमाप्नोति शूद्रत्वमधिगच्छति॥ अनग्निकं द्विजं दृष्ट्वा कुर्यात्सूर्यावलोकनम्॥ स्पृष्ट्वा स्नायात्सचेलस्तु भाषणे तु हरिं स्मरेत्॥ पुनश्च कारिकायाम्॥ औपासनविहीनस्य नरजन्म निरर्थकम्॥ तदन्नं कृमिवद्भुक्तं तत्सङ्गो दास्यमेव च॥ औपासनपरित्यागी मासमेकं निरन्तरम्॥ यदि पत्न्याश्च संसर्गं स्वमातृगमनं भवेत्॥ इति॥६॥ अथ प्रयोगः॥ यदि दम्पत्योः सह प्रवासे पुनर्होमकालात्प्रागेवागत्य अग्निमुपतिष्ठते॥ ॐ मम नाम प्रथमं जातवेदः पिता माता च दधतुर्यदग्रे॥ तत्त्वं बिभृहि पुनरामदैतोस्तवाहं नाम बिभराण्यग्ने॥ मम नाम तव च जातवेदो वाससी इव विवसानौ ये चरावः॥ आयुषे त्वं जीवसे वयं यथायथं विपरिदधावहै पुनस्ते॥ इति द्वाभ्यामुपस्थाय॥ समप्ते अग्ने तिस्रस्तन्तुमतीर्मनोज्योतिर्व्याहृतिभिश्च चतुर्गृहीतं जुहुयात्॥ अथ यद्यग्निः शवरहितसूतकगृहे वसेत्तमादाय आपोहिष्ठेति तिसृभिः, दधिकाव्णः इत्येकेन॥ ॐ अग्न आयुꣳषि पवस आसुवोर्जमिषञ्चनः॥ आरेबाधस्व दुच्छुनाꣳस्वाहा॥ अग्नय इदम्॥१॥ ॐ अग्ने पवस्व स्वपा अस्मे वर्चः सुवीर्यम्॥ दधद्रयिं मयि पोषꣳस्वाहा॥ अग्नय इदम्॥२॥ ॐ अग्ने पावक रोचिषा मन्द्रया देव जिह्वया॥ आदेवान्वक्षि यक्षि च स्वाहा॥ अग्नय इदम्॥३॥ ॐ सनः पावकदीदिवोग्ने देवाꣳ इहावह॥ उपयज्ञꣳहविश्चनः स्वाहा॥ अग्नय इदम्॥४॥ ॐ अग्निः शुचिः व्रततमः शुचिः विप्रः शुचिः कविः॥ शुचीरोचत आहुतः स्वाहा॥ अग्नय इदम्॥५॥ ॐ उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते॥ तव ज्योतिꣳष्यर्चयः स्वाहा॥ अग्नय इदम्॥६॥ इति दशभिर्जुहुयात्॥ आपोहिष्ठेति तिसृणां अद्भ्य इदम्॥ अन्यस्याः दधिकाव्ण इदम्॥ अथ चन्द्रोपरागे॥ ॐ अप्सु मे सोमः०॥ ॐ आप्यायस्व०॥ ॐ आप्यायस्व मदिन्तम सोम विश्वाभिरूतिभिः॥ भवानः सप्रथस्तमः स्वाहा॥ सर्वत्र सोमायेदम्॥ अथ सूर्योपरागे॥ ॐ आसत्येन रजसा०॥ सवित्रे देवायेदम्॥ ॐ उद्वयन्तमसस्परि०॥ सूर्याय ज्योतिष इदम्॥ ॐ उदुत्यं जातवेदसं०॥ सूर्यायेदम्॥ ॐ चित्रं देवानां०॥ सूर्यायेदम्॥ महाव्याहृतीर्व्याहृतीश्च जुहुयात्॥ अथ नद्युत्तरणे॥ ॐ समुद्राय वयुनाय

सिन्धूनां पतये नमः ॥ नदीनाᳬसर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्यᳬहविः स्वाहा ॥ समुद्राय सिन्धूनां पतय इदम् ॥ ॐ जातवेदसे० ॥ जातवेदसेऽग्नय इदम् ॥ ॐ मनोज्योतिः० ॥ मिन्दाहुतीमहाव्याहृतीर्व्याहृतीश्च जुहुयात् ॥ अथ यद्यारोपितसमिधो जलस्पर्शे तामादाय संशोष्य लौकिकाग्नावाजुह्वान उद्बुध्यस्वेति द्वाभ्यां निधायाज्यं संस्कृत्य ॥ ॐ जातवेदसे० ॥ अग्नआयूᳬषीत्यादिपूर्वोक्ताः षट् ॥ ॐ मनोज्योतिः० ॥ मिन्दाहुतीव्याहृतीश्च जुहुयात् ॥ अथान्याग्निसंसर्गे ॥ उभौ विविच्य उभयत्र जुहोति ॥ ॐ वितोविष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति ॥ तुविम्रक्षासो दिव्यानवग्वावनावनन्ति धृषतारुजन्तः स्वाहा ॥ अग्नय इदम् ॥ ॐ त्वमग्ने मानुषीरीडते विशो होत्राविदं विविचिᳬरत्नधातमम् ॥ गुहासन्तᳬसुभगविश्वदर्शतं तुविष्मणसᳬसुयजं घृतश्रियᳬस्वाहा ॥ अग्नय इदम् ॥ ॐ मनोज्योतिः० ॥ मिन्दाहुतीव्याहृतीश्च जुहुयात् ॥ इत्यौपासनप्रायश्चित्तप्रयोगः ॥

अथ स्थालीपाकः ॥ पर्वणि पर्वणि चाग्नेयस्थालीपाकः ॥ तं च विवाहानन्तरं पञ्चमेऽहनि पार्वणाख्ये होमे कृते तदनन्तरं या पौर्णमास्यागमिष्यति तस्यामेवारभेत ॥ सोऽयमाहिताग्नेर्दर्शपूर्णमासस्थानयोः भवति ॥ न त्वमावास्यायामारम्भः ॥ यद्यारम्भकाले मलमासगुरुशुक्रास्तबाल्यवार्धिकग्रहणपौषमासास्तत्राप्यारम्भः कर्तव्यः ॥ तथा च गर्गः 'नामकर्म च दर्शेष्टिं यथाकालं समाचरेत् ॥ अतिपाते सति तयोः प्रशस्ते मासि पुण्यभ' इति ॥ दर्शेष्टिमिति पौर्णमास्या उपलक्षणम् ॥ सङ्ग्रहकारस्तु 'उपरागोऽधिमासश्च यदि प्रथमपर्वणि ॥ तथा मलिम्लुचे पौषे नान्वारम्भणमिष्यते ॥ गुरुभार्गवयोर्मौढ्ये चन्द्रसूर्यग्रहे तथा' ॥ इत्यादि ॥ सङ्ग्रहकारादिवचनान्यालस्यादिना स्वकालानुपक्रान्तस्थालीपाकादिप्रारम्भविषयाणि इति प्रयोगपारिजाते ॥ अत एवारम्भकाले मलमासादावपि कार्यं इत्यर्थः ॥६॥ अथ पर्वनिर्णयः ॥ दर्शपूर्णमासाभ्यां यजेत इत्यत्र दर्शपूर्णमासशब्दाभ्यां पक्षसन्धिरेवोच्यते ॥ एवं पर्वशब्देनापि पक्षसन्धिरुच्यते ॥ यदा चन्द्रः पूर्णो भवति सा पूर्णिमा ॥ अमाशब्दः सहार्थः ॥ यदाऽतिशयेन यस्यां तिथौ सूर्याचन्द्रमसौ सह वसतः साऽमावास्या ॥ एतद्द्वयं पक्षसन्धिक्षण एव सम्भवति ॥ अतो दर्शपूर्णमासशब्दाभ्यां सन्धिरेव विवक्षितः ॥ एवं सति तस्य सन्धेः क्षणिकत्वेन साध्यसकलयागप्रयोगसमापनायोग्यत्वात् तत्सन्निहिते प्रतिपत्पञ्चदश्यौ प्रयोगयोग्ये तिथी अवश्यं गृहीतव्ये ॥ अतः पक्षादौ यागः पक्षान्त उपोष्य' इति यागान्वाधानयोस्तिथिद्वयव्यवस्थावचनं उपपद्यते ॥ पूर्वेद्युरन्वाधायोपोष्य परेद्युर्यागविधानात् ॥ तथा च श्रूयते 'पूर्वेद्युरग्नीनन्वादधाति उत्तरमहर्देवान्यजेत' इति ॥ तेनाह्नोरेव भेदौ यागान्वाधाने भवतः न रात्रौ नाप्येकस्मिन्नेवाहनीति ॥ एवं स्थालीपाकस्यापि तद्धर्मत्वात् तद्वदेव समस्तं द्रष्टव्यम् ॥ नतावत्सन्धौ सन्धिसन्निहिते यजेतेति वचनात् ॥

नापि सन्धिमभितो यजेतेति ॥ किन्तु प्रतिपदि यजेतेति ॥ आभ्यां निषेधविधिभ्यां सन्धे पुरस्तादन्वाधाय पश्चाद्यजेतेति गम्यते ॥ अनेन प्रवासादिवशात्सद्योवाऽन्वाधानयागौ कर्तव्याविति सूचितम् ॥ नचावर्तनादुपरि (आवर्तनं नाम अह्नो मध्यभागः) सन्धौ श्वोभूते प्रतिपदि पूर्वाह्णे भवतीष्टिः दृष्टचन्द्रत्वात् ॥ यस्मिन्नहनि पुरस्तात्पश्चाच्चन्द्रमा न दृश्यते तदहर्यजेतेत्युक्तत्वात् ॥ किञ्च 'उदयास्तमयसन्धौ रात्रिसन्धौ वा उत्तरेऽहनि यजेत' इति वचनाद्यत्र पूर्वदिने इष्टिपर्याप्तः प्रतिपत्कालो नास्ति तत्रैव विषये दृष्टचन्द्रोऽपि यागस्य ग्राह्यः ॥ अत एवालस्यादिना पूर्वदिने सम्भवत्प्रतिपदतिक्रमविषयं इष्टिदिने चन्द्रदर्शननिमित्तं प्रायश्चित्तमुपपद्यते ॥ प्रायश्चित्तं तु व्याहृतीर्हुत्वा द्विजातये दण्डं दद्यादिति ॥ नह्यन्यथा विहितप्रशस्तकरणे प्रायश्चित्तविधानमस्तीति ॥ एवं यजनीयमहः प्रधानमादौ निश्चित्य तदनुरोधेन पूर्वेद्युरपंञ्चदश्यामप्यन्वाधानं युक्तम् ॥ तदेवं पक्षसन्धिसमये सन्निहिते प्रतिपदहन्येव पर्याप्ते प्रविष्टे सत्यपराह्णेपि यष्टव्यम् ॥ सन्धिसन्निहितस्य प्रतिपदह्नोऽर्द्धात्प्रयोगपर्याप्तप्रतिपत्तिथिः प्रागस्तमयात्सप्ताष्टघटिकालक्षणस्तिथिनिर्णयः ॥ यथा 'इष्टेरलं सा प्रतिपत्स्वनाड्यः सप्ताष्ट यस्या दिवसे भवन्ति ॥ क्षीणासु तत् कर्मतिथेरिहाद्यः कल्पोऽथ वृद्धासु भवेद्द्वितीयः' इति ॥ अस्यार्थः ॥ यां तिथिमुपादाय कर्मोच्यते सा कर्मतिथिरुच्यते ॥ तस्याः तदुत्तरायाश्च तिथेः घटिका एकीकृत्यार्धयेत् ॥ ताः स्वनाड्यः = कर्मनाड्यः उच्यन्ते ॥ एवं कृते इष्टेरलं सा पर्याप्ता, प्रयोगायेति शेषः ॥ तस्याः स्वनाड्योदिवसमध्ये सप्तावरा अष्टावरा वा भवन्तीति ॥ अनयोर्व्यवस्थोच्यते क्षीणास्विति ॥ यदि स्वनाड्यः गणितागतनाडीभ्यो न्यूना भवन्ति तदाऽऽद्यः कल्पः सप्तावरा इत्यर्थः ॥ यद्यधिकाः तदा द्वितीयोऽष्टावरा इत्यर्थः ॥ तत्र वचनान्तरम् 'चतुर्दश्यां चतुर्यामे अमा यत्र न दृश्यते ॥ श्वोभूते प्रतिपत्तत्र भूते कव्यादिकी क्रिया' इति ॥ अमावास्या चतुर्याममध्ये प्रतिपद्दृश्यते चेदित्यर्थः ॥ भूते-चतुर्दश्यां पिण्डपितृयज्ञ इति ॥ अस्यापि पूर्वोक्तवचनस्य समानार्थ एव ॥ श्वोभूते प्रतिपत्तिथिरिष्टिप्रयोगायालमिति शेषः ॥ सप्ताष्टावरनाडिकेति यावत् ॥ गणितागतचतुर्दशी पञ्चदशी घटिकायोगार्धवत्यां चतुर्दश्यां पञ्चदशी दृश्यते, तत्र पिण्डपितृयज्ञः तस्य पूर्वेद्युरेव विहितत्वात् ॥ अत्र सङ्ग्रहः 'प्रतिपत्पर्वयोगार्धे हीने वा पर्वणोधिके ॥ सप्ताष्टावरनाड्यह्नि प्रतिपच्चेदलं यजेत् ॥ इष्टिप्रयोगपर्याप्ते प्रविष्टे प्रतिपत्तिथौ ॥ यष्टव्यमपराह्णेऽपि इति ॥ सम्भवत्पूर्वातिक्रमे न त्वसम्भव इति ॥ यजनीयदिनात्पूर्वेद्युरेव अन्वाधानमाचरेत् ॥ पूर्वेद्युरेव पिण्डपितृयज्ञ इति ॥ अनेन पर्वप्रतिपदोर्वृद्धिक्षयघटिकां द्विधा कृत्वा पर्वणि योजितायां क्षयेऽस्तमयस्य सप्तावरा वृद्धावष्टावरा यदि दृश्यते तदा पर्वण्येवापराह्णेऽपि यष्टव्यं, अन्यथा परेद्युः प्रतिपद्यपि यष्टव्यं भवतीति ॥ इति पर्वनिर्णयः ॥

अथान्वारम्भणीयप्रयोगः ॥ पर्वणि प्रथमप्रयोगारम्भे पूर्वेद्युरेव अन्वारम्भणीयामिष्टिं कुर्यात् ॥ यथा ॥ कर्ता प्रातः औपासनान्तं नित्यकर्म कृत्वा स्नानपवनादि गणपतिपूजा पुण्याहवाचनानि च कृत्वा अग्नाविष्णू सरस्वती सरस्वन्तश्च प्रीयन्तामिति विशेषः ॥ पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य आग्नेयस्थालीपाकदर्शपूर्णमासा-वारप्स्यमाणोन्वारम्भणीयामिष्टिं करिष्य इति सङ्कल्प्य औपासनाग्निं प्रतिष्ठाप्य अन्वारम्भणीयहोमः कर्म आघारवतन्त्रमित्यादि पचनो नामाग्निः अग्नाविष्णू सरस्वती सरस्वांश्च देवताः चरुर्हविः इत्यादि सद्यो यक्ष्य [illegible] अन्वाधानादि कृत्वा प्रणीताप्रणयनात्पूर्वमेवाज्यं निरूप्योत्पूय स्रुक्स्रुवौ निष्टप्य सम्मृज्य स्रुचि चतुर्गृहीतं गृहीत्वा समिधमेकां अग्नौ प्रास्य चतुर्होतारं मनसा अनुद्रुत्य जुहोति ॥ ॐ पृथिवीहोताद्यौरध्वर्यूरुद्रोग्नीद्बृहस्पतिरुपवक्तो३

वाचस्पते वाचो वीर्येण सम्भृततमेनायक्ष्यसे यजमानायवार्यमासुवस्करस्मै वाचस्पतिः सोमं पिबति जजनदिन्द्रमिन्द्रियाय स्वाहा ।। वाचस्पतये ब्रह्मण इदम् ।। अपरं चतुर्गृहीतं गृहीत्वा ।। ॐ पूर्णापश्चादुतपूर्णा-पुरस्तादुन्मध्यतः पौर्णमासी जिगाय ।। तस्यां देवा अधिसंवसन्त उत्तमेनाक इह मादयन्तों३मग्नीषोमौ प्रथमौ वीर्येण वसून्रुद्रानादित्यानिह जिन्वतम् ।। माध्य्ँ हिपौर्णमासं जुषेथां ब्रह्मणा वृद्धौ सुकृतेन सातावथास्मभ्य्ँ सहवीरा ँरयिन्नियच्छत्ँस्वाहा ।। अग्नीषोमाभ्यामिदम् ।। पुनश्चतुर्गृहीतं गृहीत्वा ।। ॐ निवेशनी सङ्गमनी वसूनां विश्वा रूपाणि वसून्यावेशयन्ती ।। सहस्रपोष्ँसुभगाररराणा सा न आगन्वर्चसा संविदानों३ यत्ते देवा अदधुर्भागधेयममावास्ये संवसन्तो महित्वा ।। सा नो यज्ञं पिपृहि विश्ववारे रयिन्नो धेहि सुभगे सुवीर्ँस्वाहा ।। अमावास्याया इदम् ।। अथ प्रणीताप्रणयनादि चरुनिर्वापश्रपणाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ।। ॐ अग्नाविष्णू महितद्वां महित्वं वीतं घृतस्य गुह्यानि नाम ।। दमे दमे सप्तरत्ना दधाना प्रतिवां जिह्वा घृतमाचरण्यों३मग्नाविष्णू महि धाम प्रियं वां वीथो घृतस्य गुह्या जुषाणा ।। दमे दमे सुष्टुतीर्वावृधाना प्रतिवां जिह्वा घृतमुच्चरण्ये स्वाहा ।। ॐ अग्नाविष्णुभ्यामिदम् ।। पुनरवदाय ।। ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती ।। धीनामवित्र्यवतों३मानो दिवो बृहतः पर्वतादासरस्वती यजतागन्तु यज्ञम् ।। हवं देवी जुजुषाणा घृताची शग्मान्नो वाचमुशतीश्रृणोतु स्वाहा ।। सरस्वत्या इदम् ।। पुनरवदाय ।। ॐ पीपिवाँसँरस्वतस्तनं यो विश्वदर्शतः ।। धुक्षीमहि प्रजामिषों३ये ते सरस्व ऊर्मयो मधुमन्तो घृतश्चुतः ।। तेषां ते सुम्नमीमहे स्वाहा ।। सरसवत

इदम् ॥ इति पक्वत्रयं हुत्वा स्विष्टकृतमवदायान्तःपरिधौ निधाय व्याहृतीर्हुत्वा स्विष्टकृत्प्रभृति होमशेषं समाप्य तदानीमेव प्राणानायम्य देशकालौ सङ्कीर्त्य श्रीपरमेश्वरप्रीत्यर्थं पौर्णमास्येन हविषा यक्ष्य इति सङ्कल्प्य पौर्णमास्याग्नेयस्थालीपाकहोमः कर्म आघारवत्तन्त्रमित्यादि पचनो नामाग्निः अग्निः देवता चरुर्हविः अग्निः स्विष्टकृदित्यादि ताः सर्वाः सन्निहिताः सन्तु एवं साङ्गेन कर्मणा श्वो यक्ष्ये ॥ तदङ्गमन्वाधानं करिष्य इति सङ्कल्प्य व्याहृतिभिस्तिस्रः समिध आधाय इध्मबर्हिषी सन्नह्य व्रती भूत्वोपवसेत् ॥ अक्षारलवणाशित्वं न खट्वाशयनं नानृतभाषणं ब्रह्मचर्यं च व्रतं, रजस्वलासूतिकापतितान्त्यजाति-भिरसम्भाषणं चेति ॥ अथ श्वो भूते प्रातरौपासनं हुत्वा 'जुष्टोदमूना' इत्युपस्थाय पात्रासादनादि तण्डुलनिर्वाप श्रपणाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ॥ ॐ अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ॥ अपाᳫं रेताᳫंसि जिन्वनो३भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचसे शिवाभिः ॥ दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहᳫं स्वाहा ॥ अग्नय इदम् ॥ स्ष्टिकृतमवदायान्तःपरिधौ निधाय ॥ ॐ ऋषभं वाजिनं वयं पूर्णमासं यजामहे ॥ स नो दोहताᳫं सुवीर्यम् ॥ रायस्पोषᳫं सहस्रिणम् ॥ प्राणाय सुराधसे ॥ पूर्णमासाय स्वाहा ॥ पूर्णमासायेदम् ॥ स्विष्टकृदादिहोमशेषं समापयेत् ॥ अथामावास्यायाम् ॥ अमावास्येन हविषा यक्ष्य इति सङ्कल्प्यान्वाधानादिसर्वं पक्वं च पूर्ववत्कृत्वा स्विष्टकृतमवदायान्तःपरिधौ निधाय ॥ ॐ अमावास्या सुभगा सुशेवा ॥ धेनुरिव भूय आप्यायमाना ॥ स नोदोहताᳫं सुवीर्यम् ॥ रायस्पोषᳫं सहस्रिणम् ॥ अपानाय सुराधसे ॥ अमावास्यायै स्वाहा ॥ अमावास्याया इदम् ॥ ततः स्विष्टकृदादिसर्वं पूर्ववत् ॥ इति स्थालीपाकप्रयोगः ॥६॥ अथ दर्शपूर्णमासातिपन्नप्रायश्चित्तम् ॥ तत्र दर्शेऽतिपन्ने पथिकृत् तस्य प्रयोगः ॥ दर्शमुख्यकालातिपन्नप्रायश्चित्त-पूर्वकमामावास्येन हविषा यक्ष्य इति सङ्कल्प्याग्निमुखान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा ॥ ॐ अग्नेनय ..... विधेमो३मादेवानामपि पन्थामगन्म यच्छक्नवाम तदनु प्रवोढुम् ॥

अग्निर्विद्वान्त्सयजात्सेदुहोता सो अध्वरान्त्सऋतून्कल्पयाति स्वाहा ॥ अग्नये पथिकृत इदम् ॥ ततः स्थालीपाकं कुर्यात् ॥ अथ पौर्णमास्यां वैश्वानरी ॥ पूर्ववत् सङ्कल्प्याग्निमुखान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा ॥ ॐ वैश्वानरो न ऊत्या प्रयातु परावतः ॥ अग्निरुक्थेनवाहसो३पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसा पृष्टो अग्निः सनो दिवा सरिषः पातु नक्तꣳस्वाहा ॥ वैश्वानरायाग्नय इदम् ॥ ततः स्थालीपाकं जुहुयात् ॥ उभे अतीते पथिकृद्वैश्वानर्यौ कार्ये ॥ बहुष्वतीतेष्वन्वारम्भणीयाकार्या ॥ अथ व्रतलोपे ॥ पूर्ववत् सङ्कल्प्याग्निमुखान्तं कृत्वा स्रुचि चतुर्गृहीतं गृहीत्वा ॥ ॐ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यो३यद्वो वयं प्रमिनामव्रतानि विदुषां देवा अविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाꣳऋतुभिः कल्पयाति स्वाहा ॥ अग्नये व्रतपतय इदम् ॥ इति जुहुयात् ॥ अत्र कारिका 'दर्शे च पौर्णमास्यां च स्थालीपाकव्यतिक्रमे ॥ अग्नेनयेत्यादेवानामित्याभ्यां स्रुचि सर्पिषा ॥ चतुर्गृहीतमाज्यं च जुहुयात् पक्ववद्बुधः ॥ दर्शव्यतिक्रमे पूर्णमास्यां वैश्वानरादिना ॥ पृष्टोदिवीति जुहुयात्पार्वणातिक्रमे विधिः ॥ द्वयोरतिक्रमे स्थालीपाकयोः स्यादयं विधिः ॥ स्थालीपाकत्रयेऽतीते प्रारम्भः स्यात्पुनर्ध्रुवम्' इति ॥ गृह्यसूत्रे 'पर्वणि पर्वणि चाग्नेयस्थालीपाकः स एष आघारवान्वा स्यात् आग्निहोत्रिको वा स्यादापूर्विको वा' इत्युक्तत्वादेतेषामन्यतमेन वा तन्त्रेण स्थालीपाकः कार्य एव ॥ इत्यन्वारम्भणीयस्थालीपाकप्रयोगः ॥

अथ ग्रहशान्तिः ॥ गर्भाधानादिष्ववश्यं कर्तव्यत्वादादौ ग्रहाराधनमुच्यते ॥ तत्तु नित्यनैमित्तिककाम्यभेदेन त्रिविधम् ॥ तथा च गृह्यसूत्रे 'मासि मास्यृतावृतावयने चन्द्रसूर्यग्रहे विषुवे शुभाशुभे जन्मनक्षत्रे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान्कामान् अवाप्नोति' इति ॥ पारिजाते शौनकः 'ग्रहशान्तिं प्रवक्ष्यामि शौनकोऽहं द्विजन्मनाम् ॥ पुण्येऽहनि शुभे वारे कुर्याद्वाथ त्रिजन्मसु ॥ अयने विषुवे चैव सोमसूर्योपरागयोः ॥ ग्रहाणामुग्रचेष्टानां नित्यं शान्तिं समाचरेत्' इति ॥

आश्वालायनोऽपि 'ग्रहा गावो नृपा विप्रा नार्यश्च स्वपतिप्रियाः ॥ पूजिताः पूजयिष्यन्ति निर्दहन्त्यवमानिताः ॥ सर्वापद्भ्यो निवृत्यर्थं नित्यं पूज्या नवग्रहाः' इति ॥ एतेन नित्यत्वम् ॥ अथ नैमित्तिकम् ॥ उत्पलपरिमले 'कार्यारम्भेषु सर्वेषु प्रतिष्ठास्वध्वरेषु च ॥ नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥ आरोग्यस्नानसमये सङ्क्रान्तौ रोगसम्भवे ॥ आभिचारे च यः कुर्याद्ग्रहपूजां विधानतः ॥ सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशयः' इति ॥ अत्र कार्यारम्भेष्वित्यादौ सर्वत्र निमित्तसप्तमी ॥ अतस्तेन नैमित्तिकत्वम् ॥ अथ काम्यम् ॥ सकलविपदपगम-सम्पदागम-वृष्ट्यायुः-पुष्ट्यादिफलकामनासु काम्यः ॥ अत्राश्वलायनः 'क्षीयन्ते विपदः क्षिप्रं वर्धन्ते सम्पदोऽखिलाः ॥ तापत्रयाश्च नश्यन्ति सर्वकार्याः प्रदक्षिणाः ॥ भवन्त्यघानि नश्यन्ति ग्रहयज्ञकृतां नृणाम् ॥ कामानां चायुराद्यानां लब्धये च विधानतः' इति (कुर्यादिति शेषः) याज्ञवल्क्यः 'श्रीकामः शान्तिकामो वा ग्रहयज्ञं समाचरेत् ॥ वृष्ट्यायुः पुष्टिकामो वा तथैवाभिचरन्नपि' इति ॥ ब्रह्मयामले 'दुष्टारिष्टे समायाते कर्तव्यं ग्रहशान्तिकम् ॥ वृष्टिपुष्ट्यायुरारोग्यसप्तराज्याङ्गवृद्धये' इति ॥ अनेन काम्यत्वम् ॥ नन्वत्र सर्वत्र फलश्रवणात् काम्यत्वमेव, कथं नित्यत्वमिति चेत् ॥ नित्यपदग्रहणान्नित्यत्वं निमित्तसप्तमीश्रवणान्नैमित्तिकत्वं च स्यातां इत्युक्तत्वादविरोधः ॥ अत्राकरणे प्रत्यवायश्रवणाभावात्कथं जन्मत्रयादिषु ग्रहयज्ञस्य नित्यत्वमिति चेन्नित्यपदश्रवणेनेति ब्रूमः ॥ नित्यत्वसाधनानां लिङ्गानां मध्ये नित्यपदस्य परिगणनात् ॥ तदुक्तं कालनिर्णये 'नित्यं सदा यावदायुर्न कदाचिदतिक्रमेत् ॥ इत्युक्तोतिक्रमे दोषः श्रुतेरत्यागचोदनात् ॥ फलश्रुतेः वीप्सया च तन्नित्यमिति कीर्तितम्' इति ॥ गुरुशुक्रास्तमलमासादिषु काम्यकर्मणां वर्ज्यत्वं नित्यनैमित्तिकानां कर्तव्यत्वं च स्मृतौ दर्शितम् ॥ तथा च निर्णयसिन्धौ जाबालिः 'नित्यनैमित्तिके कुर्याच्छ्राद्धं कुर्यान्मलिम्लुचे ॥ तिथिनक्षत्रवारोक्तं काम्यं नैव कदाचन' इति ॥ अथ वर्ज्यानि ॥ कालादर्शे 'अनित्यमनिमित्तं च दानं च महदादिकम् ॥ अग्र्याधानाध्वरापूर्वतीर्थयात्रामरेक्षणम् ॥ देवारामतडागादिप्रतिष्ठा मौञ्जिबन्धनम् ॥ आश्रमस्वीकृतिः काम्यवृषोत्सर्गश्च निष्क्रमः ॥ राजाभिषेकः प्रथमचूडाकर्म व्रतातिं च ॥ अन्नप्राशनमारम्भो ग्रहाणां च प्रवेशनम् ॥ स्नानं विवाहो नामानि पणं देवमहोत्सवम् ॥ व्रतारम्भसमाप्ती च काम्यं कर्म च पाप्मनाम् ॥ प्रायश्चितं तु सर्वस्य मलमासे विवर्जयेत् ॥ उपाकर्मोत्सर्जनं च पवित्रदमनार्पणम्' इति ॥ बृहस्पतिः 'बाले वा यदि वा वृद्धे शुक्रे वाऽस्तङ्गते गुरौ ॥ मलमास इवैतानि वर्जयेद्देवदर्शनम्' इति ॥ अनेनास्तमलमासादिषु काम्यस्य निषेधात्काम्यनिमित्तग्रहशान्तिर्न कर्तव्या ॥ नित्यनैमित्तिकेषु तु कर्तव्यैव ॥ इति ग्रहशान्तिनिर्णयः ॥ श्री ॥ अथ पूजा[1]विधिः ॥ 'प्रणवं त्वादितः कृत्वा भूर्भुवस्वस्ततः परम् ॥ चतुर्थ्या नाम संयुक्तं नमस्कारान्तयोजितम् ॥ एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः ॥ अनेनावाहनं कार्यमनेनैव विसर्जयेत्' इति ॥ गृह्यसूत्रे ग्रहाणां क्रम उक्तः 'रव्यारभृगुसोमज्ञा गुरुमन्दाहिकेतवः ॥ इति सूत्रक्रमो ज्ञेयो ग्रहाणां च हुतादिषु ॥ अनेनैव क्रमेणैव पूजाहोमादिकं चरेत्' ॥ इति गृह्यसूत्रोक्तप्रकारेण ग्रहाराधनमुच्यते ॥ सूत्रे 'भास्काराङ्गारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ ॥ सोमपुत्रगुरू चैव तावुभौ पीतकौ स्मृतौ ॥ कृष्णं शनैश्चरं विन्द्याद्राहुं केतुं तथैव च ॥ गृहवर्णानि पुष्पाणि प्राज्ञस्तत्रोपकल्पयेत् ॥ बलिं चैवोपहारांश्च गन्धं माल्यं तथैव च ॥ यथाक्रमेणोपहरेत्सर्वेषामानुपूर्वशः' इति ॥ अथ समिधः ॥ 'अर्कश्च खादिरश्चैव चोदुम्बरपालाशकौ ॥ अपामार्गाश्वत्थशम्यो दूर्वा दर्भाः क्रमात्स्मृताः ॥ सर्वेषामलाभे पालाशीः' इति सूत्रम् ॥ पुनश्च सूत्रे 'तण्डुलैः स्थण्डिलं कृत्वा ग्रहानावाहयति' इति ॥ गृह्यसङ्ग्रहे 'मध्ये तु भास्करं विन्द्याल्लोहितं दक्षिणेन तु ॥ पूर्वेण भार्गवं विन्द्यात्पूर्वदक्षिणतः शशी ॥ पूर्वोत्तरे बुधं विन्द्यादुत्तरे तु गुरुं तथा ॥ पश्चिमे तु शनिं विन्द्याद्राहुं दक्षिणपश्चिमे ॥ पश्चिमोत्तरतः केतुर्ग्रहस्थानं विधीयते ॥ दक्षिणोत्तरभागे तु साधिप्रत्यधिदेवताः' इति ॥ 'भानुभार्गवसोमारराहुमन्दाश्च केतवः ॥ गुरुर्बुधश्च सम्पूज्याः मध्यपूर्वादिषु क्रमात्' इति च ॥ 'यवाऽऽढक्यस्तण्डुलाश्च श्यामाका मुद्ग एव च ॥ चणकास्तिलमाषाश्च कुलित्थाश्च क्रमात्क्षिपेत्' इति धान्यानि ॥ अथ मण्डलम् 'वर्तुलं

---

[1] गृह्यसूत्रे 'अश्रद्धधानमशुचिमजपं त्यक्तमङ्गलम् ॥ ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥ ग्रहाणामुग्ररूपाणां नक्षत्रपथचारिणाम् ॥ उपचारान् प्रवक्ष्यामि शान्त्यर्थं तु समासतः ॥' इति ॥

च त्रिकोणं च पञ्चकोणं तथैव च ।। चतुष्कोणं तथाबाणं सदीर्घचतुरस्रकम् ।। धनुः शूर्पध्वजश्चेति भान्वादीनां तु मण्डल[1]म्' ।। अथ ग्रहदेवताः सूत्रे 'ईश्वरं भास्करं विन्द्यात्स्कन्दं अङ्गरकं तथा ।। शुक्र शचीपतिं विन्द्यादुमां चैव निशापतिम् ।। बुधं नारायणं विन्द्याद्ब्रह्माणं च गुरुं तथा ।। यमं शनैश्चरं विन्द्याद्राहुं कालं तथैव च ।। केतुमग्निमयं विन्द्यादेवं देवा यथा ग्रहाः ।। देवता ग्रहरूपेण दर्शयन्ति शुभाशुभम् ।। अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ।। नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ।। अर्कः शुक्रो बुधः पूर्वो गुरुरुत्तरतो मुखः ।। पश्चिमे तु शनिश्चन्द्रः शेषा दक्षिणदिङ्मुखाः ।। अधिदेवताः प्रत्यधिदेवताश्च तत्रैव दर्शिताः 'अग्नीश्वरौ भास्करस्य भूक्षेत्रेशौ कुजस्य हि ।। इन्द्राणीन्द्रौ सितस्याथ आपो गौरी निशापतेः ।। विष्णुर्विष्णुर्बुधस्येन्द्रमरुत्वान्ब्रह्म वै गुरोः ।। शनेः प्रजापतियमौ राहोः सर्पश्च निर्ऋतिः ।। केतोर्ब्रह्मा चित्रगुप्तश्चाधिप्रत्यधिदेवताः ।। लोकपालान् दुर्गिविघ्नक्षेत्रवास्तुत्र्यम्बकान् ।। अभयङ्करमृत्यू च अग्निं वैश्वानरं क्रमात् ।। आवाहयेद्व्याहृतिभिर्यजेद्व्यष्टोपचारकैः ।।' अथ मन्त्राः सूत्रे 'आसत्येनाग्निंदूतंयेषामीश इत्यादित्याय ।। (साधिप्रत्यधिदेवताय इति शेषः) ।। अग्निर्मूर्धा स्योनापृथिवि क्षेत्रस्यपत इत्यङ्गारकाय ।। प्रवश्शुक्रायेन्द्राणीमासुनारिष्विन्द्रंवोविश्वतस्परीति शुक्राय ।। आप्यायस्वाप्सुमेसमो गौरीमिमायेति सोमाय ।। उद्बुध्यस्व विष्णोर्नुकं विष्णोरराटमिति बुधाय ।। बृहस्पतेअतीन्द्रमरुत्वइहपाहि ब्रह्मजज्ञानमिति बृहस्पतये ।। शन्नोदेवीः प्रजापतेनत्वदिमंयमप्रस्तरमिति शनैश्चराय ।। कयानश्चित्र आयङ्गौर्यत्तेदेवीनिर्ऋतिरिति राहवे ।। केतुङ्कृण्वन्ब्रह्मादेवाना सचित्रचित्रमिति केतवे' ।। अथ लोकपालानां 'त्रातारमिन्द्रमग्निर्दाद्रविणं यमोदाधारपृथिवीं असुन्वन्तं सधमादोद्युम्निनीरानोनियुद्भिः सोमोधेनुं सहस्राणिसहस्रधेति' ।। 'जातवेदसे गणानांत्वा क्षेत्रस्यपतिनावयं वास्तोष्पते त्र्यम्बकं यतइन्द्रस्वस्तिदाविशस्पतिर्येतेसहस्रमयुतम्पाशा मूर्धानंदिवोअरतिम्पृथिव्या' इति दुर्गादीनाम् ।। अथर्त्विजः ।। गृह्यपरिशिष्टे 'प्रागभ्युदयात्सप्ताहान्यन्तरीकृत्य कुर्यात् तां दशावराहुति स्वयमेकः कुर्यादूर्ध्वमापञ्चाशतश्चत्वार ऋत्विजः स्युः शतावराहुतावष्टौ नवमआचार्यः स्वयमेव वा ।। यदि स्वयमाचार्यः स्यात्तद्भागं कल्पविदे दद्यात्तान्विधिवद्वरयित्वाऽर्चयेत् ।। आचार्य आदित्यायाय जुहुयादितरेभ्य इतरे पूर्वोत्तरतन्त्रमाचार्यः कुर्यात्तदेवरे तमन्वारभेरन्' इति ।। अथ कलशस्थापनम् ।। 'अथापरेणाग्निं (ग्रहानुत्तरे पृथिव्यप्तेजोवाय्वाकाशगणपतिदुर्गाः कुम्भे पूजयन्ति, अथापरेणाग्निं प्राङ्मुखं दीक्षित कलशाद्भिः मार्जयन्ते' इति गृह्यसूत्रम्) प्राङ्मुख उपविश्याद्भिर्मार्जयते' इति सूत्रे उक्तत्वात्, कारिकायां च 'पृथ्व्यादयस्तथा सप्त प्रोक्ताः कलशदेवताः ।। कलशं

---

[1] अत्र ग्रहमण्डलाद्बहिः नक्षत्रमण्डलं राशिमण्डलं लोकपालदुर्गादीनां च मण्डलं यथासम्भवं लेखनशिष्टाचारप्राप्तानि दृश्यन्ते ।। अतः प्रायोगिकसौकर्याय स च प्रकारः प्रदर्श्यते ।। भान्वादिमण्डलाद्बहिः वृत्तद्वयं लिखेत् यथा तयोर्मध्ये द्व्यङ्गुलमन्तरं वा भवेत् ।। तत्रेशानादि अष्टाविंशतिभागं प्रकल्प्य कमेणाश्विन्यादिभानां वर्णाः, पूरणीयाः ।। ते च वर्णाः यथा - 'पीतः कृष्णोऽरुणोऽग्निः सित घन सितरुद् पीत नीलाच्छकाळश्वेताभा रक्त चित्राऽसित घन सितरुङ्मेघ नीलाऽसिताभाः ।। रक्तः पीतार्जुनाभाऽसित कनक सित श्यामला रोहिताभो दस्रादीनामुडूनां मुनिभिरभिमताः पूजने ते च वर्णाः ।।' इति ।। नक्षत्रमण्डलाद्बहिः दलाष्टकेषु ईशान्यादिक्रमेण मेषादिराशीनां क्रमेण वर्णाः यथा - 'रक्ताच्छपीतरक्ताच्छपीतरक्ताच्छपीतकाः ।। रक्ताच्छपीतवर्णाः स्युः मेषाद्या राशयः क्रमात् ।।' इति ।। अथ इन्द्रदिलोकपालमण्डलं तद्बहिरष्टदलै रचयेत् ।। तेषां तु वर्णाः - पीत रक्तासित श्याम सित घूम्र सितार्जुनाः ।।' इति ।। दुर्गादीनां तु - पश्चाद्भागे उदगपवर्गं अष्टौ स्थानानि कल्पयेत् ।। वर्णाश्च - 'रक्तारुण श्वेत काळ श्वेतासित घनारुणाः ।।' इति ।। सर्वस्मात् बहिः सत्वरजस्तमोरूपा रेखाश्च लेख्याः ।।

चाभिमन्त्र्याद्भिः तदीयाभिस्तु दीक्षितम् उच्चारयन्निमान्मन्त्रानभिषिञ्चेत्ततो गुरुः' इत्युक्तत्वाच्च ग्रहमण्डलादुत्तरे कलशे ताः पूजयेत्।। एकैकार्चने तु तत्रैव 'नवानां भास्करादीनामेकं योऽर्चितुमिच्छति सहैव भास्करेणायमर्चनीयो न केवलः' इति।। शनिस्तु शनिवारेऽर्च्यः, स्वे स्वे वारे तथेतरे।। 'सहैव सर्वग्रहपूजा चेदादित्यवारे भवति एकैकग्रह विषमस्थः पूज्यते चेत् आदित्यपूर्वकः स्वस्ववारे पूजनीयो राहुकेतू शनिवारे पूज्यौ' इति विष्णुभट्टः।।

अथ प्रयोगः।। आत्मनोऽनुकूले चन्द्रनक्षत्रे च सङ्क्रान्तावयनयोर्ग्रहणे जन्मनक्षत्रे वोपनयनादिभूतिकर्मण्युपस्थिते वा विषुवादि सङ्क्रमेषु वा विषमस्थिते वा ग्रहे ग्रहशान्तिं कुर्यात्।। कर्ता प्रातः स्नानादिनित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, पुण्याहपूर्वकं नान्दीश्राद्धं कृत्वा, गणपति सम्पूज्य, पुण्याहं वाचयित्वा, आदित्यादिनवग्रहाः प्रीयन्तामिति विशेषः, प्रोक्षणान्तं कृत्वा, आचार्यादीन्वरयेत्।। यथा।। आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः।। तथा त्वं ग्रहयागेऽस्मिन्नाचार्यो भव सुव्रत।। अस्मिन्ग्रहशान्तिकर्मण्याचार्यं त्वां वृणे।। वृतोऽस्मीति प्रतिवचनम्।। यथा चतुर्मुखो ब्रह्मा स्वर्गे लोके पितामहः।। तथा त्वं ग्रहयागेऽस्मिन्ब्रह्मा भव द्विजोत्तम।। अस्मिन्ग्रहशान्तिकर्मणि ब्रह्माणं त्वां वृणे।। एवमेवर्त्विजश्चतुरोऽष्टौ वा वृत्वा, गन्धादिभिरभ्यर्च्य, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'अश्विनीनक्षत्रे मेषराशौ जातस्य मम जन्मराश्यपेक्षया ये ये ग्रहा अरिष्टस्थानेषु स्थितास्तेषां ग्रहाणां शुभैकादशस्थानफलावाप्त्यर्थं करिष्यमाणामुकलग्नकाले आदित्यादीनां नवानां ग्रहाणां शुभैकादशस्थानफलावाप्त्यर्थं सुलग्नसिद्ध्यर्थं आदित्यादिनवग्रहप्रीत्यर्थं नवग्रहशान्तिं करिष्ये' इति सङ्कल्प्य।। (नित्यनैमित्तिककाम्येषु यथाकार्यं सङ्कल्प ऊह्यः) स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठापनान्तं कृत्वा अन्वाधानसङ्कल्पं कुर्यात्।। नवग्रहशान्तिहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ कपिलो नामाग्निः सूर्यो देवता, धूमकेतुर्नामाग्निरङ्गारको देवता, हाटको नामाग्निः शुक्रो देवता, पिङ्गलो नामाग्निश्चन्द्रो देवता, जाठरो नामाग्निर्बुधो देवता, शिखी नामाग्निर्बृहस्पतिर्देवता, महातेजा नामाग्निः शनैश्चरो देवता, हुताशनो नामाग्नीराहुर्देवता, रोद्रो नामाग्निः केतुर्देवता।। एतेषामादित्यादीनां नवानां ग्रहाणामर्कखदिरोदुम्बरपलाशापामार्गाश्वत्थशमीदूर्वाकुशाख्यसमिच्चर्वाज्यैरष्टोत्तरशतसङ्ख्यया अधीशप्रत्यधीशानां पूर्वोक्तसमिच्चर्वाज्यैरष्टाष्टसङ्ख्यया इन्द्राद्यष्टलोकपालानां दुर्गाद्यष्टदैवतानां च समिच्चर्वाज्यैरष्टाष्टसङ्ख्यया आज्यक्त

तिलव्रीभिः समस्त व्याहृतिभिःअष्टोत्तर शत संख्यया स्विष्टकृद अर्यमादयो देवता आज्यस्य मान्त्रवर्णिक्यो देवता अङ्गदेवताः प्रधानदेवतास्ताः सर्वाः सन्निहिताः सन्तु एवं साङ्गेन कर्मणा सद्यो यक्ष्ये, तदङ्गमन्वाधानं करिष्ये, यद्यष्टाविंशतिसङ्ख्यया प्रधानहोमस्तदेतरेषां त्रिस्त्रिः सङ्ख्यया होमः इति सङ्कल्प्य, अन्वाधानादिकं कृत्वा चरुं निर्वपति ॥ 'ॐ देवस्य त्वा ..... हस्ताभ्यां, सवित्रे जुष्टं निर्वपामि' इति त्रिः, तूष्णी चतुर्थम् ॥ एवमेवाग्रे ॥ ॐ देवस्य त्वा०, अङ्गारकाय जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, शुक्राय जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, सोमाय जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, बुधाय जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, बृहस्पतये जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, शनैश्चराय जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, राहवे जुष्टं निर्वपामि ॥ ॐ देवस्य त्वा०, केतवे जुष्टं निर्वपामीति त्रिः, तूष्णी चतुर्थम् ॥ 'ॐ देवस्य त्वा ..... हस्ताभ्यां, सवित्रे वो जुष्टं प्रोक्षामि' इति सकृन्मन्त्रेण, द्विस्तूष्णी प्रोक्ष्य, अग्रेप्येवम् ॥ अङ्गारकाय वो जुष्टं प्रोक्षामि ॥ शुक्राय वो जुष्टं प्रोक्षामि ॥ सोमाय वो जुष्टं प्रोक्षामि ॥ बुधाय वो जुष्टं प्रोक्षामि ॥ बृहस्पतये वो जुष्टं प्रोक्षामि ॥ शनैश्श्चराय वो जुष्टं प्रोक्षामि ॥ राहवे वो जुष्टं प्रोक्षामि ॥ केतवे वो जुष्टं प्रोक्षामि ॥ इति प्रोक्ष्य ॥

अथोपोत्थाय ग्रहान् पूजयति ॥ अत्र कारिका 'विधिवत्कलशस्थानं तदीशान्यां प्रकल्पयेत् ॥ प्राच्यां ग्रहार्चनस्थानं कृत्वा यागमथाचरेत् ॥ अथाष्टदलमालिख्य पद्मपत्रंसतण्डुलान् ॥ व्रीहीन् कूर्चं च विन्यस्य तत्र कुम्भं सकूर्चकम् ॥ सहिरण्यं निधायैनं पूरयेद्विधिवज्जलम्' इति ॥ स्थण्डिलादीशान्यदिग्भागेऽष्टदलपद्मं विलिख्य तदुपरि व्रीहीन् तण्डुलांश्च निक्षिप्य तस्मिन् तन्तुवेष्टितं कलशं निधाय तस्मिन् पञ्चरत्नानि निक्षिप्य कूर्चमन्तर्धाय तन्मुखं पल्लवफलादिभिः पिधाय वस्त्रयुग्मेन सवेष्ट्य महीद्यौःपृथिवीचन इत्यादिभिः कलशस्थापनं कृत्वा गङ्गे च यमुने चेति तीर्थान्यावाह्य ॥ 'क्ष्मादिभूतानि विघ्नं च दुर्गामावाहयेत्क्रमात्' इति कारिकोक्तप्रकारेण पृथिव्यप्तेजोवाय्वाकाशगणपतिदुर्गा आवाह्य षोडशोपचारपूजां कृत्वाथ स्थण्डिलपूर्वभागे तण्डुलैः स्थण्डिलेऽष्टदलपद्म सकर्णिकं विलिख्य तेषु वक्ष्यमाणप्रकारेण मध्ये प्रधानदेवतायास्तद्दक्षिणेऽधिदेवतायास्तदुत्तरे प्रत्यधिदेवताया इति क्रमेण प्रत्येकं मण्डलत्रयं कुर्यात् ॥ यथा ॥ कर्णिकायां रक्तवर्ण वृत्तं आदित्याय, तद्दक्षिणदले त्रिकोणं रक्तवर्णमादित्यमुखमङ्गारकाय, पूर्वदले पञ्चकोणं शुक्लवर्णमादित्यमुखं शुक्राय, आग्नेयदले समचतुरस्रं शुक्लवर्ण आदित्यमुखं सोमाय, ईशानदले बाणाकारं पीतवर्णमादित्यमुखं बुधाय, उत्तरदले दीर्घचतुरस्रं पीतवर्णमादित्यमुखं बृहस्पतये, पश्चिमदले धनुराकारं कृष्णवर्णमादित्यमुखं शनैश्चराय, नैर्ऋत्यदले शूर्पाकारं कृष्णवर्णमादित्यमुखं राहवे, वायव्यदले ध्वजाकारं धूम्रवर्णमादित्यमुखं केतवे अष्टदिक्षु लोकपालानां पश्चिमे दुर्गादीनामष्टमण्डलानि सर्वाण्यादित्यमुखानि कुर्यात् ॥

'रवीन्दू पश्चिममुखौ दक्षिणास्यौ कुजध्वजौ ॥ प्राङ्मुखौ प्रति विच्छुक्रौ गुरुमन्दावुदङ्मुखौ' इति सत्वेऽपि 'रवेरभिमुखाः पूज्याः पूजायामिति वै ग्रहाः' इत्युक्तत्वात् तथैव पूज्याः ॥ एवं मण्डलानि विरच्य पूजयेत् ॥

अथ नवग्रहपूजा लिख्यते ॥ आसनप्राणायामौ कृत्वा देशकालौ सङ्कीर्त्य आदित्यादिनवग्रहप्रीत्यर्थं नवग्रहपूजां करिष्ये इति सङ्कल्प्य ॥ ग्रहमण्डलं विलिख्य तन्मध्ये ध्यायेत् ॥ 'पद्मासनं पद्महस्तं पद्मगर्भसमद्युतिम् ॥ सप्ताश्वं सारूणरथं द्विभुजं काश्यपिं रविम्' इति ध्यात्वा ॥ ॐ दीप्तायै नमः ॥ ॐ सूक्ष्मायै नमः ॥ ॐ जयायै नमः ॥ ॐ भद्रायै नमः ॥ ॐ विभूत्यै नमः ॥ ॐ विमलायै नमः ॥ ॐ अमोघायै नमः ॥ ॐ विद्युतायै नमः ॥ ॐ सर्वतोमुख्यै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ त्रैलोक्यदीपकं देवं गुणरूपं त्रयीमयम् ॥ स्थापयामि महाभक्त्या भास्करं ग्रहनायकम् ॥ मध्ये वर्तुलाकारमण्डले प्रत्यङ्मुखं कलिङ्गदेशजं काश्यपगोत्रजं विश्वामित्रार्षं विशाखानक्षत्रजं त्रिष्टुपच्छन्दसं कपिलाग्निकं पद्मासनं पद्मवर्णं द्विभुजं रक्तवस्त्रं रक्तगन्धमाणिक्यरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपताकिनं छन्दोमयहरितसप्ताश्वं सप्तरज्जुकमेकचक्रं रक्तं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टं अधिदेवताऽग्निं प्रत्यधिदेवतारुद्रं ॐ भूर्भुवःसुवः आदित्याय नमः आदित्यामावाहयामि ॥ तस्य दक्षिणभागे ॐ भूर्भुवःसुवः अग्नये नमः अधिदेवता अग्निमावाहयामि ॥ तस्य वामभागे ॐ भूर्भुवःसुव रुद्राय नमः प्रत्यधिदेवतांरुद्रमावाहयामि ॥ ॐ भास्कराय विद्महे महद्युतिकराय धीमहि ॥ तन्नो आदित्यः प्रचोदयात् ॥ इदमर्घ्यम् ॥ हिरण्यस्तूप ऋषिः, त्रिष्टुप् छन्दः, सविता देवता ॥ ॐ आसत्येनरजसा हृदयाय नमः ॥ ॐ वर्तमानोनिवेशयन् शिरसे स्वाहा ॥ ॐ अमृतं मर्त्यं च शिखायै वषट् ॥ ॐ हिरण्ययेन सविता कवचाय हुम् ॥ ॐ रथेनाऽऽदेवो याति नेत्रयाय वौषट् ॥ ॐ भुवनाविपश्यन् अस्त्रायफट् ॥ वन्दे रविं द्युमणिमम्बुरुहेनिषण्णं दोर्भ्यां दधानमरुणाम्बुरुहे ग्रहेन्द्रम् ॥ माणिक्यभूषमरुणांशुकगन्धमाल्यैर्भ्राजन्तम-र्कममितद्युतिमब्जमित्रम् ॥ ॐ आसत्येनेति जपः ॥ मेधातिथि ऋषिः ॥ गायत्री छन्दः ॥ अग्निर्देवता ॥ ॐ अग्निं दूतम्० ॥ वामदेव ऋषिः ॥ त्रिष्टुप् छन्दः ॥ रूद्रो देवता ॥ ॐ येषामीशे पशुपतिः० ॥ इत्यावाह्य, ध्यानावाहनादिगन्धाक्षतपुष्पान्तं

कृत्वा ॥ अथ द्वादशनामपूजां करिष्ये ॥ ॐ सहस्रकिरणाय नमः ॥ ॐ सूर्याय नमः ॥ ॐ तपनाय नमः ॥ ॐ सवित्रे नमः ॥ ॐ रवये नमः ॥ ॐ विकर्तनाय नमः ॥ ॐ जगच्चक्षुषे नमः ॥ ॐ द्युमणये नमः ॥ ॐ तरणये नमः ॥ ॐ तिग्मदीधितये नमः ॥ ॐ द्वादशात्मने नमः ॥ ॐ त्रयीमूर्तये नमः ॥ इति द्वादशनामपूजां समर्पयामि ॥ धूपदीपनैवेद्यादिप्रदक्षिणानमस्कारान्तं पूजां कृत्वा ॥ 'कपिले सर्वदेवानां पूजनीया सुरोहिणी ॥ सर्वदेवमयी यस्मादतः शान्तिं प्रयच्छ मे ॥ जपाकुसुमसङ्काशं काश्यपेयं महाद्युतिम् ॥ तमोहरं कल्मषघ्नं भास्करं प्रणमाम्यहम् ॥ दिवाकरं दीप्तिसहस्ररश्मिं तेजोमयं जगतः कर्मसाक्षिम् ॥ मित्रं भानुं सूर्यमादिं ग्रहाणां रविं सदाशरणमहं प्रपद्ये' इति प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति सूर्यपूजा ॥ अथ कुजपूजां करिष्ये ॥ 'रक्तस्रगम्बरालेपं गदाशक्त्यसिशूलिनम् ॥ चतुर्भुजं मेषगमं भारद्वाजं धरासुतम्' इति ध्यात्वा ॥ नवशक्तिपूजां करिष्ये ॥ ॐ लोहितायै नमः ॥ ॐ ज्वालिन्यै नमः ॥ ॐ रौद्रायै नमः ॥ ॐ तीक्ष्णायै नमः ॥ ॐ सूक्ष्मायै नमः ॥ ॐ जयायै नमः ॥ ॐ क्षुधायै नमः ॥ ॐ सारायै नमः ॥ ॐ निर्मलायै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ रक्तकाञ्चनसङ्काशं रक्तकिञ्जल्कसन्निभम् ॥ स्थापयामि महारौद्रं रुद्रमूर्तिं महाबलम् ॥ सूर्यस्य दक्षिणदिग्भागे त्रिकोणाकारमण्डले दक्षिणाभिमुखमवन्तीदेशजं भारद्वाजगोत्रजं जामदग्न्यार्षं गायत्रीछन्दसं धूमकेत्वग्निकं खड्गशक्तिशूलगदाधरं चतुर्भुजं रक्ताम्बरधरं रक्तविद्रुमरत्नाभरणभूषितं किरीटिनं रक्तच्छत्रध्वजपताकिनं रक्तमेषवाहनमग्निजं रक्ताष्टाश्व काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताभूमिं प्रत्यधिदेवताक्षेत्रपालं, ॐ भूर्भुवःसुवः अङ्गारकाय नमः अङ्गारकमावाहयामि ॥ तद्दक्षिणे, ॐ भूर्भुवःसुवः भूम्यै नमः अधिदेवताभूमिं आवाहयामि ॥ तस्य वामे, ॐ भूर्भुवः सुवः स्कन्दाय नमः प्रत्यधिदेवतास्कन्दमावाहयामि, इत्यावाह्य ॥ ॐ भूमिपुत्राय विद्महे लोहिताङ्गाय धीमहि ॥ तन्नो

भौमः प्रचोदयात् ।। इदमर्घ्यम् ।। विश्वरूप ऋषिः ।। गायत्री छन्दः ।। अङ्गारको देवता ।। ॐ अग्निर्मूर्धा हृदयाय नमः ।। ॐ दिवःककुत् शिरसे स्वाहा ।। ॐ पतिःपृथिव्याः शिखायै वषट् ।। ॐ अयं कवचाय हुम् ।। ॐ अपाᳬरेताᳬसि नेत्रत्रयाय वौषट् ।। ॐ जिन्वति अस्त्राय फट् ।। रक्तस्रग्गन्धवासाः करविधृतगदाशक्तिखड्गत्रिशूलो भारद्वाजस्त्रिनेत्रो वसुमतितनयो लोहिताङ्गः शुभाङ्गः ।। मेघव्याघ्रध्वजोर्कद्युतिसदृशमहाकुण्डलाश्लिष्टकर्णः पायाद्भास्वत्किरीटाङ्गदवल-सद्विद्रुमालङ्कृतो नः ।। अग्निर्मूर्धेति जपः ।। मेधातिथि ऋषिः । गायत्री छन्दः । भूमिर्देवता ।। स्योनापृथिवि० ।। वामदेव ऋषिः । त्रिष्टुप् छन्दः । स्कन्दो देवता ।। ॐ क्षेत्रस्य पते मधुमन्तमूर्मिम्० ।। अधिप्रत्यधिदेवतासहिताङ्गारकाय नमः ध्यायामीत्यादि ।। द्वादशनामपूजां करिष्ये ।। ॐ अङ्गारकाय नमः ।। ॐ कुजाय नमः ।। ॐ वक्राय नमः ।। ॐ लोहिताङ्गाय नमः ।। ॐ महीसुताय नमः ।। ॐ कुमाराय नमः ।। ॐ क्रूरदृशे नमः ।। ॐ क्रूराय नमः ।। ॐ रक्तमाल्यानुलेपनाय नमः ।। ॐ आराय नमः ।। ॐ रौद्राननस्वेदबिन्दवे नमः ।। ॐ मेषवाहनाय नमः ।। द्वादशनामपूजां समर्पयामि ।। धूपदीपादिसर्वोपचारान् कृत्वा 'धर्मस्त्वं वृषरूपेण जगदानन्दकारक ।। अष्टमूर्तेरधिष्ठान अतःशान्तिं प्रयच्छ मे ।। धरणीगर्भसम्भूतं विद्युत्काञ्चनसन्निभम् ।। कुमारं शक्तिहस्तं च लोहिताङ्गं नमाम्यहम् ।। महेश्वरस्याननस्वेदबिन्दोर्भूमौ जातं रक्तमाल्याम्बराढ्यम् ।। सुदीधितिं लोहिताङ्गं कुमारमङ्गारकं सदा शरणमहं प्रपद्ये ।। प्रार्थनां समर्पयामि ।। सर्वोपचारपूजां समर्पयामि ।। इत्यङ्गारकपूजा ।। अथ शुक्रपूजां करिष्ये ।। 'शुक्रं शुक्लतनुं श्वेतवस्त्राढ्यं दैत्यमन्त्रिणम् ।। भार्गवं दण्डवरदकमण्डल्वक्षसूत्रिणम् ।।' इति ध्यात्वा ।। नवशक्तिपूजां करिष्ये ।। ॐ शान्तायै नमः ।। ॐ नन्दायै नमः ।। ॐ स्मृत्यै नमः ।। ॐ कान्त्यै नमः ।। ॐ लक्ष्म्यै नमः ।। ॐ प्रीत्यै नमः ।। ॐ कलायै नमः ।। ॐ अमलायै नमः ।। ॐ सर्वसत्वकर्यै नमः ।। नवशक्तिपूजां समर्पयामि ।। कुन्दपुष्पसमानाभं मुक्ताफलसमप्रभम् ।। स्थापयामि महाशान्तं भृगुं दैत्यगुरुं प्रभुम् ।। सूर्यस्य पूर्वदिग्भागे पंचकोणाकारमण्डले प्राङ्मुखं भोजकटकदेशजं भार्गवगोत्रजं शौनकार्षं निष्यनक्षत्रजं त्रिष्टुप्धन्दसं हाटकाग्निकं श्वेतमक्षसूत्रदण्डकमण्डलुवरदचतुर्भुजं श्वेताम्बरगन्धमाल्यवज्ररत्नाभरणभूषितं किरीटिनं =

श्वेतच्छत्र ध्वजपताकिनं श्वेताश्ववाहनं भूसम्भवश्वेतदशाश्वं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्राणीं प्रत्यधिदेवतेन्द्रं ॐ भूर्भुवःसुवः शुक्राय नमः शुक्रमावाहयामि ॥ तद्दक्षिणे ॐ भूर्भुवःसुवः इन्द्राण्यै नमः इन्द्राणीमावाहयामि ॥ तदुत्तरे ॐ भूर्भुवःसुवः इन्द्राय नमः इन्द्रमावाहयामि ॥ ॐ भृगुपुत्राय विद्महे दैत्यपूज्याय धीमहि ॥ तन्नः शुक्रः प्रचोदयात् । इदमर्घ्यम् ॥ वसिष्ठऋषिः । त्रिष्टुप् छन्दः । शुक्रो देवता ॥ ॐ प्रवश्शुक्राय हृदयाय नमः ॥ ॐ भानवे भरध्वं शिरसे स्वाहा ॥ ॐ हव्यं मतिं चाग्नये सुपूतं शिखायै वषट् ॥ ॐ यो दैव्यानि कवचायहुम् ॥ ॐ मानुषा जनू ॒षि नेत्रत्रयाय वौषट् ॥ ॐ अन्तर्विश्वानि विद्मना जिगाति अस्त्रायफट् ॥ वन्दे विराजितसितांशुकगन्धमाल्यमच्छाश्वगं तनुविराजितवज्ररत्नम् ॥ दोर्भिः सदण्डगुणकुण्डितमक्षसूत्रं बिभ्राणमासुरगुरुं भृगुपुत्रमीड्यम् ॥ ॐ प्रवश्शुक्रायेति जपः ॥ वृषाकपि ऋषिः । अनुष्टुप् छन्दः । इन्द्राणी देवता ॥ ॐ इन्द्राणीमासुनारिषु० ॥ मेधातिथि ऋषिः । गायत्री छन्दः । इन्द्रो देवता ॥ ॐ इन्द्रं वो विश्वतस्परि० ॥ द्वादशनामपूजां करिष्ये ॥ ॐ शुक्राय नमः ॥ ॐ सिताय नमः ॥ ॐ विशुद्धात्मने नमः ॥ ॐ योगमूर्तये नमः ॥ ॐ भृगूद्वहाय नमः ॥ ॐ कवये नमः ॥ ॐ शान्ताय नमः ॥ ॐ तेजस्विने नमः ॥ ॐ सर्वशास्त्रविशारदाय नमः ॥ ॐ श्वेतवस्त्रधराय नमः ॥ ॐ दैत्यमन्त्रिणे नमः ॥ ॐ विनयकोविदाय नमः ॥ द्वादशनामपूजां समर्पयामि ॥ ध्यानावाहनादिषोडशोपचारान् कृत्वा ॥ विष्णुस्त्वमश्वरूपेण यस्मादमृतसम्भवः ॥ विष्णोरर्कस्य वाहः स्यादतश्शान्तिं प्रयच्छ मे ॥ हिमकुन्दतुषाराभं दैत्यानां परमं गुरुम् ॥ सर्वशास्त्रप्रदातारं भार्गवं प्रणमाम्यहम् ॥ वर्षप्लवं चिन्तितार्थानुकूलं नयप्रधानं विनयोपपन्नम् ॥ तं भार्गवं योगविशुद्धसत्वं शुक्रं सदा शरणमहं प्रपद्ये ॥ प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति शुक्रपूजा ॥ अथ चन्द्रपूजां करिष्ये ॥ नवशक्तिपूजा करिष्ये ॥ ॐ राकायै नमः ॥ ॐ कुमुद्वत्यै नमः ॥ ॐ नन्दायै नमः ॥ ॐ सुधायै नमः ॥ ॐ सञ्जीविन्यै

नमः ।। ॐ क्षमायै नमः ।। ॐ ज्योत्स्नायै नमः ।। ॐ नित्यायै नमः ।। ॐ प्रभायै नमः ।। नवशक्तिपूजां समर्पयामि ।। श्वेतवस्त्रधरं श्वेतदशाश्वं रथवाहनम् ।। द्विभुजं साभयगदमात्रेयं सामृतं विधुम् ।। इति ध्यात्वा ।। शान्तं नक्षत्रनाथं च रोहिणीवल्लभं प्रभुम् ।। कुन्दपुष्पोज्वलाकारं स्थापयामि निशाकरम् ।। सूर्यस्याग्नेयदिग्भागे चतुरस्राकारमण्डले प्रत्यङ्मुख यमुनादेशजं आत्रेयगोत्रजमात्रेयार्षं कृत्तिकानक्षत्रजं गायत्रीछन्दसं पिङ्गलाग्निकमबयगदाधरं द्विभुजं श्वेताम्बरगन्धमाल्यमुक्ताभरणभूषितं किरीटिनं श्श्वेतच्छत्रध्वजपताकिनं वारिसम्भूतदशाश्श्वं त्रिचक्रं श्वेतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताऽऽपं प्रत्यधिदेवतागौरीम् ।। ॐ भूर्भुवःसुवः चन्द्राय नमः चन्द्रमावाहयामि ।। तद्दक्षिणे ॐ भूर्भुवःसुवः अधिदेवतां अप आवाहयामि ।। तदुत्तरे ॐ भूर्भुवःसुवः प्रत्यधिदेवतां गौरीमावाहयामि ।। ॐ अत्रिपुत्राय विद्महे रात्रिनाथाय धीमहि ।। तन्नश्चन्द्रः प्रचोदयात् इदमर्घ्यम् ।। गौतम ऋषिः । गायत्री छन्दः । सोमो देवता ।। ॐ आप्यायस्व हृदयाय नमः ।। ॐ समेतुते शिरसे स्वाहा ।। ॐ विश्वतः शिखायै वषट् ।। ॐ सोम वृष्णियं कवचाय हुम् ।। ॐ भवावाजस्य नेत्रत्रयाय वौषट् ।। ॐ सङ्गथे अस्त्राय फट् ।। श्वेताम्बरस्त्रगनुलेपनमत्रिनेत्रजातं दशाश्वरथवाहनमोषधीशम् ।। दोर्भ्यां धृताभयगदं भपतिं सुधांशुं श्रीमत्सुमौक्तिकधरं प्रणमामि चन्द्रम् ।। ॐ आप्यायस्वसमेतुत इति जपः ।। मेधातिथि ऋषिः । अनुष्टुप् छन्दः । आपो देवता ।। ॐ अप्सुमेसोमोअब्रवीत्० ।। दीर्घतम ऋषिः । जगती छन्दः । गौरी देवता ।। ॐ गौरीमिमाय० ।। अथ द्वादशनामपूजां करिष्ये ।। ॐ विधवे नमः ।। ॐ सुधाकरायनमः ।। ॐ चन्द्राय नमः ।। ॐ इन्द्रवेनमः ।। ॐ कुमुदबान्धवाय नमः ।। ॐ ओषधीशाय नमः ।। ॐ निशानाथाय नमः ।। ॐ शशिने नमः ।। ॐ शङ्करभूषणाय नमः ।। ॐ अत्रिनेत्रसमुद्भवाय नमः ।। ॐ रोहिणीशाय नमः ।। ॐ कलानिधये नमः ।। द्वादशनामपूजां समर्पयामि ।। ध्यानावाहनादिसर्वोपचारपूजां समर्पयामि ।। पुण्यस्त्वं शङ्ख पुण्यानां मङ्गलानां च मङ्गलम् ।। विष्णुना विधृतो नित्यमतश्शान्तिं प्रयच्छ मे ।। दधिशङ्खतुषाराभं क्षीरोदार्णवसम्भवम् ।। नमामि शशिनं भक्त्या शम्भोर्मुकुटभूषणम् ।। यः कालहेतोः क्षयवृद्धिमेति यं

देवताः पितरो वा पिबन्ति ॥ तं वैवरेण्यं ब्रह्मेन्द्रवन्द्यं सोमं सदा शरणमहं प्रपद्ये ॥ प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति चन्द्रपूजा ॥ अथ बुधपूजां करिष्ये ॥ नवशक्तिपूजां करिष्ये ॥ ॐ चन्द्रिकायै नमः ॥ ॐ कौमुद्यै नमः नमः ॥ ॐ ज्योत्स्नायै नमः ॥ ॐ सन्ध्यायै नमः ॥ ॐ विद्यायै नमः ॥ ॐ सरस्वत्यै नमः ॥ ॐ मेधायै नमः ॥ ॐ प्रज्ञायै नमः ॥ ॐ प्रभायै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ पीतस्रग्गन्धवस्त्राढ्यं स्वर्णाभं च चतुर्भुजम् ॥ शक्तिचर्मासिगदिनं आत्रेयं सिंहगं बुधम् ॥ चाम्पेयपुष्पसङ्काशं विशुद्धकनकप्रभम् ॥ स्थापयामि महासौम्यं बुधं सोमात्मजं प्रभुम् ॥ सूर्यस्येशानदिग्भागे बाणाकारमण्डले प्राङ्मुखं मगधदेशजमात्रेयगोत्रजं भारद्वाजार्षं श्रविष्ठानक्षत्रजं त्रिष्टुप्छन्दसं जाठराग्निकं शक्तिखङ्गचर्मगदाधरं चतुर्भुजं पीताम्बरगन्धमाल्यमरकतरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं पीतसिंहवाहनं वाय्वग्निजपीताष्टाश्वं पीतं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताविष्णुं प्रत्यधिदेवताविष्णुम् ॥ ॐ भूर्भुवःसुवः बुधाय नमः बुधमावाहयामि ॥ तद्दक्षिणे ॐ भूर्भुवःसुवः विष्णवे नमः अधिदेवतां विष्णुमावाहयामि ॥ तद्वामे, ॐ भूर्भुवःसुवः विष्णवे नमः प्रत्यधिदेवतां विष्णुमावाहयामि ॥ ॐ सोमपुत्राय विद्महे महाराजाय धीमहि ॥ तन्नो बुधः प्रचोदयात्, इदमर्घ्यम् ॥ प्रबुध ऋषिः । त्रिष्टुप् छन्दः । बुधो देवता ॥ ॐ उद्बुध्यस्वाग्ने हृदयाय नमः ॥ ॐ प्रतिजागृह्येनं शिरसे स्वाहा ॥ ॐ इष्टपूर्ते सꣳसृजेथामयं च शिखायै वषट् ॥ ॐ पुनःकृण्वꣳस्त्वा कवचाय हुम् ॥ ॐ पितरं युवानं नेत्रत्रयाय वौषट् ॥ ॐ अन्वाताꣳसि त्वयि तन्तुमेतम् अस्त्राय फट् ॥ वन्दे बुधं मरकतोज्ज्वलदेहकान्तिं पीताम्बरस्रगनुलेपनभूषिताङ्गम् ॥ शक्तिं च दोर्भिरसिचर्मगदा दधानं सिंहध्वजं शशिसुतं बुधमत्रिवंश्यम् ॥ ॐ उद्बुध्यस्वाग्ने इति जपः ॥ दीर्घतम ऋषिः । त्रिष्टुप् छन्दः । विष्णुर्देवता ॥ ॐ विष्णोर्नुकं वीर्याणि० ॥ वामदेव ऋषिः । पङ्क्तिश्छन्दः । विष्णुर्देवता ॥ ॐ विष्णोरराटमसि० ॥ द्वादशनामपूजां करिष्ये ॥ ॐ सोमपुत्राय

नमः ॥ ॐ बुधाय नमः ॥ ॐ सौम्याय नमः ॥ ॐ ज्ञानमूर्तये नमः ॥ ॐ त्रिकालविदे नमः ॥ ॐ सिद्धबोधनाय नमः ॥ ॐ सिंहवाहनाय नमः ॥ ॐ प्राज्ञाय नमः ॥ ॐ पीतस्रग्गन्धभूषणाय नमः ॥ ॐ उर्वशीश्वशुराय नमः ॥ ॐ सिद्धबोधनाय नमः ॥ ॐ सिंहवाहनाय नमः ॥ द्वादशनामपूजां समर्पयामि ॥ हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः ॥ अनन्तपुण्यफलदमतश्शान्तिं प्रयच्छ मे ॥ प्रियङ्गुगुलिकाभासं रूपेणाप्रतिम् बुधम् ॥ सौम्यं सौम्यगुणोपेतं नमामि शशिनस्सुतम् ॥ विशुद्धबुद्धिं श्रुतिकालबोधं सद्व्याहारं सोमवंशप्रदीपम् ॥ सुदीधितिं छान्दसं विश्वरूपं बुधं सदा शरणमहं प्रपद्ये ॥ प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति बुधपूजा ॥ अथ गुरुपूजां करिष्ये ॥ नवशक्तिपूजां करिष्ये ॥ ॐ धृत्यै नमः ॥ ॐ कान्त्यै नमः ॥ ॐ दयायै नमः ॥ ॐ मेधायै नमः ॥ ॐ प्रज्ञायै नमः ॥ ॐ विद्यायै नमः ॥ ॐ यशस्विन्यै नमः ॥ ॐ स्थिरायै नमः ॥ ॐ सुप्रभायै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ आङ्गीरसं देवगुरुं पीतस्रग्गन्धवाससम् ॥ दण्डिनं वरदं पीतं साक्षसूत्रकमण्डलुम् ॥ कुन्दपुष्पसमानाभं तप्तकाञ्चनसन्निभम् ॥ स्थापयामि महाभक्त्या प्रसन्नवदनं गुरुम् ॥ सूर्ययोत्तरदिग्भागे दीर्घचतुरस्रमण्डले उदङ्मुखं सिन्धुदेशजमाङ्गीरसगोत्रजं वसिष्ठार्षमुत्तराफल्गुनीनक्षत्रजं त्रिष्टुप् छन्दसं शिख्यग्निकं पीतं अक्षसूत्रदण्डकमण्डलुवरदचतुर्भुजं पीताम्बरगन्धमाल्यपुष्परागरत्नाभरणभूषितं किरीटिनं पीतच्छत्रध्वजपताकिनं विश्वरूपाख्यपाण्डुराष्टाश्वं काञ्चनं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवतेन्द्रं प्रत्यधिदेवताब्रह्माणम् ॥ ॐ भूर्भुवःसुवः बृहस्पतये नमः बृहस्पतिमावाहयामि ॥ तद्दक्षिणे ॐ भूर्भुवःसुवः इन्द्राय नमः अधिदेवतेन्द्रमावाहयामि ॥तद्वामे, ॐ भूर्भुवःसुवः ब्रह्मणे नमः प्रत्यधिदेवताब्रह्मणमावाहयामि ॥ ॐ ब्रह्मपुत्राय विद्महे देवपूज्याय धीमहि ॥ तन्नो गुरुः प्रचोदयात् ॥ इदमर्घ्यम् ॥ गृत्समद ऋषिः । त्रिष्टुप् छन्दः । बृहस्पतिर्देवता ॥ ॐ बृहस्पतेअतियदर्यः हृदयाय नमः ॥ ॐ अर्हाद्युमद्विभाति शिरसे स्वाहा ॥ ॐ क्रतुमज्जनेषु शिखायै वषट् ॥ ॐ यद्दीदयच्छवसा कवचाय हुम् ॥ ॐ ऋतप्रजाततदस्मासु नेत्रत्रयाय वौषट् ॥ ॐ द्रविणं धेहि चित्रं अस्त्राय फट् ॥ पीताम्बरं तनुलसद्धृतपुष्परागं केयूरहारमणिकुण्डलमण्डिताङ्गम् ॥दण्डं

वराक्षगुणकुण्डयुतं दधानमाङ्गीरसं सुरगुरुं हयगं नमामि ॥ ॐ बृहस्पते अतियदर्य० इति जपः ॥ वामदेव ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता ॥ ॐ इन्द्र मरुत्व इह पाहि सोमम्० ॥ नकुल ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता ॥ ॐ ब्रह्म जज्ञानम्० ॥ द्वादशनामपूजा करिष्ये ॥ ॐ बृहस्पतये नमः ॥ ॐ सुराचार्याय नमः ॥ ॐ जीवाय नमः ॥ ॐ आङ्गिरसाय नमः ॥ ॐ गुरवे नमः ॥ ॐ गीष्पतये नमः ॥ ॐ धिषणाय नमः ॥ ॐ चित्रशिखण्डिने नमः ॥ ॐ पीतवस्त्रधृते नमः ॥ ॐ तेजोमूर्तये नमः ॥ ॐ महामूर्तये नमः ॥ ॐ कमलासननन्दनाय नमः ॥ द्वादशनामपूजां समर्पयामि ॥ ध्यानावाहनादिषोडशोपचारान् कृत्वा ॥ पीतवस्त्रयुगं यस्माद्वासुदेवस्य वल्लभम् ॥ प्रदानादस्य मे विष्णुः प्रीतो भवतु सर्वदा ॥ देवतानामृषीणां च गुरुं काञ्चनसन्निभम् ॥ सुवन्द्यं त्रिषु लोकेषु प्रणमामि बृहस्पतिम् ॥ बुध्यात्मनो यस्य न कश्चिदन्यो मतिं देवा उपजीनन्ति यस्य ॥ प्रजापतेरात्मजं धर्मनित्यं बृहस्पतिं सदा शरणमहं प्रपद्ये ॥ प्रार्थनां समपरयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति गुरुपूजा ॥ अथ शनिपूजां करिष्ये ॥ नवशक्तिपूजां करिष्ये ॥ ॐ भयायै नमः ॥ ॐ तन्द्र्यै नमः ॥ ॐ क्षुधायै नमः ॥ ॐ मृत्यवे नमः ॥ ॐ जरायै नमः ॥ ॐ मायायै नमः ॥ ॐ मनोमय्यै नमः ॥ ॐ कामिकायै नमः ॥ ॐ वरदायै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ इन्द्रनीलनिभं मन्दं काश्यपिं चित्रभूषणम् ॥ चापबाणधरं चर्मशूलिनं गृध्रवाहनम् ॥ इन्द्रनीलसमानाभं नीलोत्पलसमप्रभम् ॥ स्थापयामि महारौद्रं सूर्यपुत्रं शनैश्चरम् ॥ सूर्यस्य पश्चिमदिग्भागे धनुराकारमण्डले उदङ्मुखं काश्यपगोत्रजं भृग्वार्षेयं रेवतीनक्षत्रजं सौराष्ट्रदेशजं गायत्री छन्दसं महातेजोग्निकं नीलं चर्मबाणधनुश्शूलधरंचतुर्भुजं नीलाम्बरगन्धमाल्यनीलरत्नाभरणभूषितं किरीटिनं नीलच्छत्रध्वजपताकिनं नीलगृध्रवाहनमाकाशजजम्बालाष्टाश्वं नीलं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं गृहमण्डले प्रविष्टमधिदेवताप्रजापतिं प्रत्यधिदेवतायमम् ॥ ॐ भूर्भुवःसुवः शनैश्चरमावाहयामि ॥ तद्दक्षिणे, ॐ भूर्भुवःसुवः प्रजापतये नमः

अधिदेवताप्रजापतिमावाहयामि ।। तद्वामे, ॐ भूर्भुवःसुवः यमाय नमः प्रत्यधिदेवतायममावाहयामि ।। सूर्यपुत्राय विद्महे शनैश्चराय धीमहि ।। तन्नो मन्दः प्रचोदयात् इदमर्घ्यम् ।। सिन्धुद्वीप ऋषिः । गायत्री छन्दः । शनैश्चरो देवता ।। ॐ शन्नो देवीः हृदयाय नमः ।। ॐ अभीष्टये शिरसे स्वाहा ।। ॐ आपो भवन्तु शिखायै वषट् ।। ॐ पीतये कवचाय हुम् ।। ॐ शंयोरभि नेत्रत्रयाय वौषट् ।। ॐ स्रवन्तुनः अस्त्राय फट् ।।दोभिर्धनुर्विशिखचर्मधरं त्रिशूलं भास्वत्किरीटमुकुटोज्ज्वलि-तेन्द्रनीलम् ।। नीलातपत्रकुसुमांशुकगन्धभूषं गृध्रस्थितं रविसुतं प्रणतोऽस्मि मन्दम् ।। ॐ शन्नो देवीरभिष्टय० इति जपः ।। हिरण्यगर्भ ऋषिः । त्रिष्टुप् छन्दः । प्रजापतिर्देवता ।। ॐ प्रजापते नत्वदेतान्यन्यः० ।। वामदेव ऋषिः । त्रिष्टुप् छन्दः । यमो देवता ।। ॐ इमं यमप्रस्तर० ।। द्वादशनामपूजा करिष्ये ।। ॐ मन्दाय नमः ।। ॐ शनैश्चराय नमः ।। ॐ कोणाय नमः ।। ॐ पङ्गवे नमः ।। ॐ छायासुताय नमः ।। ॐ असिताय नमः ।। ॐ सूर्यपुत्राय नमः ।। ॐ कालाय नमः ।। ॐ श्राद्धदेवसहोदराय नमः ।। ॐ चतुर्भुजाय नमः ।। ॐ चित्रभूषणाय नमः ।। ॐ गृध्रवाहनाय नमः ।। इति द्वादशनामपूजां समर्पयामि ।। ध्यानावाहनादिषोडशोपचारपूजां कृत्वा ।। गवामङ्गेषु तिष्ठन्ति भुवनानि चतुर्दश ।। यस्मात्तस्माच्छिवं मे स्यादतश्शान्तिं प्रयच्छ मे ।। नीलाञ्जनचयाकारं रविसूनुं नपुंसकम् ।। छायागर्भसमुद्भूतं वन्दे भक्त्या शनैश्चरम् ।। शनैश्चरः प्रजापतिःर्योहि यस्य शनैर्भोगो गमनं चेष्टितं च ।। सूर्यात्मजं क्रोधनं सुप्रसन्नं शनैश्चरं सदा शरणमहं प्रपद्ये ।। प्रार्थनां समर्पयामि ।। सर्वोपचारपूजां समर्पयामि ।। इति शनिपूजा ।। अथ राहुपूजां करिष्ये ।। नवशक्तिपूजां करिष्ये ।। ॐ उग्रायै नमः ।। ॐ यमदूत्यै नमः ।। ॐ कराल्यै नमः ।। ॐ विकरालिकायै नमः ।। ॐ धूम्रायै नमः ।। ॐ तीव्रायै नमः ।। ॐ अजितायै नमः ।। ॐ रक्तायै नमः ।। ॐ क्रूरायै नमः ।। नवशक्तिपूजां समर्पयामि ।। सैंहिकेयं करालास्यं कौण्डिनेयं तमोमयम् ।। खड्गचर्मधरं भीमं नीलसिंहासने स्थितम् ।। नीलाञ्जनसमानाभं नीलमेघसमद्युतिम् ।। स्थापयामि महावक्त्रं राहुं चन्द्रार्कवैरिणम् ।। सूर्यस्य नैर्ऋत्यदिग्भागे शूर्पाकारमण्डले दक्षिणाभिमुखं बर्बरदेशजं पैठीनसिगोत्रजमाङ्गिरसार्षमश्विनीनक्षत्रजं गायत्रीछन्दसं हुताशनाग्निकं कृष्णं खड्गचर्मधरं द्विभुजं

कृष्णाम्बरगन्धमाल्यगोमेदरत्नाभरणभूषितं किरीदिनं कृष्णच्छत्रध्वजपताकिनं करालवदनमुरगालङ्कारं कृष्णसिंहासने स्थितमष्टाश्वं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्मधिदेवतासर्पं प्रत्यधिदेवतानिर्ऋतिम् ॥ ॐ भूर्भुवःसुवः राहवे नमः राहुमावाहयामि ॥ तद्दक्षिणे, ॐ भूर्भुवःसुवः सर्पाय नमः अधिदेवतासर्पमावाहयामि ॥ तद्वामे, ॐ भूर्भुवःसुवः निर्ऋतये नमः प्रत्यधिदेवतानिर्ऋतिमावाहयामि ॥ ॐ सैहिकेयाय विद्महे तमोमयाय धीमहि ॥ तन्नो राहुः प्रचोदयात् इदमर्घ्यम् ॥ वामदेव ऋषिः गायत्री छन्दः राहुर्देवता ॥ ॐ कयानः हृदयाय नमः ॥ ॐ चित्रआभुवत् शिरसे स्वाहा ॥ ॐ ऊतीसदावृधः शिखायै वषट् ॥ ॐ सखा कवचाय हुम् ॥ ॐ कयाशचिष्ठया नेत्रत्रयाय वौएट् ॥ ॐ वृता अस्त्रायफट् ॥ राहुं कराग्रपरिमण्डितचर्मखङ्गं भीमं तमोमयतनुं तममिन्द्विनारिम् ॥ कौण्डिन्यसूनुमसिता-शुकगन्धभूषं गोमेदभूषिततनुं हरिगं नमामि ॥ ॐ कयानश्चित्रआभुवत्० इति जपः ॥ सार्पराज्ञि ऋषिः । गायत्री छन्दः । सर्पो देवता ॥ ॐ आयङ्गौः पृश्निरक्रमीत्० ॥ वामदेव ऋषिः । त्रिष्टुप् छन्दः । निर्ऋतिर्देवता ॥ ॐ यत्ते देवी निरऋतिराबबन्ध० ॥ द्वादशनामपूजां करिष्ये ॥ ॐ सैहिकेयाय नमः ॥ ॐ तमोमयाय नमः ॥ ॐ राहवे नमः ॥ ॐ करालास्याय नमः ॥ ॐ विधुन्तुदाय नमः ॥ ॐ स्वर्भानवे नमः ॥ ॐ असुराय नमः ॥ ॐ सर्पाय नमः ॥ ॐ प्रतिलोमजाय नमः ॥ ॐ नीलसिंहासनाय नमः ॥ ॐ चन्द्रसूर्यवैरिणे नमः ॥ ॐ भयङ्कराय नमः ॥ द्वादशनामपूजां समर्पयामि ॥ यस्मात्वं छाग यज्ञानामङ्गत्वेन व्यवस्थितः ॥ यानं विभावसोर्नित्यमतः शान्तिं प्रयच्छ मे ॥ अर्धकायं महावीर्यं चन्द्रादित्यविमर्दनम् ॥ सिंहिकागर्भसम्भूतं तं राहुं प्रणमाम्यहम् ॥ यो विष्णुनैवामृतं पीयमानश्छित्वा शिरो ग्रहभावे नियुक्तः ॥ योऽभ्यर्कचन्द्रौ ग्रसति पर्वकाले राहुं सदा शरणमहं प्रपद्ये ॥ प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति राहुपूजा ॥ अथ केतुपूजां करिष्ये ॥ नवशक्तिपूजां करिष्ये ॥ ॐनिम्नायै नमः ॥ ॐ अभयायै नमः ॥ ॐ प्रकीर्णायै

नमः ॥ ॐ क्लिन्नायै नमः ॥ ॐ भेदायै नमः ॥ ॐ उत्कटायै नमः ॥ ॐ यज्ञायै नमः ॥ ॐ प्रतिज्ञायै नमः ॥ ॐ घोरायै नमः ॥ नवशक्तिपूजां समर्पयामि ॥ धूम्रान् द्विबाहुगदिनो विकृतास्यान् शतात्मकान् ॥ गृध्रासनगतान् केतून् वरदान् ब्रह्मणस्सुतान् ॥ नीलमेघसमानाभं चित्रवर्णमहाबलम् ॥ स्थापयामि महारौद्रं केतुं सर्वफलप्रदम् ॥ सूर्यस्य वायव्यदिग्भागे ध्वजाकारमण्डले दक्षिणाभिमुखमन्तर्वेदिदेशजं जैमिनिसूत्रजं भारद्वाजार्षं चित्रानक्षत्रजं रौद्राग्निकं धूम्रवरदगदाधरं द्विभुजं चित्राम्बरगन्धमाल्यवैडूर्यरत्नाभरणभूषितं किरीटिनं धूम्रच्छत्रध्वजपताकिनं चित्रगृध्रवाहनं धूम्रारुणाष्टाश्वं धूम्रं रथमारुह्य दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमण्डले प्रविष्टमधिदेवताब्रह्माणं प्रत्यधिदेवताचित्रगुप्तम् ॥ ॐ भुर्भुवःसुवः केतवे नमः केतुमावाहयामि ॥ तद्दक्षिणे, ॐ भूर्भुवःसुवः ब्रह्मणे नमः अधिदेवताब्रह्माणमावाहयामि ॥ तद्वामे, ॐ भूर्भुवःसुवः चित्रगुप्ताय नमः प्रत्यधिदेवताचित्रगुप्तमावाहयामि ॥ ॐ ब्रह्मपु॒त्राय॑ वि॒द्म॑हे धूम्रव॒र्णाय॑ धीमहि ॥ तन्न॑ः केतुः प्र॒चोद॑यात् इदमर्घ्यं ॥ मधुच्छन्द ऋषिः । गायत्री छन्दः । केतुर्देवता ॥ ॐ केतुकृण्वन् हृदयाय नमः ॥ ॐ अकेतवे शिरसे स्वाहा ॥ ॐ पेशोमर्याः शिखायै वषट् ॥ ॐ अपेशसे कवचाय हुम् ॥ ॐ समुषद्भिः नेत्रत्रयाय वौषट् ॥ ॐ अजायथाः अस्त्राय फट् ॥ गृध्रस्थितान् जलजयोनिसमानवक्त्रान् धूम्रान् वराभयकरान् सुभुजान् कुमारान् ॥ वैडूर्यभूषिततनून् वरजैमिनेयान् केतून् भयानकमुखान् द्विभुजान् नमामि ॥ ॐ केतुं कृण्वन्नकेतवे० इति जपः ॥ वामदेव ऋषिः । त्रिष्टुप् छन्दः । ब्रह्मा देवता ॥ ॐ ब्रह्मा देवानां० ॥ भारद्वाज ऋषिः । त्रिष्टुप् छन्दः । चित्रगुप्तो देवता ॥ ॐ सचित्रचित्रं० ॥ द्वादशनामपूजां करिष्ये ॥ ॐ ब्रह्मात्मजेभ्यो नमः ॥ ॐ चतुर्वक्त्रेभ्यो नमः ॥ ॐ शिखिभ्यो नमः ॥ ॐ केतुभ्यो नमः ॥ ॐ ध्वजेभ्यो नमः ॥ ॐ धूम्रेभ्यो नमः ॥ ॐ द्विबाहुभ्यो नमः ॥ ॐ गृध्रवाहनेभ्यो नमः ॥ ॐ चित्रभूषणेभ्यो नमः ॥ ॐ विकृतास्येभ्यो नमः ॥ ॐ शतात्मजेभ्यो नमः ॥ ॐ जागन्नाशैकहेतुभ्यो नमः ॥ द्वादशनामपूजां समर्पयामि ॥ ध्यानावाहनादिषोडशोपचारान् कृत्वा ॥ महासत्व महाकाय क्षीरोदार्णवसम्भव ॥ सर्वसङ्ग्रामविजय जयं गज कुरुष्व मे ॥ पलालधूम्रसङ्काशान् तारकाग्रहमस्तकान् ॥ रुद्रान् रौद्रात्मकान् घोरान् तान् केतून् प्रणमाम्यहम् ॥ ये ब्रह्मपुत्रा

ब्रह्मसमानवक्त्रा ब्रह्मोद्भवा ब्रह्मसमाः कुमाराः ॥ ब्रह्मोत्तमा वरदा जामदग्न्याः केतून् सदा शरणमहं प्रपद्ये ॥ इति प्रार्थनां समर्पयामि ॥ सर्वोपचारपूजां समर्पयामि ॥ इति केतुपूजा ॥ इति नवग्रहपूजाविधिः ॥६॥ अथ ग्रहशान्तिसूत्रम् ॥ ''अथातो ग्रहातिथ्यबलिकर्मोपहारान् व्याख्यास्यामः ॥ अश्रद्दधानमशुचिमजपं त्यक्तमङ्गलम् ॥ ग्रहा नयन्ति सुव्यक्तं पुरुषं यमसादनम् ॥ ग्रहाणामुग्रचेष्टानां नक्षत्रपथचारिणाम् ॥ उपचारान् प्रवक्ष्यामि शान्त्यर्थं तु यथाविधि ॥ मासिमास्यृतावृतावयने चन्द्रसूर्यग्रहे विषुवे शुभाशुभे जन्मनक्षत्रे वा तद्ग्रहाणामातिथ्यं संवत्सरादपि प्रयुञ्जानः सर्वान् कामानवाप्नोतीत्युक्तमेकाग्निविधानम् इत्यादि ॥ पुरोनुवाक्यामनूच्य याज्यया जुहोति सदेवत्वायेति ब्राह्मणं ॥ यत्रैकाम्नाता स्यात्तां द्विरभ्यावर्तयेत् ॥ तत्सवितुर्वरेण्यमित्यनुद्रुत्याऽऽम्नातया जुहोति वा ॥ नवानां ग्रहाणां पक्वं हुत्वा घृतान्वक्तानां समिधां अष्टसहस्रमष्टशतमष्टाविंशतिं वा जुहुयात् प्रत्यृचं हविषो जुहुयात् प्रत्यृचं आज्यस्य जुहुयात् ॥ गुडोदनमादित्याय, हविष्यमन्नमङ्गारकाय, घृतोदनं शुक्राय, घृतपायसं सोमा, क्षीरोदनं बुधाय, दध्योदनं बृहस्पतये, तिलपिष्टमिश्रमाषोदनं शनैश्चराय, राहोर्माषोदनं केतोश्चित्रोदनं, इति ॥ सर्वेषामलाभे हविष्यं वा ॥ यदाऽष्टसहस्रं तदा अधिप्रत्यधिदेवतानामष्टाविंशतिं यदाऽष्टशतं तदा अष्टावष्टौ ॥ यदाऽष्टाविंशतिं तदा तिस्रस्तिस्र आहुतीर्जुहुयादेवमेव लोकपालादीनां दुर्गादीनां च ॥ एवमेव हुत्वाऽऽज्यमिश्रतिलव्रीहिभिः व्याहृतिभिः हुत्वा सर्वस्मात्सकृत्सकृदवदाय द्विरभिघार्य स्विष्टकृतमर्यमणं बृहस्पतिमिति पुरोनुवाक्यामनूच्य सोमꣳराजानमिति याज्यया जुहोति ॥ मेक्षणमभ्याधाय जयप्रभृति सिद्धां मूर्धानं दिवो अरतिं पृथिव्या इति पूर्णाहुतिं हुत्वाऽग्रेणाग्निं ग्रहानभ्यर्चयत्यापोहिष्ठा मयो भुव इति तिसृभिः हिरण्यवर्णाः शुचयः पावका इति चतसृभिः पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा ॥ अथाद्भिस्तर्पयत्यादित्यं तर्पयाम्यङ्गारकं तर्पयामि इत्यादिभिः स्वनामभिस्तर्पयित्वा गन्धपुष्पधूपदीपैरमुष्मै नमोऽमुष्मै नम इति तत्तदन्नेनामुष्मै स्वाहाऽमुष्मै स्वाहेति स्वस्वनामभिर्बलिं दत्वा व्याहृतिभिरुद्वासयेदथापरेणाग्निं प्राङ्मुखमुपवेश्याद्भिर्मार्जयते देवस्यत्वेति तिसृभिस्तत्तद्ग्रहमन्त्रैः शंयुवाकेन च ॥ अथ दक्षिणां ददाति कपिलं धेनुमादित्याय, रक्तमनड्वाहमङ्गारकाय, रजतं शुक्राय, शङ्खं सोमाय, काञ्चनं वुधाय, वासो बृहस्पतये, कृष्णां गां शनैश्चराय, राहवे छागं, केतवे कुञ्जरमिति सर्वेषामलाभे हिरण्यं वा ॥ यद्वा तत्तत्प्रतिकृतिं दद्यात्तत्तद्धान्यानि वा तत्तद्ग्रहमन्त्रजपाद्वा ग्रहान्तसम्प्रार्थ्य यथाशक्तिदक्षिणां ददाति येन वा तुष्येदाचार्यः ॥ यथा समुत्थितं घोरं यन्त्रेण प्रतिबाध्यते ॥ एवं समुत्थितं घोरं शीघ्रं शान्तिं नयेत्सदा ॥ यथा शस्त्रप्रहरणात्कवचं स्यान्निवारणम् ॥ एवं दैवोपघातानां शान्तिर्भवति वारणम् ॥ अहिंसकस्य दान्तस्य धर्मार्जितधनस्य च ॥ नित्यं च नियमस्थस्य सदा सानुग्रहा ग्रहाः ॥ ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषतः ॥ पूजिताः पूजयन्त्येते निर्दहन्त्यवमानिताः, इति ॥

अथ परिधानप्रभृत्यग्निमुखान्तं कृत्वा मिन्दाद्वयं हुत्वा पक्वाज्जुहोति ॥ त्र्यार्षेयं पञ्चार्षेयं वा गोत्रानुसारेण चतुरवदानं पञ्चावदानमिति क्रमेणावदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयो३मासत्येन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ॥ हिरण्ययेन सविता रथेनाऽऽदेवो याति भुवनावि

पश्यन्त्स्वाहा ॥ सवित्र इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ आसत्येन रजसेत्यर्कसमिच्चर्वाज्यानि यथासङ्ख्यं हुत्वा ॥ ॐ अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ॥ अस्य यज्ञस्य सुक्रतुँस्वाहा ॥ अग्नय इदम् ॥ ॐ येषामीशे पशुपतिः पशूनां चतुष्पदामुत च द्विपदाम् ॥ निष्क्रीतोऽयं यज्ञियं भागमेतु राहस्पोषा यजमानस्य सन्तु स्वाहा ॥ रुद्रायेदम् ॥ इत्यर्कसमिच्चर्वाज्यानि हुत्वा, व्याहृतीर्हुत्वा, यन्मआत्मनःपुनरग्नि रिति हुत्वा ॥ स्रुवेण दर्व्यामुपस्तीर्य अपरार्धाच्चरोरवदाय पूर्वार्धादवद्यत्यभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयो३मग्नि मूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ॥ अपाᳪरेताᳪसि जिन्वति स्वाहा ॥ अङ्गारकायेदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ स्योनापृथिविभवा नृक्षरा निवेशनी ॥ यच्छानः शर्म सप्रथाः स्वाहा ॥ पृथिव्या इदम् ॥ ॐ क्षेत्रस्य पतेमधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ॥ मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु स्वाहा ॥ क्षेत्रपतय इदम् ॥ इति खदिरसमिच्चर्वाज्यानि जुहुयात् ॥ व्याहृतिमिन्दाहुतीर्हुत्वा, पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयों३प्रवश्शुक्राय भानवे भरध्वं हव्यं मतिं चाग्नये सुपूतम् ॥ यो दैव्यानि मानुषा जनूᳪष्यन्तर्विश्वानि विद्मना जिगाति स्वाहा ॥ शुक्रायेदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ इन्द्राणी मासुनारिषु सुपत्नीमहमश्रवम् ॥ नह्यस्या अपरं चन जरसा मरते पतिः स्वाहा ॥ इन्द्राण्या इदम् ॥ ॐ इन्द्रं वो विश्वतस्परि हवामहे जनेभ्यः ॥ अस्माकमस्तु केवलः स्वाहा ॥ इन्द्रायेदम् ॥ इत्यौदुम्बरसमिच्चर्वाज्यानि हुत्वा, व्याहृतिमिन्दहृतीर्हुत्वा, पुनः पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयो३माप्यायस्व समेतु ते विश्वतः सोम वृष्णियम् ॥ भवावाजस्य सङ्गथे स्वाहा ॥

सोमायेदम् ॥ उपरिष्टात् स्रुवाहुतिं हुत्वा ॥ ॐ अप्सुमे सोमो अब्रवीदन्तर्विश्वानि भेषजा ॥ अग्निं च विश्वशुम्भुवमापश्च विश्वभेषजीः स्वाहा ॥ अद्भ्य इदम् ॥ ॐ गौरीमिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ॥ अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन्त्स्वाहा ॥ गौर्या इदम् ॥ इति पालाशसमिच्चर्वाज्यानि हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... प्रचोदयों३उद्बुध्यस्वाग्ने प्रतिजागृह्येनमिष्टापूर्ते सꣳसृजेथामयं च ॥ पुनः कृण्वꣳस्त्वा पितरं युवानमन्वाताꣳसी त्वयितन्तुमेतꣳस्वाहा ॥ बुधायेदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ विष्णोर्नुकंवीर्याणि प्रवोचं यः पार्थिवानि विममे रजाꣳसि यो अस्कभायदुत्तरꣳसधस्थं विचक्रमाणस्त्रेधोरुगायः स्वाहा ॥ विष्णव इदम् ॥ ॐ विष्णोरराटमसि विष्णोः पृष्ठमसि विष्णो श्नप्त्रेस्थो विष्णोः स्यूरसि विष्णोर्ध्रुवमसि वैष्णवमसि विष्णवे त्वा स्वाहा ॥ विष्णव इदम् ॥ इत्यपामार्गसमिच्चर्वाज्यानि हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, पुनः पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयो३बृहस्पते अतियदर्यो अर्हाद्युमद्विभाति क्रतुमज्जनेषु ॥ यद्दीदयच्छवसर्तप्रजाततदस्मासु द्रविणं धेहि चित्रꣳस्वाहा ॥ बृहस्पतय इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ इन्द्र मरुत्व इह पाहि सोमं यथाशार्याते अपिबस्सुतस्य ॥ तव प्रणीती तव शूरशर्मन्नाविवासन्ति कवयः सुयज्ञाः स्वाहा ॥ इन्द्रायेदम् ॥ ॐ ब्रह्मजज्ञानं प्रथमं पुरस्ताद्विसीमतस्सुरुचो वेन आवः ॥ सबुध्निया उपमा अस्य विष्ठास्सतश्च योनिमसतश्च विवः स्वाहा ॥ ब्रह्मण इदम् ॥ इत्यश्वत्थसमिच्चर्वाज्यानि हुत्वा,

व्याहृतिमिन्दाहुतीर्हुत्वा, पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयों३शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंयोरभिस्रवन्तु नः स्वाहा ॥ शनैश्चरायेदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ प्रजापते नत्वदेतान्यन्यो विश्वाजातानि परिता बभूव ॥ यत्कामास्ते जुहुमस्तन्नो अस्तु वयꣳस्याम पतयो रयीणाꣳस्वाहा ॥ प्रजापतय इदम् ॥ ॐ इमं यमप्रस्तरमाहि सीदाङ्गिरोभिः पितृभिः संविदानः ॥ आत्वा मन्त्राः कविशस्ता वहन्त्वेना राजन्हविषा मादयस्व स्वाहा ॥ यमायेदम् ॥ इति शमीसमिच्चर्वाज्यानि हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, पुनः पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयों३कयानश्चित्र आभुवदूतीसदा वृधस्सखा ॥ कया शचिष्ठया वृता स्वाहा ॥ राहव इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ आयङ्गौः पृश्निरक्रमीदसनन्मातरं पुनः ॥ पितरं च प्रयन्त्सुवः स्वाहा ॥ सर्पायेदम् ॥ ॐ यत्ते देवीनिर्ऋतिराबबन्ध दामग्रीवा स्वविचर्त्यम् ॥ इदं ते तद्विष्याम्यायुषो न मध्यादथाजीवः पितुमद्धि प्रमुक्तः स्वाहा ॥ निर्ऋतय इदं ॥ इति दूर्वासमिच्चर्वाज्यानि हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, पुनः पूर्ववदवदाय पुरस्तात् स्रुवाहुतिं हुत्वा ॥ ॐ तत्सवितुः ..... दयों३केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे ॥ समुषद्भिरजायथाः स्वाहा ॥ केतव इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा ॥ ॐ ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणाम् ॥ श्येनो गृध्राणाꣳस्वधितिर्वनानाꣳसोमः पवित्रमत्येति रेभन्त्स्वाहा ॥ ब्रह्मण इदम् ॥ ॐ सचित्र चित्रं चितयन्तमस्मे चित्रः क्षत्रं चित्रतमं वयोधाम् ॥ चन्द्रꣳरयिं पुरुवीरं बृहन्तं चन्द्र चन्द्राभिर्गृणते युवस्व स्वाहा ॥ चित्रगुप्तायेदम् ॥ इति कुशसमिच्चर्वाज्यानि हुत्वा व्याहृतीर्जुहुयात् ॥ इत्येकाध्वरपक्षे ॥ यदि चतुर्भीऋत्विग्भिः सह होमः तदा रव्यादीनां पञ्चपञ्चानि हुत्वा तेभ्यः समिच्चर्वाज्यानि यथासङ्कल्पं हुत्वा व्याहृतिमिन्दाहुतीर्हुत्वा ततोऽवशिष्टपञ्चचतुष्टयं हुत्वा

तेभ्यस्तथैव समिच्चर्वाज्यानि हुत्वा व्याहृतीर्जुहु[1]यात् ॥ यदि नवर्त्विजः तदा आदावेव नव पक्वानि हुत्वा पश्चात्तत्तद्ग्रहोक्तमन्त्रैः तत्तत्समिच्चर्वाज्यैरष्टशतमष्टाविंशतिं वा हुत्वाऽथाधिदेवताभ्यः प्रत्यधिदेवताभ्यश्च तत्तद्ग्रहसमिच्चर्वाज्यैरष्टवारं त्रिवारं वा यथाक्रमं जुहुयात् व्याहृतीश्च ॥ अत्रअष्टोत्तरशतप्रधानहोमे अधिदेवताप्रत्यधिदेवतानामष्टाष्टसङ्ख्यया ॥ यद्यष्टाविंशतिसङ्ख्यया प्रधानहोमस्तदेतरेषां त्रिस्त्रिस्सङ्ख्यया होमः ॥ एवमेव लोकपालानां दुर्गादीनां च होमः कार्यः ॥ अथ लोकपालानाम् ॥ ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳहवे हवे सुहवꣳशूरमिन्द्रम् ॥ हुवेनुशक्रं पुरुहूतमिन्द्रꣳस्वस्तिनो मघवा धात्विन्द्रः स्वाहा ॥ इन्द्रायेदम् ॥ ॐ अग्निर्दा द्रविणं वीरपेशा अग्निर्ऋषिं यः सहस्रा सनोति ॥ अग्निर्दिवि हव्यमाततानाग्नेर्धामानि बिभृता पुरुत्रा स्वाहा ॥ अग्नय इदम् ॥ ॐ यमो दाधार पृथिवीं यमो विश्वमिदं जगत् ॥ यमाय सर्वमित्रस्थेयत्प्राणद्वायुरक्षितꣳस्वाहा ॥ यमायेदम् ॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यां तस्करस्यान्वेषि ॥ अन्यमस्मदिच्छसातइत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥ निर्ऋतय इदम् ॥ ॐ सधमादो द्युम्निनीरूर्ज एता अनिभृष्टा अपस्युवो वसानः ॥ पस्तत्यासु चक्रे वरुणः सधस्थमपाꣳशिशुर्मातृतमास्वन्तः स्वाहा ॥ वरुणायेदम् ॥ ॐ आनो नियुद्भिश्शतिनीभिरध्वरꣳसहस्रिणीभिरुपयाहि यज्ञम् ॥ वायो अस्मिन्हविषि मादयस्व यूयं पात स्वस्तिभिः सदानः स्वाहा ॥ वायव इदम् ॥ ॐ सोमो धेनुꣳसोमो

---

[1] अत्र पूर्वन्यायेन आदौ मिन्दाहुती, पञ्चभ्यः पक्वहोमः, ततस्तेभ्यः समिच्चर्वाज्याहुतयः, ततो व्याहृतिमिन्दाहुतयः, पुनरवशिष्टपक्वानन्तरं तेभ्यः समिच्चर्वाज्यहोमः, पुनरन्ते व्याहृतिचतुष्टयम् ॥ एवमेव नव ऋत्विक्पक्षेप्यूहः कार्यः ॥ अयं पक्षो युक्तः ॥

अर्वन्तमाशुं सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्यꣳसभेयं पितुः श्रवणं यो ददाशदस्मै स्वाहा ॥ सोमायेदम् ॥
ॐ सहस्राणि सहस्रधाबाहुवोस्तव हेतयः ॥ तासामीशानो भगवः पराचीनामुखा कृधि स्वाहा ॥ ईशानायेदम् ॥ इत्यष्टौ लोकपालाः ॥ ॐ जातवेदसे० ॥ दुर्गाया इदम् ॥ ॐ गणानां त्वा० ॥ गणपतय इदम् ॥ ॐ क्षेत्रस्य पतिना वयम्० ॥ क्षेत्रपतय इदम् ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्० ॥ वास्तोष्पतय इदम् ॥ ॐ त्र्यम्बकं यजामहे० ॥ त्र्यम्बकायेदम् ॥
ॐ यत इन्द्र ..... स्वस्तिदाविशस्पतिः० ॥ अभयङ्करेन्द्रायेदम् ॥ ॐ ये ते सहस्रमयुतं पाशा मृत्यो मर्त्याय हन्तवे ॥ तान्यज्ञस्य मायया सर्वानवयजामहे स्वाहा ॥ मृत्यव इदम् ॥ ॐ मूर्धानं दिवो अरतिं पृथिव्या वैश्वानरमृताय जातमग्निम् ॥ कविꣳसम्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः स्वाहा ॥ वैश्वानराग्नय इदम् ॥ इति दुर्गाद्यष्टदेवताभ्यो हुत्वा, अथाऽऽज्याक्ततिलव्रीहिभिर्व्याहृतिभि-रष्टशतमष्टाविंशतिमष्टवारं वा हुत्वा, अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय व्याहृतिभिरुपहुत्य पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ अर्यमणं बृहस्पतिमिन्द्रं दानाय चोदय॥ वाचं विष्णुꣳसरस्वतीꣳसवितारं च वाजिनों३सोमꣳराजानं वरुणमग्निमन्वारभामहे ॥ आदित्यान्विष्णुꣳसूर्यं ब्रह्माणं च बृहस्पतिꣳस्वाहा ॥ अर्यम्णे बृहस्पतय इन्द्राय वाचे विष्णवे सरस्वत्यै सवित्रे सोमाय राज्ञे वरुणायाग्नय आदित्येभ्यः सूर्याय ब्रह्मण इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, मेक्षणमग्नौ प्रहृत्य, जयप्रभृतिप्रायश्चित्तान्तं कृत्वा, मूर्धानं दिव इति पूर्णाहुति, वसोर्धारां (ॐ वसोर्धारां जुहोतिवसोर्मे धाराऽसदिति वा एषा हूयते घृतस्य वा एनमेषा धाराऽमुष्मिन् लोके पिन्वमानोपतिष्ठत आज्येन जुहोति तेजो वा आज्यं तेजो वसोर्धारातेजसैवाऽस्मै तेजोऽवरुन्धेऽथो कामावै वसोर्धारा कामानेवावरुन्धे य कामयेत प्राणानस्यान्नद्यं वि ॥ इति) च हुत्वोत्तरपरिषेकादिकं कृत्वाऽग्रेणाग्निं ग्रहानभ्यर्चयति ॥ आपोहिष्ठेति तिसृभिः, हिरण्यवर्णा इति चतसृभिः, पवमानस्सुवर्जन इत्यनुवाकेन च ग्रहानभिषिच्य ॥ आदित्यं तर्पयामि ॥ अङ्गारकं तर्पयामि ॥

शुक्रं तर्पयामि ।। सोमं तर्पयामि ।। बुधं तर्पयामि ।। बृहस्पतिं तर्पयामि ।। शनिं तर्पयामि ।। राहुं तर्पयामि ।। केतुं तर्पयामि ।। इति तर्पयित्वा ।। ॐ आदित्याय नमः ।। इत्यादिनाममन्त्रैः गन्धपुष्पधूपदीपनैवेद्यताम्बूलनीराजनप्रदक्षिणानमस्कारान्तं कृत्वा ।। ॐ आदित्याय स्वाहा ।। इत्यादिस्वाहान्तैर्नाममन्त्रैः हुतशेषेण बलिं दत्वा, सर्वोपचारान् कृत्वा ।। ॐ भूर्भुवःसुवः आदित्यमुद्वासयामि ।। ॐ भूर्भुवःसुवः अङ्गारकमुद्वासयामि ।। इति ग्रहानुद्वास्य अथाग्नेः पश्चात्प्राङ्मुखं यजमानं उपवेश्य कलशोदकेन मार्जयति ।। देवस्यत्वेति तिसृभिः तत्तद्ग्रहमन्त्रैः तच्छंयोरित्येतैः मार्जयित्वा ।। सुरास्त्वामभिषिञ्चन्तु ब्रह्मविष्णुमहेश्वराः ।। इन्द्राद्या मातरः सर्वा लक्ष्मीश्चोमा सरस्वती ।। कश्यपाद्याश्च मुनयो गङ्गाद्याः सरितस्तथा ।। अनन्तादिमहानागा गिरयः सप्तसागराः ।। सर्वे त्वामभिषिञ्चन्तु सर्वकाम्यार्थसिद्धये ।। सूर्यादयो ग्रहाः सर्वे साधिप्रत्यधिदेवताः ।। पृथिव्यादीनि भूतानि विघ्नो दुर्गादयस्तथा ।। एते त्वामभिपिञ्चन्तु सर्वकायार्थसिद्धये ।। इत्येतैरभिषिच्य दक्षिणांदद्यात् ।। कपिला गौ रक्तवृषो रौप्यं शङ्खश्च काञ्चनम् ।। वस्त्रं च धेनुः कृष्णा च छागो हस्तीति दक्षिणाः ।। अलाभे तत्तत्प्रतिकृतिं तत्तन्मूल्यं हिरण्यं वा दद्यात् ।। तत्तद्धान्यानि वा ।। शान्तिकर्मण्यशक्तश्चेत् तत्तद्ग्रहमन्त्रान्वा जपेत् ।। एवं कृते सर्वशान्तिर्भवति ।। इति प्रयोगमालायां ग्रहशान्तिप्रयोगः ।।

अथ संस्कारकाण्ड आरभ्यते ।। तत्रादौ गर्भाधानादिसंस्काराणां ऋतुसंवेशनपूर्वकत्वात्स्त्रीणां प्रथमरजोदर्शन-कारण-काल-निर्णयादिपूर्वकं ऋतुसंवेशनप्रयोगो लिख्यते ।। स्मृतिमञ्जर्या पुराणवचनम् 'नाभिमूले स्थितं पुष्पं चतुर्दलसमन्वितम् ।। तस्मिन्त्सर्वाश्चदधते गर्भसम्भवकारणम् ।। अधोमुखं स्थितं स्त्रीणां तद्बाल्ये मुकुलीकृतम् ।। बाल्यात्परं वयःप्राप्तौ मुकुलं विकसं भवेत् ।। उत्फुल्लात् कुसुमात्स्त्रीणां स्वभावेन स्रवेद्रजः ।। तदा प्रभृति सर्वासां मासि मासि ऋतुर्भवेत् ।।' इति ।। अथ मासफलम् ।। वराहसंहितायाम् 'प्रथमर्तौ द्वितीये वा शुभाशुभनिरीक्षणम् ।। कर्तव्यं ज्ञातिभिस्सम्यग्धर्मशास्त्रविधानतः ।। चैत्रे मासि विशेषेण वैधव्यं लभते ध्रुवम् ।। वैशाखे बहुपुत्राढ्या ज्येष्ठे रोगयुता भवेत् ।। शुचौ मृतप्रजा प्रोक्ता श्रावणे धनिनी भवेत् ।। भाद्रे तु दुर्भगा क्लीबा ह्याश्विने तु पयस्विनी ।। कार्त्तिके निर्धना बाला मार्गशीर्षे बहुप्रजा ।। पौषे स्यात्पुंश्चली नारीमाघे पुत्रसुखान्विता ।। फाल्गुने सर्वसम्पन्ना प्रथमर्तौ फलं स्मृतम् ।।' अथ तिथिफलम् ।। श्रीधरीये 'प्रथमायां पतिं हन्ति द्वितीयायां सुखं भवेत् ।। तृतीयायां श्रियं भुङ्क्ते चतुर्थ्यां वृषली भवेत् ।। पञ्चम्यां पुत्रलाभश्च षष्ठ्यां चारित्रविक्रया ।। सप्तम्यां पुत्रवृद्धिः स्यादष्टम्यां पुत्रनाशनम् ।। नवम्यां रुदती नित्यं दशम्यां धर्मशालिनी ।। एकादश्यां पतिस्निग्धा द्वादश्यां क्रन्दिनी भवेत् ।। त्रयोदश्यां मानधना त्वपरा बहुदोषकृत् ।। पर्वण्यन्यगृहीता स्यात् विद्यादेवं तिथेर्वशात् ।।' स्मृतिरत्ने

'शुभं चैव तु पूर्वाह्णे मध्याह्ने मध्यमं फलम्।। अपराह्ने तु वैधव्यं पूर्वरात्रे शुभं भवेत्।। मध्यरात्रे तु मध्यं स्यात्पररात्रे शुभान्विता।। तिथीनां फलमेवं हि वाराणां फलमुच्यते।। भानुवारे भवेद्व्याधिरिन्दुवारे पतिव्रता।। बहुरोगा बहुक्लेशा पतिहीना कुजे दिने।। बहुपुत्रवती सौम्ये सर्वसम्पद्गुरोर्दिने।। सौभाग्यं सुखसम्पत्तिः शुक्रवारे पतिव्रता।। कष्टबुद्धिर्महाव्याधिः स्वयमर्थस्य चोरिणी।। मन्दवारे विनष्टा स्यात् प्रथमर्तौ रजस्वला।।' नारदीये तु 'रुग्णा पतिव्रता दुःखा पुत्रिणी भोगभागिनी।। पतिप्रिया क्लेशभागा सूर्यवारादिषु क्रमात्।।' इति वारफलम्।। अथ नक्षत्रफलम्।। नारदीये 'श्रीयुता सुभगा पुत्रवतीसौख्याऽन्विता स्थिता।। मानी कुलाधिका नारी अश्विन्यां प्रथमार्तवा।।१।। दुःशीला स्वैरिणी वन्ध्या गर्भपातनतत्परा।। परप्रेष्या काकवन्ध्या भरण्यां प्रथमार्तवा।।२।। अनाथा पुंश्चली वन्ध्या गर्भपातनतत्परा।। प्रेष्या मृतप्रजा चापि वह्निभे प्रथमार्तवा।।३।। सुशीला सुप्रजा मान्या पतिभक्ता दृढव्रता।। गृहार्चनरता नित्यं धातृभे प्रथमार्तवा।।४।। गुणान्विता धर्मरता नारी सर्वसहा सती।। पतिप्रिया सुपुत्राढ्या चन्द्रभे प्रथमार्तवा।।५।। कुलटा दुर्भगा कष्टा मृतपुत्राऽबला जडा।। दुष्टा व्रतपरिभ्रष्टा रौद्रभे प्रथमार्तवा।।६।। पतिभक्ता पुत्रवती परसन्तानमोदिनी।। कुलाचारानुरक्ताढ्या आदित्ये प्रथमार्तवा।।७।। पतिप्रिया पुत्रवती मानभोगवती शुभा।। स्वकर्मनिरता दक्षा तिष्यर्क्षे प्रथमार्तवा।।८।। परभर्तृरता प्रेष्या कोपिनी निर्घृणाऽलसा।। मृषावादिनी दुष्पुत्रा भुजङ्गे प्रथमार्तवा।।९।। निर्द्वेष्याऽरोगसंयुक्ता सर्वदा गेयलोलुपा।। पितृवेश्मरता मान्या पैतृभे प्रथमार्तवा।।१०।। प्रजावती धर्मरता निर्वैरा मित्रपूजिता।। सती मातृगृहासक्ता त्वर्यमर्क्षे रजस्वला।।११।। परकार्यरता दीना दुष्पुत्रा क्लेशभागिनी।। मलिनी कर्कश क्रुद्धा भगभे प्रथमार्तवा।।१२।। निर्द्वेष्या भूरि विभवा पुत्राढ्या भोगभागिनी।। प्रदानादानकुशला हस्तर्क्षे प्रथमार्तवा।।१३।। चित्रकर्मा भोगिनी च कुशला क्रयविक्रये।। विकीर्णकामाश्लक्ष्णाढ्या त्वाष्ट्रभे प्रथमार्तवा।।१४।। बहुवित्तवती नीरुक्कुशला शिल्पकर्मणि।। पुत्रपौत्रवती साध्वी वायुभे प्रथमार्तवा।।१५।। नीचकर्मरता दुष्टा पानासक्ता परप्रिया।। विपुत्रा मलिनी क्रुद्धाद्विदैवे प्रथमार्तवा।।१६।। स्वामिपक्षान्विता स्वस्य गुणैः सम्यग्विभूषिता।। सुपुत्रा सुभगा कान्ता मित्रर्क्षे प्रथमार्तवा।।१७।। दुश्चरित्ररता क्लेशिन्यनर्था पुश्चलीव्यसुः।। दुःसन्तानवतीज्येष्ठानक्षत्रे प्रथमार्तवा।।१८।। सन्तानार्थं गुणैरल्पैर्युताऽन्यक्लेशमोचिनी।। स्वकर्मनिरता नित्यं मूलभे प्रथमार्तवा।।१९।। प्रच्छन्नपापा दुष्पुत्रा प्राणिहिंसनतत्परा।। अजस्रं व्यसनासक्ता तोयभे प्रथमार्तवा।।२०।। कार्याकार्येषु कुशला सदा धर्मानुवर्तिनी।। गुणाश्रया भाग्यवती विश्वभे प्रथमार्तवा।।२१।। धनधान्यवती भोगा पुत्रपौत्रसमन्विता।। कुलानुमोदिनी मान्या विष्णुभे प्रथमार्तवा।।२२।। पुत्रपौत्रान्विता भोगी धनधान्यवती सती।। स्वकर्मनिरता मान्या वसुभे प्रथमार्तवा।।२३।। बहुपुत्रा धनवती स्वकर्मनिरता सती।। कुलानुमोदिनी मान्या वारुणे प्रथमार्तवा।।२४।। बन्धकी बन्धनी द्वेष्या नित्यं दूररता बला।। शिल्पकार्येषु कुशलाऽजाङ्घ्रिभे प्रथमार्तवा।।२५।। आढ्या पुत्रवती मान्या सुप्रसन्ना पतिप्रिया।। बन्धूपूज्या धर्मवत्यहिर्बुध्न्ये प्रथमार्तवा।।२६।। दृढव्रता धर्मवती पुत्रसौख्यार्थसंयुता।। विख्याता गुणसम्पन्ना पौष्णभे प्रथमार्तवा।।२७।।' इति नक्षत्रफलम्।। अथ योगफलम् 'वज्रे वर्याह्णयोगे च व्यतीपातेच वैधृतौ।। परिघस्य तु पूर्वार्धः षट् षट् गण्डातिगण्डयोः।। व्याघाते नव शूले तु नाड्यः पञ्चर्तुर्शने।। वैधव्यमर्थनाशं च सुतनाशं महद्भयम्।। वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षीणजीवनम्।। तेजोहानिमवाप्नोति सदा पुष्पवती क्रमात्।।' इति योगफलम्।। अथ राशिफलम् 'मेषे सव्यभिचारा स्याद्वृषभे परभोगिनी।। मिथुने धनभोगाढ्या कर्कटे व्यभिचारिणी।। पुत्राढ्या सिंहराशौ तु कन्यायां श्रीमती तथा।। विलक्षणा तुलायां तु वृश्चिके तु पतिव्रता।। दुश्चारिणी धनुः पूर्वे त्वपरे तु पतिव्रता।। मकरे मानहीना च कुम्भे निर्धनवन्ध्यता।। मीने विलक्षणा, लग्ने ग्रहसंस्था विवाहवत्।।' इति राशिफलम्।। अथ ग्रहफलम् 'वैधव्यमष्टमेऽस्थेऽर्के चन्द्रे क्षीणरुचा भवेत्।। अङ्गारके भर्तृहीना बुधे चेदनपत्यता।। दौर्भाग्यमिन्द्रसचिवे सापत्न्यं भार्गवे भवेत्।। प्रव्रज्या सूर्यपुत्रे तु राहौ तु कलहः सदा। अशुभं केतावन्ये तु जामित्रे शुभदाः शुभा।।' नृसिंहोऽपि 'लग्नस्य सप्तमस्थाने सूर्यो वैधव्यकारकः।। पुत्रहानिकरस्त्वारो बुधः सत्पुत्रदो भवेत्।। बृहस्पतिर्धनायुष्यं शुक्रः सापत्न्यमेव च।। शनैश्चरे तु वन्ध्या स्याद्राहौ तु मरणं ध्रुवम्।। आदित्यभौममन्दानां वारवर्गोदयेक्षणैः।। मरणं गर्भनाशश्च कुलटात्वं यथाक्रमम्।। सौम्यभार्गवजीवानां वारवर्गोदयेक्षणैः।। सत्पुत्रसुखमारोग्य दीर्घमायुः क्रमाद्भवेत्।।' मनुः 'भास्करस्योदये मृत्युश्चन्द्रे स्त्रीमातृका भवेत्।। गर्भस्रावः

कुजे चैव बुधे पुत्रवती भवेत् ॥ आयुः श्री प्रीतिरारोग्यमुदये गुरुशुक्रयोः ॥ मन्दोदये विरोधः स्यात्क्लेशः स्यात्तामसोदये ॥' इति ग्रहफलम् ॥ अथ हस्तस्थितपात्रलक्षणम् ॥ देवरातः 'सम्मार्जनी काष्ठतृणानि शूर्पान् हस्ते दधाना कुलटा तदा स्यात् ॥ तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् ॥' नृसिंहः 'भुक्तौ तल्पे च याने च तपनीये च धार्मिके ॥ शुभोपकरणैः युक्ते शुभे देशे शुभैः युते ॥ शुभं स्यादनुकूलर्क्षे राशौ सत्सङ्गसंयुते ॥' कश्यपसंहितायाम् 'निन्दिते दिनवारर्क्षे नाचरेत्तत्र मङ्गलम् ॥ तस्मात्सम्यग्विचार्यैतत्ततो मङ्गलमाचरेत्' इति ॥ स्मृतिचन्द्रिकायाम् 'प्रथमर्तौ तु पुष्पिण्याः पतिपुत्रवतीस्त्रियः ॥ अक्षतैरासनं कृत्वा तस्मिंस्तामुपवेशयेत् ॥ हरिद्रागन्धपुष्पादिदद्यात्ताम्बूलकं स्रजम् ॥ आशिषोवाचयेयुस्ताः पतिपुत्रवती भव ॥ दीपैर्नीराजनं कुर्यात्सदीपां वासयेद्गृहे ॥ ताः सर्वाः पूजयेत्पश्चाद्गन्धपुष्पाक्षतादिभिः ॥ लवणापूपमुद्गादिदद्यात्ताभ्यः स्वशक्तितः ॥' इति ॥ अथ रजस्वलानियमः ॥ अञ्जनाभ्यञ्जने स्नानं प्रवासं दन्तधावनम् ॥ न कुर्यात्सार्तवा नारी ग्रहाणामीक्षणं तथा ॥ नखानां कृन्तनं रज्जुतालपत्रादिबन्धनम् ॥ दग्धे शरावे भुञ्जीत पेयं चाञ्जलिना पिबेत् ॥' अत्रिः 'गन्धं माल्यं दिवास्वापं ताम्बूलं चास्यशोधनम् ॥ पाणिपात्रजनस्पर्शपादशौचादि वर्जयेत् ॥' अथान्योन्यसम्भाषणस्पर्शनप्रायश्चित्तम् ॥ स्मृतौ 'सम्भाषेतां स्पृशेतां वा ब्राह्मण्यौ च रजस्वले ॥ आस्नानकालं नाश्नीतामुभेमत्यामिथः क्वचित् ॥ स्नात्वोपवासं कुर्यातां पञ्चगव्येन शुध्यतः ॥ उपवासे त्वशक्ता चेत्तत्समं दानमाचरेत् ॥' अथ नैमित्तिकस्नानम् ॥ स्मृत्यर्थसारे 'स्नाने नैमित्तिके प्राप्ते रजो दृष्टौ पात्रान्तरिततोयेन स्नात्वाऽद्भिः सिक्तमात्रा साङ्गोपाङ्गवस्त्रपीडनं अन्यद्वस्त्रधारणं च कृत्वा व्रतं चरेत्' इति ॥ पुनारजोदर्शने काश्यपः 'त्रयोदशदिनादूर्ध्वं रजो दृष्टवती यदा ॥ अष्टादशाहात्प्राग्वाऽपि त्रिरात्रमिति निश्चयः ॥ एकादशाहे त्वेकाहं द्विरात्रं द्वादशेऽहनि ॥ ऊर्ध्वं त्रिरात्रं विज्ञेयमिति कुण्डलिचोदितम्' इति ॥ कृष्णोऽपि 'रजस्वला मृतिर्वाऽपि प्रसूतिर्वा भवेद्यदि ॥ रात्रिं त्रिभागं कुर्वीत द्वौ भागौ पूर्वमन्यथा' इति ॥ अथ स्नानम् ॥ स्मृतिसङ्ग्रहे 'रजस्वला चतुर्थेह्नि प्रक्षाल्याङ्गोद्भवान्मलान् ॥ दन्तानां धावनं कृत्वा सङ्गवे स्नानमाचरेत् ॥ आतुरा चेद्दृतुमती तस्याः स्नानं कथं भवेत् ॥ स्पृष्ट्वा तु तां परा स्नायाद्दशकृत्वो ह्यनातुरा ॥ वासोभिर्दशभिश्चैव परिधाप्य यथाक्रमम् ॥ ब्राह्मणान्भोजयित्वाथ पुण्याहेन विशुद्ध्यति ॥ आतुराणां तु सर्वेषामेव शुद्धिर्विधीयते' इति ॥ अथ स्नानानन्तरं कृत्यमाह विवस्वान् 'ऋतुस्नाता भवेन्नारी धृत्वा शुक्लाम्बरं शुभम् ॥ आचम्यालङ्कृता भूत्वा पुष्पाद्यैः सूर्यमर्चयेत् ॥ ऋतुस्नाता सती नारी यं स्नेहान्नरमीक्षते ॥ तादृशं जनयेत्पुत्रं तस्मात्पश्येन्निजं पतिम् ॥' नारदीये 'ओजराश्यंशगे चन्द्रे लग्ने पुङ्ग्रहवीक्षिते ॥ अयुग्मदिवसे भार्यां कन्यार्थी कामयेत्पतिः ॥' स्कान्दे 'द्वादशाष्टचतुर्थस्थे चन्द्रे वैनाशिकर्क्षगे ॥ उपवीती युग्मतिथौ न नग्नः कामयेत्स्त्रियम् ॥ पुत्रार्थी पुरुषस्त्यक्त्वा पौष्णमूलाहिपैतृभम् ॥ युग्मर्क्षभे शशाङ्के च लग्ने स्त्रीग्रहवीक्षिते ॥ वैधृतौ च व्यतीपाते मघायां मूलभे तथा ॥ गण्डातिगण्डपरिघशूलयोगेषु वर्जयेत् ॥ एवं नियममाश्रित्य निषेकी पुरुषो भुवि ॥ लभते सन्ततिं योग्यामिहामुत्र च शर्मणे ॥ शास्त्रोक्तदिवसे शुद्धा क्षामा रात्रौ पतिव्रता ॥ पतिमेव हरिं मत्वा स्वयमेव रमेत च ॥' बृहस्पतिः 'निशा षोडशकं नारी संज्ञितर्तुमतीति सा ॥ तावद्योग्या प्रजास्थाने विनाऽऽद्याहचतुष्टयम्' इति ॥ यद्यपि ऋतावेव गमनं तथाऽपि कामयमानामनृतावपि गच्छेदित्याहाचार्यः 'पत्नीमप्यनृतौ नेयादियाद्वाभ्यर्थितस्तया' इति ॥ अथ तिथ्यादिनिर्णयः ॥ श्रीधरीये 'षष्ठ्यष्टमीं पञ्जशीं चतुर्थीं चतुर्दशीमप्युभयत्र हित्वा ॥ शेषाः शुभाःस्युस्तिथयो निषेके वाराः सिताचार्यशशीन्दुजानाम्' ॥ कालनिर्णये 'रिक्ता पर्वाष्टमी षष्ठी दिवा जन्मत्रयं तथा ॥ पापग्रहाणां वाराश्च त्याज्याश्चैवानृतौ गतौ ॥' अथ नक्षत्राणि 'विष्णुप्रजेशरविमित्रसमीरपौष्णमूलोत्तरावरुणभानि निषेककार्ये ॥' पूज्यानि पुष्यवसुशीतकराश्विचित्रादित्याश्च मध्यमफला विफलाः स्युरन्याः' ॥ अत्र जन्मत्रयमपि वर्ज्यमाह बृहस्पतिः 'श्राद्धंपित्र्यं चिकित्सां च मैथुनाभ्यञ्जने तथा ॥ चौलोपनयनादीनि वर्जयेत्रिषु जन्मसु' ॥ अथ राशयः 'वृषभमिथुनकर्किसिंहकन्यातुलाधरचापझषाः शुभा भवन्ति ॥ यदि शुभबलशालि मनोऽनुकूला निधनशुद्धियुता निषेककार्ये' ॥ तत्रेतिकर्तव्यतामाह श्रीपतिः 'वेदागमोक्तसमये रुचिरे प्रदेशे वाजीकृतेन जितरोषभयेन

पुंसा ॥ मन्त्रौषधप्रवरतीर्थजलोज्वलेषु कान्ताजनेष्वथ निषेकविधिर्विधेयः' ॥ (वाजीकृतेन भुक्तवतेत्यर्थः) इति कालनिर्णयः ॥ अथ पतिनियमः 'अथ यदि स्त्री रजस्वला भवति तया सह न सम्भाषेत सह नोपविशेत् ॥ नास्या उपभोगं कुर्यात् तत्र जातः पतितो भवति यां स्नातामपि अरण्येगच्छति ततउत्पलन्नस्तेनो भवति ॥ अथ रजस्वलनियमः ॥ या स्नाति तस्यां जात उदके म्रियते ॥ याऽभ्यङ्क्ते तत्र जातो दुश्चर्मा ॥ या लिखति तत्र दुष्टः, ॥ या आङ्क्ते तत्रान्धकः, । या दन्तधावनं करोति तस्यां क्रिमिदन्तः ॥ या नखनिकृन्तनं करोति तस्यां कुनखी, या प्राणिनो हन्ति तस्यां नपुंसकः, या रज्जुं सृजति तस्यां जात उद्बन्धनेन म्रियते, या पर्णे भुङ्क्ते तस्यामुन्मत्तो जायते, या हृस्वपात्रे भुङ्क्ते पिबति वा तस्यां हृस्वो जायते ॥ अत इत्येतत्सर्वं वर्जयित्वा व्रतंचरेत्' ॥ दिवास्वापमलङ्कारं क्रीडां शिल्पक्रियां तथा ॥ ग्रहकर्माणि ताम्बूलमध्वानं रात्रिभोजनम् ॥ ज्योतिषां दर्शनं स्पर्शमग्नेर्मांसाशनं तथा ॥ हसनं शयनं तल्पे प्रजानिश्रेयसार्थिनी ॥' एतत्सर्वं वर्जयेदिति शेषः ॥ चतुर्थदिने, स्नानानन्तरं पतिं पश्येत्सूर्यं वा इति रजस्वलानियमः ॥

तत्रादौ ग्रहशान्तिं ऋतुशान्तिं समानतन्त्रेण भिन्नतन्त्रेण वा कुर्यात् ॥ तथा च प्रयोगमञ्जर्याम् 'कर्माणि तुल्यपाकानि विधीयन्ते स्वभावतः ॥ यान्येकबर्हिरिध्माज्यखिष्टकृन्तीह तानि तु ॥' ग्रन्थान्तरे 'यत्रैकस्मिन्काले तत्तन्निमित्तानुरोधेन युगपत्पेवृत्तानामनेकपाकयज्ञानां तन्त्रावृत्तिरस्ति न वेत्याशङ्कायामाह - अनेके पाकयज्ञाः स्युरेकस्मिन्काल एव चेत् ॥ समानतन्त्रकाः कार्या न तन्त्रावृत्तिरिष्यते' ॥ पाकयज्ञो नाम चरुपूर्वो यज्ञः पाकयज्ञः ॥ अत एव शान्तिकपौष्टिकादीनामपि यज्ञत्वमिति विष्णुभट्टोक्तेश्च ॥ प्रयोगरत्नेऽपि 'एवं विघ्नं तु सम्पूज्य ग्रहांश्चैव विधानतः ॥ कर्मणां फलमाप्नोति याज्ञवल्क्येन भाषितम्' इति फलसिद्धावविघ्नार्थत्वेन ग्रहयज्ञस्यावश्यकत्वोक्तेः ॥ शौनकः 'आर्तवानां तु नारीणां शान्तिं वक्ष्यामि शौनकः' इत्युपक्रम्य 'ग्रहातिथ्यपुरस्सरम्' इति प्रकरणोक्तेः 'आवश्यकत्वादेककालकर्तृकाणां च विशेषवचनाभावे तन्त्रेण कर्तव्यत्वाद्ग्रहमखपूर्वकं तन्त्रेण शान्तिप्रयोग उच्यते' इति ॥

अथर्तुशान्तिप्रयोगः ॥ स्त्रीणां प्रथमरजोदर्शनकाले मासतिथिवारनक्षत्रयोगकरणलग्नानां मध्येऽन्यतमस्य दुष्टत्वात्तद्दोषपरिहारार्थमृतुशान्तिं कुर्यात् ॥ यथा - चतुर्थे पञ्चमेऽन्यस्मिन्वा शुभे दिने प्रातस्नानादिनित्यकर्म कृत्वा वैश्वदेवं हुत्वा स्नानपवनादिमन्त्रप्रोक्षणान्तं कृत्वा पुनराचमनप्राणायामौ कृत्वा देशकालौ सङ्कीर्त्य नान्दीसमाराधनं कर्तुं गणपतिपूजनं स्वस्तिपुण्याहवाचनं करिष्ये इति सङ्कल्प्य तत्कृत्वा, पुनः प्राणानायम्य ग्रहशान्तिऋतुशान्तिगर्भाधानाख्यं कर्म कर्तुं स्वस्तिपुण्याहवाचनाख्यं कर्म करिष्ये इति सङ्कल्प्य तत्कृत्वा। आदित्यादिनवग्रहाः प्रीयन्तां सविता प्रीयतां वेधाः प्रीयतामिति विशेषः ॥ अथ प्रोक्षणान्तं कृत्वाऽऽचार्यादीन् वृत्वा पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य मम भार्यायाः प्रथमरजोदर्शनकाले मासतिथिवारनक्षत्रयोगकरण-दोषशान्त्यर्थमृतुशान्तिं करिष्ये इति सङ्कल्प्य ॥ श्वेतमृद्भिरष्टदलपद्मं विलिख्य तदुपरि प्रस्थाष्टभिर्धान्यैस्तदर्धं तण्डुलैस्तदर्धं तिलैश्चारत्निमात्रं समचतुरस्रं स्थण्डिलं कृत्वा तदुपर्यष्टदलपद्मं विलिख्य तस्मिन्तन्तुवेष्टितं सुधूपितं कलशं ब्रह्मजज्ञानमिति

निधाय प्रोक्ष्य तस्मिन् कूर्चमन्तर्धाय ।। ॐ आपो वा इद॒ंसर्वं विश्वा भूतान्यापः प्राणा वा आपः पशव आपोऽन्नमापोऽमृतमापः सम्राडापो विराडापः स्वराडापश्छन्दा॒ंस्यापो ज्योती॒ंष्यापो यजू॒ंष्यापः सत्यमापः सर्वा देवता आपो भूर्भुवःसुवराप ॐ ।। आपोहिष्ठेति तिसृभिश्च कलशमुदकैः पूरयित्वा पञ्चत्वक्पञ्चपल्लवांश्च निक्षिप्य युग्मेन नववस्त्रेणाच्छाद्य बिल्वपल्लवैश्चूतपल्लवैश्चावकीर्य कूर्चमन्तर्धाय नारिकेलफलेनापिधाय पुरुषं पुण्डरीकाक्षं ध्यात्वा अभ्यर्च्य ऋतुशान्तिसूक्तपठनार्थं पूर्वस्यां दिशि ऋत्विजं त्वामहं वृणे ।। एवं दक्षिणस्यां दिशि ऋत्विजं, पश्चिमायां दिशि ऋत्विजं, उत्तरस्यां दिशि ऋत्विजं त्वामहं वृणे ।। इति चतुर्दिक्षु चतुरोऽष्टौ षड्वा ऋत्विजो वरयित्वा गन्धादिभिरभ्यर्च्य परिस्तीर्य महीद्यौःपृथिवीचन इत्यादिभिः कलशस्थापनादिपूजान्तं कृत्वा ।। ॐ भूः पुरुषमावाहयामि, ॐ भुवः पुरषं०, ओ॒ंसुवः पुरुषं०, ॐ भूर्भुवःसुवः पुरुषमावाहयामि इत्यावाह्य षोडशोपचारान् कृत्वा ।। कलशस्य मुखे विष्णुरित्यादिभिः कलशं ध्यात्वा ततः सर्वे कुम्भमन्वारभ्य जपन्ति ।। ॐ नारायणाय विद्महे वासुदेवाय धीमहि ।। तन्नो विष्णुः प्रचोदयात् ।। इति वैष्णवीं गायत्रीं सहस्राष्टकं शताष्टकं वा जपित्वा वेदादीन् जपति ।। ॐ अग्नि मीळे पुरोहितं यज्ञस्य देवमृत्विजम् ।। होतारं रत्नधातमम् ।। ॐ इषेत्वा० ॐ यज्ञस्य० ॐ शन्धध्वम्० इति त्रीननुवाकान् ।। ॐ अग्न आयाहि०, ॐ शन्नो देवीः० इति द्वौ प्रतीकौ ।। ॐ आपोहिष्ठा० इति तिस्रः ।। ॐ हिरण्यवर्णा० इति चतस्रः ।। ॐ पवमानः सुवर्जनः० इत्येकमनुवाकम् ।। वरुणसूक्तम्, श्रीसूक्तम् ।। ॐ सहस्रशीर्षा पुरुषः० इत्येकमनुवाकम् ।। अथ पञ्चशान्तिः ।। ॐ भद्रं कर्णेभिः शृणुयाम देवाः ।। भद्रं पश्येमाक्षभिर्यजत्राः ।। स्थिरैरङ्गैस्तुष्टुवा॒ंसस्तनूभिः ।। व्यशेम

देवहितं यदायुः ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः ॥ स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शन्तिः शान्तिः ॥१॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ ॐ शान्तिः शान्तिः शान्तिः ॥२॥ ॐ तच्छंयोरावृणीमहे ॥ गातुं यज्ञाय ॥ गातुं यज्ञपतये ॥ दैवीः स्वस्तिरस्तु नः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वं जिगातु भेषजम् ॥ शन्नो अस्तु द्विपदे ॥ शं चतुष्पदे ॥ ॐ शान्तिः शान्तिः शान्तिः ॥३॥ ॐ नमो वाचे या चोदिता या चानुदिता तस्यै वाचे नमो नमो वाचे नमो वाचस्पतये नम ऋषिभ्यो मन्त्रकृद्भ्यो मन्त्रपतिभ्यो मा मामृषयो मन्त्रकृतो मन्त्रपतयः परादुर्माहमृषीन्मन्त्रकृतो मन्त्रपतीन्परादां वैश्वदेवी वाचमुद्यासꣳशिवामदस्तां जुष्टां देवेभ्यः शर्म मे द्यौः शर्म पृथिवी शर्म विश्वमिदं जगत् ॥ शर्म चन्द्रश्च सूर्यश्च शर्म ब्रह्मप्रजापती ॥ भूतं वदिष्ये भुवनं वदिष्ये तेजो वदिष्ये यशो वदिष्ये तपो वदिष्ये ब्रह्म वदिष्ये सत्यं वदिष्ये तस्मा अहमिदमुपस्तरणमुपस्तृण उपस्तरणं मे प्रजायै पशूनां भूयादुपस्तरणमहं प्रजायै पशूनां भूयासं प्राणापानौ मृत्योर्मा पातं प्राणापानौ मामाहासिष्ट मधु मनिष्ये मधु जनिष्ये मधु वक्ष्यामि मधु वदिष्यामि मधुमतीं देवेभ्यो वाचमुद्यासꣳशुश्रूषेण्यां मनुष्येभ्यस्तम्मा देवा अवन्तु शोभायै पितरोऽनुमदन्तु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥४॥ ॐ शन्नो वातः पवतां मातरिश्वा शन्नस्तपतु सूर्यः ॥ अहानि शं भवन्तु नः शꣳरात्रिः प्रतिधीयताम् ॥ शमुषा नो व्युच्छतु शमादित्य उदेतु नः ॥ शिवा नः शन्तमा भव सुमृडीका सरस्वति ॥ मा ते व्योम सन्दृशि ॥ इडायै वास्त्वसि वास्तुमद्वास्तुमन्तो भूयास्म मा वास्तोच्छिथ्स्मह्यवास्तुः सभूयाद्योऽस्मान्द्वेष्टि यं च वयं

द्विष्मः ॥ प्रतिष्ठासि प्रतिष्ठावन्तो भूयास्म मा प्रतिष्ठायाच्छिथ्स्मह्यप्रतिष्ठः सभूयाद्योऽस्मान्द्वेष्टि यं च वयं द्विष्मः ॥ आवातवाहि भेषजं विवातवाहि यद्रपः ॥ त्व ँ हि विश्वभेषजो देवानां दूत ईयसे ॥ द्वाविमौ वातौ वात आसिन्धोरापरावतः ॥ दक्षं मे अन्य आवातु परान्यो वातु यद्रपः ॥ यददो वात ते गृहेऽमृतस्य निधिर्हितः ॥ ततो नो देहि जीवसे ततो नो धेहि भेषजम् ॥ ततो नो मह आवह वात आवातु भेषजम् ॥ शम्भूर्मयोभूर्नो हृदे प्रण आयु ँ षि तारिषत् ॥ इन्द्रस्य ग्रहोसि त त्वा प्रपद्ये स ँ साश्वः ॥ सह यन्मे अस्ति तेन ॥ भूः प्रपद्ये भुवः प्रपद्ये सुवः प्रपद्ये भूर्भुवःसुवः प्रपद्ये वायुं प्रपद्येऽनार्तां देवता प्रपद्येऽश्मानमाखणं प्रपद्ये प्रजापतेर्ब्रह्मकोश ब्रह्म प्रपद्य ॐ प्रपद्ये ॥ अन्तरिक्षं म उर्वन्तरं बृहदग्नयः पर्वताश्च यया वातस्वस्त्या स्वस्तिमां तया स्वस्त्या स्वस्तिमानसानि ॥ प्राणापानौ मृत्योर्मा पातं प्राणापानौ मा माहासिष्टं मयि मेधां मयि प्रजां मय्यग्निस्तेजो दधातु मयि मेधां मयि प्रजां मयीन्द्र इन्द्रियं दधातु मयि मेधां मयि प्रजां मयि सूर्यो भ्राजो दधातु ॥२॥ द्युभिरक्तुभिः परिपातमस्मानरिष्टेभिरश्विना सौभगेभिः ॥ तन्नो मित्रो वरुणो मामहन्तामदितिः सिन्धुः पृथिवी उतद्यौः ॥ कया नश्चित्र आभुवदूती सदा वृधः सखा ॥ कया शचिष्ठया वृता ॥ कस्त्वा सत्यो मदानां म ँ हिष्ठोमत्सदन्धसः ॥ दृढा चिदारुजेवसु ॥ अभीषुणः सखीनामविता जरितृणाम् ॥ शतं भवास्यूतिभिः ॥ वयः सुपर्णा उपसेदुरिन्द्रं प्रियमेधा ऋषयो नाधमानाः ॥ अपध्वान्तमूर्णुहि पूर्धि चक्षुर्मुमुग्ध्यस्मान्निधयेव बद्धान् ॥३॥ शं नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शं योरभिस्रवन्तु नः ॥ ईशानावार्याणा

क्षयन्तीश्चर्षणीनाम् ।। अपो याचामि भेषजम् ।। सुमित्रा न आप ओषधयः सन्तु दुर्मित्रास्तस्मै भूयासुर्योऽस्मान् द्वेष्टि यं च वयं द्विष्मः ।। आपोहिष्ठा मयोभुवस्तान ऊर्जे दधातन ।। महेरणाय चक्षसे ।। यो वः शिवतमो रसस्तस्य भाजयतेहनः ।। उशतीरिव मा तरः ।। तस्मा अरङ्गमामवो यस्य क्षयाय जिन्वथ ।। आपो जनयथा च नः ।।४ ।। पृथिवी शान्ता साऽग्निना शान्ता सा मे शान्ता शुचꣳशमयतु ।। अन्तरिक्षꣳशान्तं तद्वायुना शान्तं तन्मे शान्तꣳशुचꣳशमयतु ।। द्यौः शान्ता साऽऽदित्येन शान्ता सा मे शान्ता शुचꣳशमयतु ।। पृथिवी शान्तिरन्तरिक्षꣳशान्तिर्द्यौः शान्तिर्दिशः शान्तिरवान्तरदिशाः शान्तिरग्निः शान्तिर्वायुः शान्तिरादित्यः शान्तिश्चन्द्रमाः शान्तिर्नक्षत्राणि शान्तिरापः शान्तिरोषधयः शान्तिर्वनस्पतयः शान्तिर्गौः शान्तिरजाः शान्तिचरश्वः शान्तिः पुरुषः शान्तिर्ब्रह्म शान्तिर्ब्राह्मणः शान्तिः शान्तिरेव शान्तिः शान्तिर्मे अस्तु शान्तिः ।। तयाऽहꣳशान्त्या सर्वशान्त्या मह्यं द्विपदे चतुष्पदे च शान्तिं करोमि शान्तिर्मे अस्तु शान्तिः ।। एह श्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मोत्तिंष्ठन्तमनूत्तिंष्ठन्तु मामाꣳश्रीश्च ह्रीश्च धृतिश्च तपो मेधा प्रतिष्ठा श्रद्धा सत्यं धर्मश्चैतानि मा मा हासिषुः ।। उदायुषा स्वायुषो दोषधीनाꣳरसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳअनु ।। तच्चक्षुर्देवहितं पुरस्ताच्छुकमुच्चरत् ।। पश्येम शरदः शतं जीवेम शरदः शतं नन्दाम शरदः शतं मोदाम शरदः शतं भवाम शरदः शतंꣳशृणवाम शरदः शतं प्रब्रवाम शरदः शतमजीतास्याम शरदः शतं ज्योक्च सूर्यं दृशे ।। य उदगान्महतोऽर्णवाद्विभ्राजमानः सरिरस्य मध्यात्समावृषभो लोहिताक्षः सुर्यो विपश्चिन्मनसा पुनातु ।। ब्रह्मणश्चोतन्यसि ब्रह्मण आणीस्थो ब्रह्मण आवपनसि धारितेयं पृथिवी ब्रह्मणा मही धारितमेऽनेन महदन्तरिक्षं दिवं दाधार पृथिवी

ऽसदेवां यदहं वेद तदहं धारयाणि मा मद्वेदोऽधिविस्रसत् ॥ मेधामनीषे मा विशताऽसमीचीभूतस्य भव्यस्यावरुध्यै सर्वमायुरयाणि सर्वमायुरयाणि ॥ आभिगीभिर्यदतो न ऊनमाप्यायय हरिवो वर्धमानः ॥ यदा स्तोतृभ्यो माहिगोत्रा रुजासि भूयिष्ठभाजो अधते स्याम ॥ ब्रह्म प्रावादिष्म तन्नो मा हासीत् ॥ ॥ ॐ शान्तिः शान्तिः शान्तिः ॥५॥ [1]नमस्ते रुद्र मन्यव० इति प्रश्नम् ॥ अग्नाविष्णू सजोषस - इत्येकादशानुवाकान् ॥ ऋचां प्राची महती दिगुच्यते ॥ दक्षिणामाहुर्यजुषामपाराम् ॥ अथर्वणामङ्गिरसां प्रतीची ॥ साम्नामुदीची महती दिगुच्यते ॥ ऋग्भिः पूर्वाह्णे दिवि देव ईयते ॥ यजुर्वेदे तिष्ठति मध्ये अह्नः ॥ सामवेदेनास्तमये महीयते ॥ वेदैरशून्यस्त्रिभिरेति सूर्यः ॥ ऋग्भयो जाता ऽसर्वशो मूर्तिमाहुः ॥ सर्वा गतिर्याजुषी हैव शश्वत् ॥१॥ सर्वं तेजस्साम रूप्यऽह शश्वत् ॥ सर्वऽहेदं ब्रह्मणा हैव सृष्टम् ॥ ऋग्भयो जातं वैश्यं वर्णमाहुः ॥ यजुर्वेदं क्षत्रियस्याहुर्योनिम् ॥ सामवेदो ब्राह्मणानां प्रसूतिः ॥ पूर्वे पूर्वेभ्यो वच एतदूचुः ॥ आदर्शमग्निं चिन्वानाः ॥ पूर्वे विश्वसृजो मृताः ॥ शतं वर्षसहस्राणि ॥ दीक्षिताः सत्रमासत ॥२॥ तप आसीदग्रहपतिः ॥ ब्रह्म ब्रह्माऽभवत्स्वयम् ॥ सत्यऽह होतैषामासीत् ॥ यद्विश्वसृज आसत ॥ अमृतमेभ्य उदगायत् ॥ सहस्रं परिवत्सरान् ॥ भूतऽह प्रस्तोतैषामासीत् ॥ भविष्यत्प्रतिचाहरत् ॥ प्राणो अध्वर्युरभवत् ॥ इदऽसर्वऽसिषासताम् ॥३॥

---

[1] गृह्यपरिशिष्टे - (ताडपत्रगते) त ऋत्विजः कुम्भमन्वारभ्य वैष्णवीं गायत्रीं अष्टसहस्रमष्टशतं वा वदन्तो ''वेदादीन्, अब्लिङ्गान्, हिरण्यवर्णाः० पवमानः० इत्यनुवाकौ, वरुणसूक्तं, श्रीसूक्तं, पुरुषसूक्तम्, पञ्चशान्तिं, नमस्ते रुद्र इति प्रश्नं, चमकानुवाकान्, ऋचां प्राचीं० इत्येतमनुवाकं च जपेयुः नमो ब्रह्मण० इति परिधानीयां, त्रिरन्वाह० इति ब्राह्मणम्'' इत्यादि ॥ अत्र नमकचमकयोः पाठस्य स्पष्टं वचनेन तत्त्यागो नोचितः ॥ सूत्रालाभेन वा आग्रहेण वा यद्येतावन्तमनेहसं न तयोः पाठः कृतः तद्दोषापनोदनाय हरिः शरणीकरणीयः ॥

अपानो विद्वानावृतः ॥ प्रतिप्रातिष्ठदध्वरे ॥ आर्तवा उपगातारः ॥ सदस्या ऋतवोऽभवन् ॥ अर्धमासाश्च मासाश्च ॥ चमसाध्वर्यवोऽभवन् ॥ अश ँ सद्ब्रह्मणस्तेजः ॥ अच्छावाकोऽभवद्यशः ॥ ऋतमेषां प्रशास्तासीत् ॥ यद्विश्वसृज आसत ॥४॥ ऊर्ग्राजानमुदवहत् ॥ ध्रुवगोपः सहोऽभवत् ॥ ओजोभ्यष्टौ दग्राव्णः ॥ यद्विश्वसृज आसत ॥ अपचितिः पोत्रीयामयजत् ॥ नेष्ट्रीयामयजत्त्विषिः ॥ आग्नीध्राद्विदुषी सत्यम् ॥ श्रद्धा हैवायजतस्वयम् ॥ इरा पत्नी विश्वसृजाम् ॥ आकूतिरपिनद्ढविः ॥५॥ इध्म ँ ह क्षुच्चैभ्य उग्रे ॥ तृष्णा चावहतामुभे ॥ वागेषा ँ सुब्रह्मण्यासीत् ॥ छन्दोयोगान्विजानती ॥ कल्पतन्त्राणि तन्वानाहः ॥ स ँ स्थाश्च सर्वशः ॥ अहोरात्रे पशुपाल्यौ ॥ मुहूर्ताः प्रेष्या अभवन् ॥ मृत्युस्तदभवद्धाता ॥ शमितोग्रो विशां पतिः ॥६॥ विश्वसृजः प्रथमाः सत्रमासत ॥ सहस्रसमं प्रसुतेनयन्तः ॥ ततोह जज्ञे भुवनस्य गोपाः ॥ हिरण्मयः शकुनिर्ब्रह्म नाम ॥ येन सूर्यस्तपति तेजसेद्धः ॥ पिता पुत्रेण पितृमान् योनियोनौ ॥ नावेदविन्मनुते तं बृहन्तम् ॥ सर्वानुभुमात्मान ँ सम्पराये ॥ एष नित्यो महिमा ब्राह्मणस्य ॥ न कर्मणा वर्द्धते नो कनीयान् ॥७॥ तस्यैवात्मा पदवित्तं विदित्वा ॥ न कर्मणा लिप्यते पापकेन ॥ पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः ॥ पञ्चपञ्चाशतः पञ्चदशाः ॥ पञ्चपञ्चाशतः सप्तदशाः ॥ पञ्चपञ्चाशत एकवि ँ शाः ॥ विश्वसृजा ँ सहस्रसंवत्सरम् ॥ एतेन वै विश्वसृज इदं विश्वमसृजन्त ॥ यद्विश्वमसृजन्त ॥ तस्माद्विश्वसृजः ॥८॥ विश्वमेनाननुप्रजायते ॥ ब्रह्मणः सायुज्य ँ सलोकतां यन्ति ॥ एतासामेव देवताना ँ सायुज्यम् ॥ सार्ष्टिता ँ समानलोकतां यन्ति ॥ य एतदुपयन्ति ॥ ये चैनत्प्राहुः ॥ येभ्यश्चैनत्प्राहुः ॥ ॐ ॥ **इति जपित्वा, 'नमो ब्रह्मण' इति त्रिर्जपित्वा, ओमिति कुम्भमुत्थाप्य, भद्रासने कन्यामुपवेश्य,**

**आपोहिष्ठेति तिसृभिः हिरण्यवर्णा इति चतसृभिः पवमानस्सुवर्जन इत्यादिभिर्मार्जयित्वाऽथर्त्विजः मासतिथिवारनक्षत्रयोग-करणादिजनितसमस्तदोषपरिहारोस्त्वित्याशीर्वादपुरस्सरं तां स्नापयित्वा, मङ्गलवस्त्रादिभिरलङ्कृत्य पञ्चगव्यं संस्कृत्य, 'ॐ यत्वगस्थिगतं पापं देहै तिष्ठति मामके ॥ प्राशनं पञ्चगव्यस्य दहत्वग्निरिवेन्धनम्' इति मन्त्रेण पञ्चगव्यं प्राशयित्वा होमं कुर्यात् ॥**

**अथ ग्रहशान्तिऋतुशान्तिसमानतन्त्रप्रयोगः ॥ ग्रहशान्तिऋतुशान्तिहोमं कर्तुं स्थलशुध्यर्थं स्थण्डिलोल्लेखनाख्यं कर्म करिष्ये इति सङ्कल्प्य ॥ अग्नि प्रतिष्ठापनान्तं कृत्वा कर्ता प्राणानायम्य देशकालौ सङ्कीर्त्य मम भार्यायाः प्रथमरजोदर्शनकाले गर्भाधानकाले च आदित्यादीनां नवानां ग्रहाणां शुभैकादशास्थानफलावात्प्यर्थं प्रथमरजोदर्शनकाले मासतिथिवारनक्षत्रयोगकरणजनितसमस्तदोषशान्त्यर्थं नवग्रहमखपूर्वकमृतुशान्तिहोमं समानतन्त्रेण करिष्ये ॥** नवग्रहमखपूर्वकऋतुशान्तिहोमः कर्म, आघारवत्तन्त्रं, पञ्चदशदारुरिध्मः, अग्नीषोमावाज्यभागौ, ग्रहमखे कपिलो नामाग्निः इत्यादि सर्वं पूर्ववदुक्त्वा, शान्तिहोमे - वरदो नामाग्निः, सविता देवता, चरुर्हविः, प्रधानहोमे - ब्रह्मविष्णुरुद्रत्र्यम्बकादयो देवताः, पालाशसमिच्चर्वाज्यतिलद्रव्याणि हवींषि, अर्यमब्रहस्पतिइन्द्रवाक्विष्णु-सरस्वतीसवितृसोमराजवरुणाग्न्यादित्यविष्णुसूर्यब्रह्मबृहस्पतय इत्येते स्विष्टकृद्देवताः, आज्यस्य, मान्त्रवर्णिक्यो देवताः, एता अङ्गदेवताः, प्रधानदेवताः, इत्यादि सङ्कल्प्यान्वाधानादिकं कुर्यात् ॥ यदि पृथक्क्रियते तदा वरदो नामाग्निरित्यादिकमुक्त्वाऽन्वाधानाद्यग्निमुखान्तं कृत्वा, पक्वहोमादिकं कुर्यात् ॥ अथ आप्रणीताभ्यः कृत्वा, नवग्रहान् पूर्ववत् सम्पूज्य, कलशस्थापनं च कृत्वा, सवितृब्रह्मविष्णुरुद्रत्र्यंम्बकान् सम्पूज्य, नवग्रहेभ्यः पूर्ववत्पक्वं हुत्वा,

समिच्चर्वाज्यतिलव्रीहिहोमांश्च पूर्ववत्कृत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, अथर्तुशान्तिप्रधानपक्कहोमं करिष्ये इति सङ्कल्प्य ॥ ॐ भूर्भुवःसुवरो ३तत्सवितुः ..... दयात्स्वाहा ॥ इति पक्कं हुत्वा, अथ विष्णुसूक्तेन शताष्टकसङ्ख्यया पालाशसमिधो हुत्वा, ब्रह्मसूक्तेनान्नं रुद्रसूक्तेनाज्यं 'प्रतिसूक्तं जुहुयात्तेषामष्टादशकृत्व' इति सूत्रम् ॥ यथा ॥ विष्णोर्नुकं०, तदस्यप्रियं०, प्रतद्विष्णुः०, परोमात्रया, विचक्रमे०, त्रिर्देव०, इति षड्विष्णुसूक्तम् ॥ सर्वत्र विष्णव इदम् ॥ ब्रह्मजज्ञानं०, पिताविराजा०, ब्रह्मदेवानजनयत्०, अन्तरस्मिन्निमेलोका, ब्रह्मन्देवास्त्रयः, चतस्रआशा०, इति षड्ब्रह्मसूक्तम् ॥ सर्वत्र ब्रह्मण इदम् ॥ परिणोरुद्र०, स्तुहिश्रुतं, मीढुष्टम, अर्हन्बिभर्षि०, त्वमग्नेरुद्रो०, आवोराजानं०, इति षड्रुद्रसूक्तम् ॥ ॐ अर्हन्बिभर्षि सायकानि धन्व ॥ अर्हन्निष्कं यजतं विश्वरूपम् ॥ अर्हन्निदं दयसे विश्वमब्भुवम् ॥ नवा ओजीयो रुद्र त्वदस्ति स्वाहा ॥ ॐ त्वमग्ने रुद्रो असुरो महो दिवः त्वꣳशर्धो मारुतं पृक्ष ईशिषे ॥ त्वं वातैररुणैर्यासि शङ्गयः त्वं पूषा विधतः पासि नुत्मना स्वाहा ॥ ॐ आवो राजानमध्वरस्य रुद्रꣳहोतारꣳसत्ययजꣳरोदस्योः ॥ अग्निं पुरा तनयित्नो रचित्ताद्धिरण्यरूपमवसे कृणुध्वꣳस्वाहा ॥ सर्वत्र रुद्रायेदम् ॥ एवमेव प्रतिसूक्तमष्टादशकृत्वः हुते प्रत्येकमष्टोत्तरशतं भवति ॥ अथाऽयुष्यहोमः ॥ ॐ यो ब्रह्मा ब्रह्मण उज्जभार० ॥ ईशानाय देवाय इदम् ॥१॥ ॐ विभ्राजमानः० ॥ घर्मरुचये देवायेदम् ॥२॥ ॐ ब्रह्मज्योतिः० ॥ ब्रह्मज्योतिषे यमायेदम् ॥३॥ ॐ श्रियं लक्ष्मी० ॥ श्रियै लक्ष्म्या औपलाया अम्बिकायै गव इन्द्रसेनाया इदम् ॥४॥ ॐ दाक्षायण्यः० ॥ दाक्षायणीभ्य इदम् ॥५॥ ॐ दिव्या गणा० ॥ दिव्येभ्यो गणेभ्य इदम् ॥६॥ ॐ एकः पुरस्तात्० ॥ देवायेदम् ॥७॥ ॐ वसून्रुद्रानादित्यान्० ॥ वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्य साध्येभ्यो ऋभुभ्यो गन्धर्वेभ्यः पितृभ्यो भृगुभ्यः सर्पेभ्योऽङ्गिरोभ्य इदम् ॥८॥ इत्यष्टभिः समिच्चर्वाज्यानि हुत्वा, त्र्यंम्बकमन्त्रेणाष्टसहस्रमष्टशतं वा तिलहोमं हुत्वा, अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय

व्याहृतिभिरुपहुत्य, ग्रहशान्तिः कृता देवर्यमणं बृहस्पतिमिति स्विष्टकृत् विशेषविहितत्वात्, अन्यथा हव्यवाहमिति स्विष्टकृतं हुत्वा, जयप्रभृतिसर्वं यथावत्कृत्वा, पूर्ववद्ग्रहान् अभ्यर्च्य, दक्षिणादिकं सर्वं पूर्ववदेव कुर्यात्॥ इति ग्रहशान्तिऋतुशान्तिसमानतन्त्रप्रयोगः ॥ छ ॥

अथ पञ्चगव्यम्॥ स्वस्तिकमध्ये तण्डुलोपरिमृन्मयादिपात्रं निधाय, तदुत्तरभागे पूर्वे गोमूत्रं दक्षिणे गोमयं पश्चिमे क्षीरं उत्तरे दधि मध्ये घृतं वायव्ये कुशोदकमिति सादयित्वाऽऽसनपोणायामौ कृत्वा, अस्याः कुमार्याः प्रथमरजोदर्शनदोषपरिहारद्वारा शरीरशुद्ध्यर्थं पञ्चगव्यप्राशनं कर्तुं पञ्चगव्यस्थापनं करिष्ये इति सङ्कल्प्य॥ गोमूत्रमादित्यदैवत्यं गोमयं वायुदैवत्यं, क्षीरं सोमदैवत्यं, दधि शुक्रदैवत्यं आज्यं वह्निदैवत्यं कुशोदकं गन्धर्वदैवत्यं इति भावयित्वा सम्पूज्य पूर्वस्थापितपात्रे योजयति॥ गायत्र्या गोमूत्रं गन्धद्वारामिति गोमयं आप्यायस्वेति क्षीरं दधिक्राव्ण इति दधि शुक्रमसीत्याज्यं देवस्यत्वेति कुशोदकं इति संयोज्यापोहिष्ठेत्यालोड्य मानस्तोक इत्यभिमन्त्र्य गायत्र्या सवितारं आवाह्य सम्पूज्य गायत्र्या प्रणवेन चाभिमन्त्र्य यत्वगस्थिगतमिति प्राशयेत्॥ इति पञ्चगव्यविधिः ॥ छ ॥

अथ गृहस्थस्य स्त्रियाऽभ्यनुज्ञातस्य प्रथमऋतुसंवेशनविच्छेदप्रायश्चित्तमुच्यते ॥ ब्राह्मणेभ्यो निवेद्य तदुपदिष्टं व्रतं चरित्वा ॥ कृच्छ्रमिति केचित्॥ त्रिशतप्राणायामं वा॥ तदुक्त स्मृतिसङ्ग्रहे 'ऋतुस्नातां न चेद्गच्छेन्नियतां ब्रह्मचारिणीम्॥ नियमातिक्रमात्तस्य प्राणायामशतत्रयम्' इति॥ सार्धैककृच्छ्रमित्यर्थः॥ ततोऽग्निमुपसमाधाय प्राणानायम्य प्रथमर्तुसंवेशनविच्छेदप्रायश्चित्तहोमं करिष्ये, प्रायश्चित्तहोमः कर्म, आघारवत्तन्त्रमित्यादि, चित्तिर्नामाग्निः, जातवेदोग्निर्देवता, चरुर्हविरित्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, पक्कमवदाय॥ ॐ यस्त्वा हृदा ..... अमृतत्वमश्यों३यस्मै त्वं ..... स्वस्तिस्वाहा॥ जातवेदसेऽग्नय इदम्॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय आज्याहुतीरुपजुहोति॥ ॐ मधुश्च स्वाहा॥ मधव इदम्॥ ॐ माधवश्च स्वाहा॥ माधवायेदम्॥ ओं॒शुक्रंश्च स्वाहा॥ शुक्रायेदम्॥ ओं॒शुचिश्च स्वाहा॥ शुचय इदम्॥ ॐ नभश्च स्वाहा॥ नभस इदम्॥ ॐ नभस्यश्च स्वाहा॥ नभस्यायेदम्॥ ॐ इषश्च स्वाहा॥ इषायेदम्॥ ॐ ऊर्जश्च स्वाहा॥ ऊर्जायेदम्॥ ॐ सहश्च स्वाहा॥ सहायेदम्॥ ॐ सहस्यश्च

स्वाहा ।। सहस्याय इदम् ।। ॐ तपश्च स्वाहा ।। तपायेदम् ।। ॐ तपस्यश्च स्वाहा ।। तपस्यायेदम् ।। इति द्वादश स्रुवाहुतीर्हुत्वा, अथ स्विष्टकृत् प्रभृतिवरदानान्तं कृत्वा पक्वशेषं चोभौ जायापती प्राश्नीयाताम् ।। गायत्र्या प्राश्याप आचम्य ।। यतइन्द्रभयामहे० स्वस्तिदाविशस्पतिः० इति जठरमभिमृश्य शेषं समापयेत् ।। इति प्रथमऋतुसंवेशनविच्छेदप्रायश्चित्तप्रयोगः ।। छ ।।

अथर्तुसंवेशनगर्भाधानयोः समानतन्त्रप्रयोगः ।। पारिजाते 'प्रथमे वा द्वितीये वा तृतीये त्वशुभं भवेत् ।। गर्भाधानं न कुर्वीत चतुर्थाद्याः शुभावहाः ।। गुरौ शुक्रे विरुद्धे च त्वधिमासे मलिम्लुचे ।। अतीतस्य निषेकस्य गर्भाधानं प्रजाक्षयम् ।। उत्सवेषु च सर्वेषु सीमन्तऋतुजन्मसु ।। सुरासुरेज्ययोश्चैव मौढ्यदोषो न विद्यते' इत्यनेन कालप्राप्तमृतुसंवेशनादिकं कर्तव्यं, अतीतं चेत्कालान्तरे सुमुहूर्ते कर्तव्यं इत्युक्तं भवति ।। अथ कालनिर्णयः 'चतुर्थी षष्ठ्यष्टमी चतुर्दशी पर्व सङ्क्रान्तिः व्यतीपातः वैधृतिः भरणी कृत्तिकार्द्राऽश्लेषा मघा फल्गुनी विशाखा ज्येष्ठा पूर्वाषाढा पूर्वाभाद्रपदा इति दश नक्षत्राणि जन्मत्रयं रव्यङ्गारकशनिवारान् मेषवृश्चिकमकरकुम्भराशींश्च वर्जयित्वा युग्मतिथिषु विषमतिथिषु वा एकादशं त्रयोदशदिनं च वर्जयित्वा ऋतुसंवेशनं कुर्यात्' ।। प्रयोगरत्ने 'मन्त्रैः प्रवेधसे यस्त्वा यस्मै त्वं त्वेसुपुत्रकैः ।। चतस्रोऽन्नाहुतीरन्त्ये होतव्या मेक्षणान्विताः ।। ज्येष्टाद्यैराज्यमष्टाभिर्हुत्वा स्विष्टकृदादयः ।। अथालङ्कृत्य शय्यायां विष्णुर्योनिं जपेन्निशि' इति ।। विश्वामित्रकारिकायाम् 'मासे तृतीये विज्ञाते गर्भे तस्यास्तु कारणैः ।। गर्भाधानविधिः कार्यो जुहुयात्पक्वमेतया' इत्युपक्रम्य 'ऋतुसंवेशनविच्छित्तिप्रायश्चित्तार्थमीरितैः ।। त्रिभिर्यस्त्वाहृदेत्याद्यैः पक्वहोमादनन्तरम् ।। कैश्चिन्मेक्षणधर्मेण चरुहोमो विधीयते' इति ।। गर्भाधानपक्वहोमानन्तरमृतु-संवेशनविच्छित्तिप्रायश्चित्तान्नहोमत्रयस्योक्तत्वाद्गर्भाधानहोमानन्तरं 'अथालङ्कृत्य शय्यायां विष्णुर्योनिं जपेन्निशि' इति पूर्वोक्तवचनाच्च ऋतुसंवेशनस्य गर्भाधानेन सह सनानतन्त्रत्वं पश्चात्कर्तव्यत्वं चोक्तं भवति ।। विष्णुभट्टेन तु 'मेक्षणेन चरुं गृहीत्वा प्रवेधसे, यस्त्वाहृदा, यस्मैत्वं, त्वेसुपुत्र, इति चतसृभिर्जुहुयात्' इत्युक्तम् ।। अतः पक्वहोमानन्तरं चरुहोमचतुष्टयं कार्यम् ।। चतुर्थाद्याषोडशदिनेषु युग्मदिने स्वानुकूले सुमुहूर्ते ऋतुसंवेशनं कर्तव्यम् ।। तत्रापि युग्मदिनेषु रात्रिषु पुत्राः, अयुग्मरात्रिषु कन्याः प्रजायन्त इति ज्ञेयम् ।। छ ।।

अथ प्रयोगः ।। अथ कर्ता प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य करिष्यमाणर्तुसंवेशनगर्भाधानाङ्गतयाविहितं पुण्याहवाचनपूर्वकं नान्दीसमाराधनं हिरण्येन करिष्ये इति सङ्कल्प्य तत्कृत्वा, पुनराचमनप्राणायामौ कृत्वा, आवयोः करिष्यमाणगर्भाधानर्तुसंवेशनाख्यकर्म कर्तुं देहशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये इति सङ्कल्प्य तत्कृत्वा, पुनः पूर्ववत्सङ्कल्प्य, गर्भाधानर्तुसंवेशनाख्यं कर्म कर्तुं पुण्याहवाचनं करिष्ये इति सङ्कल्प्य ।। अनयोर्गर्भाधानर्तुसंवेशनककर्मणोः पुण्याहं भवन्तो ब्रुवन्तु ।। आभ्यां

गर्भाधानर्तुसंवेशनकर्मभ्यां स्वस्ति भवन्तो ब्रुवन्तु ॥ एनयोर्गर्भाधानर्तुसंवेशनकर्मणोः ऋद्धिं भवन्तो ब्रुवन्तु ॥ वेधाः प्रीयतां, प्रजापतिः प्रीयतामिति विशेषः ॥ प्रोक्षणान्तं कृत्वा, अथ गर्भाधानहोमं कर्तुं स्थलशुद्ध्यर्थं स्थण्डिलोल्लेखनाख्यं कर्म करिष्ये इति सङ्कल्प्य तत्कृत्वा, लौकिकाग्निं प्रतिष्ठाप्य, आजुह्वानउद्बुध्यस्वाग्न इत्यारोपितसमिधं निधाय, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य, ममास्यां भार्यायां जनिष्यमाणबीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं प्रजासंस्कारातिशयद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानहोमं करिष्ये, गर्भाधानहोमः कर्माधारवत्तन्त्रमित्यादि मारुतो नामाग्निः वेधा देवता चरुर्हविरग्निः स्विष्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि सङ्कल्प्य, आप्रणीताभ्यः कृत्वा ॥ वेधसे जुष्टं निर्वपामीति चरुं निरुप्य, प्रोक्ष्य, अग्निमुखान्तं कृत्वा, पक्वाज्जुहोति ॥ ॐ प्रवेधसे ..... यजेहेड्यों३प्रवेधसे ..... यजेहेड्यान्स्वाहा ॥ वेधस इदम् ॥ अथ पक्वावशिष्टं चरुं मेक्षणेन गृहीत्वा हस्तेनैव जुहोति ॥ ॐ प्रवेधसे ..... हेड्यान्स्वाहा ॥ वेधस इदम् ॥ ॐ यस्त्वा हृदा ..... मश्याꣳस्वाहा ॥ जातवेदसेऽग्नय इदम् ॥ ॐ यस्मै त्वं० ॥ जातवेदसेऽग्नय इदम् ॥ ॐ त्वेसुपुत्र० ॥ इन्द्रायेदम् ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय अथ स्रुवाहुतीर्जुहोति ॥ ॐज्येष्ठाय स्वाहा ॥ ॐ ज्येष्ठायेदम् ॥ ॐ श्रेष्ठाय स्वाहा ॥ श्रेष्ठाय इदम् ॥ ॐ प्रतिष्ठाय स्वाहा ॥ प्रतिष्ठायेदम् ॥ ॐ प्रतिष्ठित्यै स्वाहा ॥ प्रतिष्ठित्या इदम् ॥ ओꣳसम्पत्यै स्वाहा ॥ सम्पत्त्या इदम् ॥ ॐ सम्पतये स्वाहा ॥ सम्पतय इदम् ॥ ॐ ब्रह्मणे स्वाहा ॥ ब्रह्मण इदम् ॥ ॐ आयतनवते स्वाहा ॥ आयतनवत इदम् ॥ अथ स्विष्टकृदादिकं कृत्वा अथापरेणाग्निमुभौ जायापती उपविश्य ॥ ॐ तत्सवितुर्वृणीमह इति हविष्यमन्नमभिमन्त्र्य गायत्र्या प्राश्नीयातां, अथाप

आचम्य ॥ यत इन्द्र, स्वस्तिदा विशस्पतिः, इति द्वाभ्यां जठरमभिमृश्य अप उपस्पृश्य उत्तरपरिषेकादिकं कृत्वा ॥ अनेन गर्भाधानकर्मणा श्रीपरमेश्वरः प्रीयताम्' इतीश्वरार्पणं कुर्यात् ॥ एषु गर्भाधानादिकर्मसु प्रत्येकं शतं ब्राह्मणान्भोजयेदित्युक्तं आश्वलायनदर्मे' विवाहे चोपनयने गर्भाधानादिके तथा ॥ अग्न्याधाने शत विप्रान्भोजयेद्दक्षिणान्वितान्' इति ॥ अथर्तुसंवेशनम् ॥ कर्ता आसनप्राणायामौ कृत्वा, मम अस्यां भार्यायां जनिष्यमाणसर्वगर्भसंस्कारर्थं ऋतुसंवेशनं करिष्ये इति सङ्कल्प्य ॥ तदङ्गत्वेन मम आयुष्मत्सुगुणानेकसुपुत्रावात्प्यर्थं वायनफलताम्बूलदानानि करिष्ये इति सङ्कल्प्य ॥ ततो नव सङ्ख्या वा पञ्च सङ्ख्या वा सुवासिनीः सम्पूज्य ॥ 'फल मनोरथफलं प्रददाति सदा नृणाम् ॥ पुत्रपौत्राभिवृद्ध्यर्थमतः शान्तिं प्रयच्छ मे ॥ ताम्बूलं श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् ॥ तस्मादस्य प्रदानेन स मे विष्णुः प्रसीदतु ॥' इति द्वाभ्यां सुवासिनीभ्यः फलदानानि दत्वा, अथ नानागोत्रेभ्यो ब्राह्मणेभ्यो नम इति गन्धाक्षतादिभिर्ब्राह्मणान्तसम्पूज्य तेभ्यश्च फलताम्बूलानि दत्वा, अथर्तुसंवेशनसूक्तं रात्रावसम्भवे इदानी वा कुर्यात् ॥ भार्याहस्ते फलताम्बूलतण्डुलैः पूर्णपात्रं दत्वा, तां पश्यन् जपति 'ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ॥ आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ ॐ यथा पृथिव्यग्निगर्भा द्यौर्यथेन्द्रेण गर्भिणी ॥ वायुर्यथा दिशां गर्भं एवं गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति ॥ गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजा ॥ हिरण्ययी अरणी यन्निर्मन्थतो अश्विना ॥ तं ते गर्भꣳहवामहे दशमे मासि सूतवे ॥ नेजमेष परापत सुपुत्रः पुनरापत ॥ अस्यै मे पुत्रकामायै गर्भमाधेहि यः पुमान्' इति ॥ अथैनामालिङ्ग्य जपति 'ॐ अमूहमस्मि ॥ सा त्वम् ॥ द्यौरहम् ॥ पृथिवी त्वम् ॥ सामाहम् ॥ ऋक् त्वम् ॥ तावेहि सम्भवाव ॥ सहरेतो दधावहै ॥ पुꣳसे पुत्राय वेत्तवै ॥ रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय' इति ॥ अथाऽत्मानं प्रत्यभिमृशते 'ॐ अहं

गर्भमदधामोषधीष्वहं विश्वेषु भुवनेष्वन्तः ॥ अहं प्रजा अजनयं पितृणामहं जनिभ्यो अपरीषु पुत्रान्' इति ॥ अथ अप उपस्पृश्य अथैनामुपगच्छति 'ॐ तां पूषञ्छिवतमा मेरयस्व यस्यां बीजं मनुष्या वपन्ति ॥ या न ऊरु उशती विस्रयातै यस्यामुशन्तः प्रहराम शेफम्' इति ॥ एवमेव चतुर्थीप्रभृत्याषोडशीमुत्तरामुत्तरां युग्मामुपैतीति सूत्रं ॥ उत्तरोत्तरयुग्मतिथयः श्रेष्ठा इत्यर्थः ॥ ततो द्विराचम्य अथास्या नाभिदेशस्थितमङ्गलवस्त्रमध्ये सुवासिन्यः फलताम्बूललड्डुकादिकं पूरयन्ति 'ॐ याः फलिनीर्याः० ॥ पुष्पावतीः प्रसूवतीः फलिनीरफला उत ॥ अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः' इति द्वाभ्याम् ॥ यस्य स्मृत्येत्युक्त्वा आभ्यां गर्भाधानर्तुसंवेशनकर्मभ्यां श्रीपरमेश्वरः प्रीयताम् ॥ अथारार्तिकं कृत्वा ब्राह्मणान् भोजयेत् ॥ इति गर्भाधानर्तुसंवेशनप्रयोगः ॥छ॥ अथवोक्तदिन ऋतुसंवेशनमात्रं कृत्वा तदनन्तरं विज्ञाते गर्भे तृतीये वा मसि गर्भाधानहोमं कुयात् ॥ तृतीये मासीति पूर्वमेवोक्तं तस्मिन्पक्षे यदि निषेकानन्तरं पतिर्विपद्यते अथवा प्रवासं गतः सन्यस्तो वा तदा संस्कारकर्तृनिर्णयः ॥ एषु गर्भाधानादिषु पतिः संस्कर्ता, तदभावे देवरो गुरुर्गोत्रजो वा अन्यगोत्रजो वा बान्धवाः पूर्वपूर्वाभावे तूत्तरोत्तरं अधिकारिणः ॥ तथा च बव्हृचकारिकायाम् 'कर्ताऽस्य देवरस्तस्य यस्याः पत्यावसम्भवे' ॥ ब्राह्मेऽपि 'गर्भाधानादिसंस्कर्ता पिता श्रेष्ठत्तमः स्मृतः ॥ अभावे स्वकुलीनःस्याद्बान्धवो वाऽन्यगोत्रजः' ॥ सत्यव्रतः 'मृतो देशान्तरगतो भर्ता स्त्री यद्यसंस्कृता ॥ देवरो वा गुरुर्वाऽपि वंशजो वा समाचरेत्' इति ॥ इति कर्तृनिर्णयः ॥ छ ॥

अथौपासनाग्निनिर्णयः ॥ गर्भाधानादिजातकर्मान्तेषु समस्तौपासनाग्निः ॥ नामकरणादिचौलान्तेषु तदेकदेशाग्निः ॥ तस्मिन् प्रजासंस्कार इत्येक इति सूत्रात् ॥ अनग्निकस्य सर्वाधानिनश्च गर्भाधानादिचौलान्तेषु सर्वत्र लौकिकाग्निरेव ॥ केचित्तु समानतन्त्रप्रयोगे साग्निकस्य समस्तौपासनाग्निस्तदेकदेशोवेत्याहुः तच्चिन्त्यं समस्तौपासनाग्नाविति वचनाभावात् ॥ तथा च सूत्रम् 'यस्मिन्नग्नावुपनयति तस्मिन् ब्रह्मचर्यं तस्मिन्व्रतचर्यं तस्मिन् समावर्तनं तस्मिन्पाणिग्रहणं तस्मिन्गृह्याणि कर्माणि क्रियन्ते तस्मिन्काम्यानि तस्मिन्प्रजासंस्कार इत्येके' इति ॥ ''सा यदि पुत्रप्रसूर्भवति प्रसिद्धमौपासने जातकर्मकृत्वेति'' च ॥ विष्णुभट्टोऽपि ॥ गर्भाधानादिजातकर्मान्तेषु संस्कारकर्मसु स एवौपासनाग्निः समस्तो भवतीति ॥ एवमुत्पादितोऽग्निः प्रजासंस्कारेषु समस्तो ग्राह्यो नैकदेश इति च ॥ तथा नामकरणादावुत्सृष्टसूतकाग्नेस्तु पितुरोपासनैकदेशाग्निं प्रणवेनाहृत्य स्थण्डिले प्रतिष्ठाप्येत्यादि ॥ कुमारस्वामिकारिकायाम् 'गर्भाधानादिचौलान्तं कर्म तन्त्रैक्यमुच्यते ॥ औपासनैकदेशाग्नौ गृह्यमात्ये त्वनग्निकः' इति ॥ गृही=साग्निकः, अमात्ये-लौकिकाग्नौ ॥ इत्यादिवचनपर्यालोचनया गर्भाधानादिजातकर्मपर्यन्तं समस्तौपासनाग्निः ॥ नामकरणादिचौलान्तेष्वेकदेशाग्निः ॥

गर्भाधानादिचौलान्तकर्मसु समानतन्त्रे पितुरौपासनैकदेशाग्निरेव ॥ प्रजासंस्कार इति सामान्यवचनानां जातकर्मान्तेषु चरितार्थत्वात् कारिकादिविरोधाच्चेत्यलम् ॥ सर्वाधानिनस्तु कर्मणि कर्मण्येवैनं पुनःपुनः संस्कृत्याहरतीति परिभाषासूत्रे लौकिकाग्नेरेव स्मार्तकर्मार्थं संस्कृत्याहरणमुक्तम् ॥ अथ यदि पितरि प्रवासं गते यदाऽन्यः कर्ता तदा तस्यैवौपासनाग्निं सद्यस्सन्धाय तत्रैव गर्भाधानादिचौलान्तान्यपि यथासम्भवं वा कृत्वा तमुत्सृजेत् ॥ अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति न्यायात् ॥ अतोऽत्र नैकदेशः ॥ सन्यस्ते मृते वा पितरि लौकिकाग्निरेव ॥ चौलप्रकरणोक्तैकदेशाग्निविषयोऽप्यत्रैव योज्यः ॥ इत्यग्निनिर्णयः ॥ छ ॥

अथाग्निमुखादीनां समानतन्त्रेषु निर्णयः ॥ तत्रायं क्रमः ॥ नान्दीमुखाद्यग्निमुखान्तं कालातिक्रमप्रायश्चितं च तन्त्रेण कृत्वा, व्याहृतिमिन्दाहुतिपूर्वकं तत्तत्पक्कं हुत्वा, प्रत्येकं तत्तदुपहोमांश्च हुत्वा, स्विष्टकृदाद्युत्तरपरिषेकात्प्राक् प्रोक्तानि तन्त्रेण कुर्यात् ॥ विष्णुभट्टोऽपि 'अत्राग्निमुखान्तं स्विष्टकृदाद्येकमेव ॥ मध्ये प्रधानहोममतिपन्नं क्रियत' इति ॥ प्रायश्चित्तसूत्रे 'सर्वेषां समानमाचार्याब्रुवते तत्रोदाहरन्ति ॥ पक्कं सौविष्टकृतमाज्यं प्रणीता ब्रह्मेध्मा बर्हिरेकमिति विज्ञायत इति हि ब्राह्मणम्' इति ॥ प्रयोगसारे 'अत्रैतानि तु तन्त्रतः ॥ पक्कं स्विष्ठकृदाद्यं च प्रणीता चेति स्मृतिः' इति ॥ कुमारस्वामिकारिकायामपि 'गर्भाधानादिचौलान्तं कर्म तन्त्रैक्यमुच्यते ॥ निहितस्थण्डिले तत्र कर्मनामामुकादिकम्' इति ॥ इति समानतन्त्रेषु अग्निमुखादीनां निर्णयः ॥ छ ॥ अथ पक्कप्रधानदेवताः ॥ वेधाः प्रजापतिर्धाता सविता मृत्युरेव च ॥ नामनिष्क्रमणान्नाशे सविता श्रोत्रकेशिनः' इति गर्भाधानादिचौलान्तं पक्कदेवताः ॥ अथ पक्कहोमोपहोममन्त्राः ॥ प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती स्मृते ॥ तत्तद्याज्यानुवाक्याभ्यां प्रधानचरुहोमकान् ॥ गर्भे प्रवेधसे मन्त्रः पुंसवे तु प्रजापते ॥ धाताददातु सीमन्ते सावित्री वैष्णवे बलौ ॥ हरिःहरादिकं जाते तथा नाम्न्युपनिष्क्रमे ॥ अन्नाशये च सावित्री श्रोत्रादिः कर्णवेधने ॥ अथ येकेशिनश्चौले उपहोमा इमे क्रमात् ॥ ज्येष्ठाद्यष्टौ च गर्भोअस्यौषधीनामिति त्रयं ॥ धाताद्वादश वैविष्णोर्नुकं षट् सद्य आदितः ॥ चात्वारः षड् ऋचः प्रजापत्यसूक्तं प्रजापते ॥ स्वस्तिनोष्टावहं चाष्टौ प्राणोरक्षति वै दश ॥ ततः षड्भ्यश्च होतव्यमारोहादि यथाक्रमम् ॥ इत्युपहोमाः ॥ स्विष्टकृदादि परिषेकात्प्राग्बलिमौदुम्बरे क्षिपेत् ॥ 'मन्त्रानन्याथाऋचि' इति कारिकावचनाद्गर्भाधाने हविः प्राशनादौ द्वारलोपान्मन्त्रमात्रमुक्त्वा गर्भाधानादिचौलान्तमुपरिष्टात्तन्त्रं क्रमेण कृत्वोत्तरपरिषेकादिकं कुर्यात् ॥ प्रयोगसारे ॥ हुतशेषनिधानं च प्राशनं मूर्ध्नि चाहुतीः ॥ कुर्यात्कर्मसमाप्तेः प्राक् परिषेक विसर्जनात् ॥ हुतशेषनिधानस्य प्राशनस्य न चेद्युजुः ॥ व्याहृत्याद्यैस्त्रिभिः कुर्यात् वेदसारा हि ते त्रयः ॥ व्याहृतिभिरनाम्नाते जुहुयादुपहोमकान् ॥ सङ्कल्पेन विनोद्देशत्यागेन च विना हुतम् ॥ समन्त्रमपि तत्कर्म न यथोक्तफलप्रदम् ॥ इति सर्वत्र ज्ञेयम् ॥ इति प्रयोगरत्नमालायां कर्त्रादिसमानतन्त्रनिर्णयः ॥ छ ॥

अथ मुख्यकालातिक्रमे गौणकाले क्रियमाणानां गर्भाधानादिसंस्काराणां समानतन्त्रमग्रे विवक्षुरिदानी तत्तत्कालक्रियमाणानां संस्काराणां तत्तत्प्रयोगज्ञानाय भिन्नतन्त्रेण तत्तत्कालनिर्णयपूर्वकं गर्भाधानादि प्रयोगो लिख्यते ॥ तत्र गर्भाधानं तु ऋतुसंवेशनसाहचर्यात्प्रागेवोक्तम् ॥ अथ पुंसवनकालनिर्णयः ॥ विज्ञाते गर्भे द्वितीये तृतीये वा मासि तिष्ये नक्षत्रेऽन्यस्मिन्वा पुन्नक्षत्रे पुंसवनकालः ॥ अत्र जातूकर्ण्यः 'द्वितीये वा तृतीये वा मासि पुंसवनं भवेत् ॥ व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा' इति ॥ प्रथमप्रसूतायास्तु गर्भाच्चतुर्थे षष्ठेऽष्टमे वा मासि ॥ तथा च स्मृतिः 'तृतीये मासि कर्तव्यं गृष्टेरन्यत्रशोभनम् ॥ गृष्टेश्चतुर्थे मासे तु षष्ठे मास्यथवाऽष्टमे' इति ॥ श्रीधरीये 'कुर्यात्पुंसवनं प्रसिद्धविषये गर्भे तृतीयेऽथवा मासि स्फीततनौ तुषारकिरणे पुष्येऽथवा वैष्णवे ॥ हित्वा कर्कटकं नृयुग्ममबलामन्येष्वरिक्ते तिथौ शुद्धे नैधनधाम्नि शुक्रशशभृद्विन्मन्त्रिणां वासरे ॥' गृष्टिरित्युक्ते सकृत्प्रसूतागृष्टिः स्यादित्युक्तत्वात्प्रथमगर्भाया इत्यर्थः ॥ पारिजाते 'प्रथमं पुंसवं कुर्यात्साधं सीमन्तकर्मणा ॥ सीमन्तोन्नयनस्योक्तमासवारर्क्षराशिषु' इति ॥ वराहः 'हस्तो मूलं श्रवणं पुनर्वसु मृगशिरस्तु तथा पुष्यः ॥ पुंसंज्ञकेषु कार्येष्वेतानि शुभानि धिष्ण्यानि' ॥ नृसिंहः 'अपि पुंसवनं कार्यं दम्पत्योरनुकूलभे ॥ जन्मादि वर्जयेद्रात्रिं चांशकं विपदादिषु' ॥ इति गर्भात्तृतीये चतुर्थे षष्ठेऽष्टमे वा मासि शुक्लपक्षे शुक्लपञ्चम्यादि कृष्णपञ्चमीपर्यन्तेषु

छिद्रपर्ववर्जितेषु तिथिषु शुभवारेषु हस्तमूलश्रवणपुनर्वसूमृगशिरपुष्येषु मिथुनकर्कटकन्यावर्जितेषु राशिषु पुंसवनं कुर्यात्।। छ।।

अथ प्रयोगः।। कर्ता प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, पुण्याहपूर्वकं नान्दीश्राद्धं कृत्वा, पुनः कर्माङ्गपुण्याहं वाचयित्वा, प्रजापतिः प्रीयतामिति विशेषः।। स्थण्डिलोल्लेखनाद्यौपासनाग्नि प्रतिष्ठापनान्तं कृत्वा, प्राणानायम्य, देशकालौ सङ्कीर्त्य, मम भार्यायाः गर्भस्य पुंरूपत्व द्विजत्वज्ञानोदयसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं पुंसवनाख्यं कर्म करिष्ये।। पुंसवनहोमः कर्माघारवत्तन्त्रमित्यादि, चन्द्रमा नामाग्निः प्रजापतिर्देवता चरुर्हविः अग्निः स्विष्टकृदित्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, पक्वाज्जुहोति।। ॐ प्रजापते तन्वं मे ... स्यामों३प्रजापते तन्वं मे ... स्याम स्वाहा।। प्रजापतय इदम्।। अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय अथाज्याहुतीरुपजुहोति।। गर्भो अस्योषधीनां०।। अग्नये गर्भायेदम्।। ॐ प्रसद्य भस्म०।। ॐ पुनरासद्य सदनं०।। पूर्ववदुद्देशत्यागः।। अथ स्विष्टकृदादिवरदानान्तं कृत्वाऽऽज्यशेषं पत्न्या मुखे प्रश्च्योतयति 'अस्मेदेवास' इति चतसृभिः प्रत्यृचं प्राश्योत्तरपरिषेकादिकं कुर्यात्।। अतःपरं पत्नी बहुसर्पिष्कमन्नं भुञ्जीत।। इति पुंसवनप्रयोगः।। छ।।

अथ सीमन्तोन्नयनम्।। चतुर्थमासादारभ्याऽऽप्रसवात्तदुक्तनक्षत्राद्यन्विते शुभे दिने सीमन्तोन्नयनकालः।। शुक्लपक्षे चतुर्थी षष्ठ्यष्टमी नवमी द्वादशी चतुर्दश्यमावास्याश्च वर्जयित्वा शुभवारेषु पुष्यहस्तपुनर्वसुश्रवणमृगशिरा-रेवतीरोहिण्युत्तरात्रयमूलनक्षत्रेषु सिंहवृश्चिकवर्जितान्यदशराशिषु सीमन्तं कुर्यात्।। तथा च शङ्खः 'गर्भालम्बनमारभ्य यावन्न प्रसवस्तदा।। सीमन्तोन्नयनं कुर्याच्छङ्खस्य वचनं यथा' इति।। प्रथमगर्भायास्तु चतुर्थे मास्येव।। तथा च सूत्रम्।। प्रथमगर्भायाश्चतुर्थे मासि सीमन्तोन्नयनम्' इति।। अत्र बार्हस्पत्ये सौरमास उक्तः 'सौरेचैव चतुर्थे स्यान्मासे षष्ठेष्टमेऽपि वा।। मासप्रोक्ताः क्रिया याः स्युः ताः सर्वाः सौरमासतः।। वसिष्ठस्तु 'चतुर्थे सावने मासि षष्ठे वाऽप्यथवाऽष्टमे' इति।। कारिकायाम् 'पुन्नक्षत्रे सिते पक्षे त्वन्वाधानादि पूर्ववत्।। ऋक्षस्य मध्यमे पादद्वये कर्मेदमिष्यत' इति।। कालविधाने 'सीमन्ते तिष्यहस्तादितिहरिशशभृत्पौष्णविध्युत्तराख्याः पक्षच्छिद्रां च रिक्तां पितृतिथिमपहायाऽपराः स्युः प्रशस्ताः।। सिंहाली वर्जयित्वा शुभफलबहुला राशयोऽप्यंशकानि श्रेष्ठानि चेतराणि भृगुबुधधिषणानां विशुद्धेऽष्टमेऽपि'।। अदितिः=पुनर्वसुः।। वराहमिहिरः 'हस्तो मूलं श्रवणम्' इति।। नारदः 'हस्ते मूलेऽदितेर्भेष्वजितौमृगशिरस्यपि।। पुष्ये प्रजापतौ चैवाऽजैकपाद्द्वयसंयुत' इति।। पितृतिथिरमावास्या।। 'शुभसंस्थे निशानाथे चतुर्थी च चतुर्दशीम्।। पौर्णमासीं प्रशंसन्ति केचित्सीमन्तकर्मणि' इति बृहस्पतिः।। 'चतुर्दशी चतुर्थी च कदाचित्तु शुभप्रदे' इत्युक्तत्वात् चतुर्दशी चतुर्थी च शुभपक्षे ग्राह्ये।। नृसिंहः 'वर्ज्या रिक्ताष्टमी षष्ठी सीमन्तोन्नयने सदा।।

रात्रिश्चन्द्राष्टवैनाशत्रिजन्मविपदादयः' इति ॥ गुरुः 'सीमन्तोन्नयनं कुर्याच्छुभांशे शुभलग्नके ॥ शुभद्रेक्काणभागेषु दिवसेषु च शस्यत' इति ॥ अथ यद्यकृतसीमन्तायां प्रसूतौ तत्र कर्तव्यमाह गर्गः 'यदि सीमन्ततः पूर्वं प्रसूता चेत्तु भामिनी ॥ तदानीं पेटके गर्भं स्थाप्य संस्कारमाचरेत्' इति ॥ गर्भं=शिशुम् ॥ इति कालनिर्णयः ॥ छ ॥

अथ प्रयोगो लिख्यते ॥ कर्ता प्रातर्मङ्गलस्नानादि नित्यकर्म वैश्वदेवनान्दीश्राद्धान्तं सर्वं यथाविधि कृत्वा, देशकालौ सङ्कीर्त्य, मम भार्याया बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं सीमन्तोन्नयनाख्यं कर्म करिष्ये इति सङ्कल्प्य, पुण्याहवाचने धाता प्रीयतामिति विशेषः ॥ अथ स्थण्डिलोल्लेखनाद्यौपासनाग्निं प्रतिष्ठाप्य, सीमन्तोन्नयनहोमः कर्माधारवत्तन्त्रमित्यादि मङ्गलोनामाग्निः धाता देवता चरुर्हविः आज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, पक्वाज्जुहोति ॥ ॐ धाता ददातु नो ... वावनों३धाता प्रजाया ... विधेम स्वाहा ॥ धात्र इदम् ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय अथ आज्याहुतीरुपजुहोति ॥ ॐ धाता ददातु नोरयिं प्राचीं० ॥ धात्र इदम् ॥१॥ ॐ धाता ददातु दाशुषे० ॥ धात्र इदम् ॥२॥ ॐ अनुनोद्यानुमतिः० ॥ अनुमत्या इदम् ॥३॥ ॐ अन्विदनुमते त्वं मन्यासै० ॥ अनुमत्या इदम् ॥४॥ ॐ अनुमन्यतामनु० ॥ अनुमत्यै देव्या इदम् ॥५॥ ॐ यस्यामिदं० ॥ अनुमत्यै देव्या इदम् ॥६॥ ॐ राकामहं० ॥ राकाया इदम् ॥७॥ ॐ यास्ते राके० ॥ राकाया इदम् ॥८॥ ओ३ सिनीवालि० ॥ सिनीवाल्या इदम् ॥९॥ ॐ यासुपाणिः० ॥ सिनीवाल्या इदम् ॥१०॥ ॐ कुहूमहं० ॥ कुह्वै देव्या इदम् ॥११॥ ॐ कुहूर्देवाना० ॥ कुह्वै देवानां अमृतस्य पत्न्या इदम् ॥१२॥ इति द्वादशस्रुवाहुतीर्हुत्वा, स्विष्टकृदादिवरदानान्तं कृत्वा 'अथास्यास्त्रैण्या शलल्यादर्भैरुदुम्बर-प्रसूनैर्यवप्रसूनैरितिकेशान्विभजन्त्सीमन्तमुन्नयन्ति' इति सूत्रम् ॥ अस्यार्थः ॥ त्र्यैण्या त्रीणि एतानि वर्णानि यस्याः सा त्र्यैणी तया ॥ शलल्या वराहसूचीमुखरोम्णा वर्णत्रययुक्तवराहरोम्णेत्यर्थः ॥ 'चित्रं किर्मीरकल्माषशवलैताश्चकर्बुरे' इत्यमरः ॥ तया दर्भैरुदुम्बरपुष्पस्तबकैर्यवपुष्पैश्च तस्याः केशान्विभजन्त्सीमन्त-मूर्ध्वमुन्नयति 'राकामहं०, यास्तेराके०' इति द्वाभ्यां, अथ तस्या कण्ठे यवपुष्पमालिकां प्रतिमुञ्चति 'ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः' इति ॥ अथ वीणागाथिनौ वीणया गायेतामिति ब्रूयात् ॥ ततस्तौ वीणागाथिनौ वीणया

गाथामेतां गायतः 'ॐ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजाविवृत्तचक्रा आसीनास्तीरेणगङ्गेतव' इति ।। यस्या नद्याः समीपे वसतितस्या नामासौ पदस्थाने सम्बुध्यन्तेन निर्देश्यम् 'सीते तव, कावेरि तव' इत्यादि ।। इति सीमन्तप्रयोगः ।।छ ।।

अथ विष्णुबलिः ।। अत्र सूत्रम् 'विष्णवे बलिरष्टमे मासि पूर्वपक्षस्य सप्तम्यामष्टम्यां दशम्यां द्वादश्यां रोहिण्यां श्रोणायां वा' इति ।। अतोऽष्टमे मासि शुक्लपक्षे द्वितीयासप्तम्यष्टमीदशमीद्वादशीषु शुभवारेषु रोहिणीपुनर्वसुपुष्यहस्त-स्वातीमूलोत्तराषाढाश्रवणरेवतीषु चन्द्रतारानुकूले विष्णुबलिं कुर्यात् ।। कालविधाने 'रोहिण्यां वा वैष्णवे पूर्वपक्षे द्वादश्यां वा सप्तमे वा तिथौ च ।। मध्ये वाह्नः पूर्वभागे न रात्रौ विष्णोः पूजां कारयेद्गर्भपुष्ट्यै ।। श्रवणे चैव रोहिण्यां पुष्ये चैव प्रशस्यते ।। द्वितीया सप्तमी चैव द्वादशी च शुभातिथिः ।। शुभग्रहोदयाः श्रेष्ठास्तेषां च दिवसा अपि' ।। आश्वलायनः 'वर्जयेत्सर्वकर्माणि विपत्प्रत्यरनैधनैः ।। चन्द्राष्टमे न यत्नेन वधनाशव्ययैस्तथा ।। अनभीष्टो यदि भवेत्तिष्येण श्रवणेन वा ।। सावित्रनैऋतादित्यैर्वैश्वदेवेन वा द्विजैः ।। एतैर्ऋक्षैश्च सीमन्तो बलिश्चापि विधीयते ।। प्राजापत्यमरुत्पौष्णधिष्ण्यैर्वाऽपि त्वसम्भवे' ।। इति कालनिर्णयः ।। छ ।।

अथ प्रयोगः ।। कर्ता प्रातस्नानादिवैश्वदेवान्तं नित्यकर्म कृत्वा नान्दीश्राद्धं कृत्वा अथ विष्णुबल्याख्यं कर्म कर्तुं स्वस्तिपुण्याहवाचनं करिष्ये इति सङ्कल्प्य सवितृविष्णू प्रीयेतामिति विशेषः ।। एवं पुण्याहं वाचयित्वा स्थण्डिलोल्लेखनाद्यौपासनाग्निं प्रतिष्ठाप्याचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य मम भार्याया बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भपुष्टिरक्षार्थं विष्णुबलिहोमं करिष्ये ।। तत्र शोभनोनामाग्निः सवितादेवता चरुर्हविः अग्निः स्विष्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि सङ्कल्प्यान्वाधानाद्याप्रणीताभ्यः कृत्वोपोत्थायाग्रेणाग्निं तण्डुलैः स्थण्डिलं कृत्वा विष्णुप्रतिमां विन्यस्य अथवाविलिख्यास्य गर्भस्य रक्षार्थं पुष्ट्यर्थमायुः श्रीबलवृद्ध्यर्थं च विष्णुपूजां करिष्ये ।। गन्धपुष्पोदकानि गृहीत्वा ।। ॐ भूः पुरुषमावाहयामि ।। ॐ भुवः पुरुषमावाहयामि ।। ओꣳसुवः पुरुषमावाहयामि ।। ॐ भूर्भुवःसुवः पुरुषमावाहयामीत्यावाह्य ।। स्वागतमित्युक्त्वा 'भगवतो महापुरुषस्यैतदासनमुपृक्लप्तमत्रास्तां भगवन्महापुरुष' इति

कूर्चं दत्वा तञ्जुषस्वेत्युक्त्वा ततो गायत्र्याऽभिमन्त्रिते सपवित्रे पात्रे अप आनीय गन्धपुष्पाक्षतान्निक्षिप्य ''त्रीणिपदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।। अतो धर्माणि धारयन् ।। इति पाद्यं दत्वा ओमित्यर्घ्यं दत्वाऽथ सवित्रे जुष्टं निर्वपामीति चरुं निरुप्य प्रोक्षणाद्यग्निमुखान्तं कृत्वा दैवतमर्चयति ।। आपोहिष्ठेति तिसृभिः हिरण्यवर्णा इति चतसृभिः पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा अताद्भिस्तर्पयति 'केशवं तर्पयामि, नारायणं तर्पयामि' इत्यादिभिर्द्वादशनामभिस्तर्पयित्वा ।। एतैरेव नामधेयैर्गन्धपुष्पाक्षतधूपदीपैः क्रमेण वक्ष्यमाणमन्त्रैः सहाभ्यर्चयति ।। यथा ।। ॐ इदं विष्णुः० ।। केशवनारायणमाधवगोविन्दविष्णुमधुसूदनत्रिविक्रमवामन श्रीधरहृषीकेशपद्मनाभदामोदरेभ्यो नमः गन्धान् समर्पयामि ।। ॐ इरावतीधेनुमतीहिभूतꣳसूयवसिनीमनुषेदशस्ये ।। व्यस्कभ्नाद्रोदसीविष्णुरेतेदाधारपृथिवीमभितोमयूखैः ।। केशवादि ... दामोदरेभ्यो नमः अक्षतान्० ।। ॐ तद्विष्णोः परमं० ।। केशवनारायण ... दामोदरेभ्यो नमः पुष्पाणि० ।। ॐ तत्सवितुः० ।। केशवादि ... दामोदरेभ्यो नमः धूपमाघ्रापयामि ।। ॐ उद्दीप्यस्व जातवेदोपघ्नं निर्ऋतिं मम ।। पशूꣳश्च मह्यमावह जीवनं च दिशो दश ।। केशवादि ... दामोदरेभ्यो नमः दीपं दर्शयामि ।। इति पञ्चोपचारपूजां कृत्वा, गायत्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय ।। ॐ विष्णोर्नुकं०, ॐ तदस्य प्रियं०, ॐ प्रतद्विष्णुः०, ॐ परोमात्रया०, ॐ विचक्रमे०, ॐ त्रिर्देव० इति षड्भिरुपहुत्य ।। सर्वत्र विष्णव इदम् ।। अथ स्विष्टकृदादि वरदानान्तं कृत्वा, सुघृतमिश्रगुडपायसꣳहविर्निवेद्य ।। अथान्नेन 'केशवाय स्वाहा, नारायणाय स्वाहा, इत्यादि दामोदराय स्वाहा' इति द्वादशनामभिः स्वाहान्तैर्बलिं दत्वा, 'ॐ त्रीणि पदा विचक्रमे० ॐ इदं विष्णुर्विचक्रमे०' इत्यादिभिः स्तुत्वा ।। ॐ भूः पुरुषमुद्वासयामीत्यादिभिरुद्वास्य, अन्नशेषं पत्नीं प्राशयेत् ।। अनेन विष्णुबलिकर्मणा श्रीपरमेश्वरः प्रीयतामित्युक्त्वा ब्राह्मणान् भोजयेत् ।। इति विष्णुबलिप्रयोगः ।। छ ।।

'जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ॥ दैवादतीतकालश्चेदतीते सूतके भवेत्' इति ॥ आचार्योऽपि 'प्राङ्नाभिकर्तनात्पुंसो जातकर्मक्रिया द्विजैः ॥ स्नात्वा सचैलं संशुद्धैः सितगन्धादिभूषितैः' ॥ गर्गः 'जातमात्रकुमारस्य जातकर्म विधीयते ॥ स्तनप्राशनतः पूर्वं नाभिकर्तनतोऽपि च ॥ एष्वतीतेषु कालेषु शुभयोगे शुभोदये ॥ जातकर्मक्रियां कुर्यात्पुष्ट्यायुः परिवृद्धये' ॥ जैमिनिः 'यावन्न छिद्यते नालं तावन्नाप्नोति सूतकम् ॥ छिन्ने नाले ततः पश्चात्सूतकं तु विधीयते ॥ अच्छिन्ननाभि कर्तव्यं श्राद्धं वै पुत्रजन्मनि ॥ आशौचापगमे कार्यमथवा नियतात्मभिः ॥ द्रव्याभावे द्विजाभावे प्रवासे पुत्रजन्मनि ॥ हेमश्राद्धं प्रकुर्वीत यस्य भार्या रजस्वला' ॥ वसिष्ठः 'श्रुत्वा जातं पिता पुत्रं सचैलः स्नानमाचरेत् ॥ उत्तराभिमुखो भूत्वा नद्यां वा देवखातके' इति ॥ अथ स्त्रीणा गर्भाधानादिविष्णुबल्यन्तं स्त्रीपुंसोः कर्म समानम् ॥ समन्त्रकमेवेत्यर्थः ॥ जातकर्मादि चौलान्तं स्त्रीणाममन्त्रकं विवाहस्तु समन्त्रकः ॥ छ ॥

अथ प्रयोगः ॥ पुत्रे जाते पिता नद्यादावुत्तराभिमुखः स्नात्वा, वस्त्रादिकं धृत्वा, हिरण्येन नान्दीश्राद्धं कृत्वा, पुण्याहवाचने मृत्युः प्रीयतामिति विशेषः ॥ पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्माख्यं कर्म करिष्ये इति सङ्कल्प्य, अथ कुमारं स्पृष्ट्वा पश्यन् जपति 'ॐ अद्भ्यः सम्भूतः पृथिव्यै रसाच्च' इत्येतमनुवाकम् ॥ अथैनमद्भिः प्रोक्षति 'ॐ क्षेत्रियै त्वा निरृत्यै त्वा' इति षड्भिः ॥ अथैनं स्वाङ्क उपवेशयति 'ॐ अङ्गादङ्गात्सम्भवसि'० इति ॥ अथ कुमारस्य मूर्ध्न्यभिजिघ्रति 'ॐ अश्माभव'० इति ॥ अथासौपदस्थाने नक्षत्रनामधेयं सम्बुध्यन्तेन निर्देश्यम् ॥ यथा 'ब्रह्मणाभिजिघ्राम्याश्विन', एवमापभरण, कार्तिक कृत्तिकेति वा, रौहिण, मार्गशीर्ष, आर्द्रक, पुनर्वसो, तिष्य, आश्लेष, माघ, पूर्वाफल्गुन, उत्तराफल्गुन, हस्त, चैत्र, स्वाते, विशाख, अनूराध, ज्येष्ठ, मूलक, पूर्वाषाढ, उत्तराषाढ, श्रावण, श्रविष्ठ, शातभिषज, पूर्वाप्रोष्ठपद, उत्तराप्रोष्ठपद, रैवत, इति पुंसाम् ॥ अथ स्त्रीणाम् - अश्विने, आपभरणे, कार्तिके कृत्तिके इति वा, रोहिणि, मार्गशीर्षे, आर्द्रके, पुनर्वसो, तिष्ये, आश्लेषे, माघे, पूर्वाफल्गुने, उत्तराफल्गुने, हस्ते, चैत्रे, स्वाते, विशाखे, अनूराधे, ज्येष्ठे, मूलके, पूर्वाषाढे, उत्तराषाढे, श्रावणे, श्रविष्ठे, शातभिषजे, पूर्वाप्रोष्ठपदे,

उत्तराप्रोष्ठपदे, रैवते, इति सम्बुद्ध्यन्तमुक्त्वा ।। अथास्य दक्षिणे कर्णे जपति 'ॐ अग्निरायुष्मान्' इति पञ्च ।। अथ वामकर्णे 'ॐ आयुष्टे विश्वतो दधत्' इति जपित्वा दधिमधुघृतमिति समुदायुत्य हिरण्येन कुमारं प्राशयति 'प्राणो रक्षति०, यो देवोः०, मनसः०, आन एतु०, जुषतां० यया रूपाणि०, चक्षुर्देवानां०, आयुरिन्नः०, श्रोत्रेण भद्रं०, येन प्राच्या०' इति दशभिः दशवारं प्राश्य, अवशिष्टं व्याहृतिभिर्गोष्पदे निनयति (गोः पादे गोष्ठे वा निनयतीत्यर्थः) ।। अथैनं मातुरङ्के स्थापयति 'सीदत्वं मातुः० अन्तरग्ने० शिवो भूत्वा०, हꣳसःशुचिषत्०' इति चतसृभिः ।। अथ स्तनमभिमन्त्रयते 'ॐ यस्ते स्तन' इति ।। स्तन्यं पिबन्तमनुमन्त्रयते 'ॐ द्यौस्ते पृष्ठं' इति ।। अथोदकुम्भं शीर्षोपरि शिक्यादौ निदधाति 'ॐ आपः सुप्तेषु' इति ।। अथ स्थण्डिलोल्लेखनादिसमस्तौपासनाग्निं प्रतिष्ठाप्य प्राणानायम्य देशकालौ सङ्कीर्त्य, मम कुमारस्यायुरभिवृद्ध्यर्थं जातकर्महोमं करिष्ये इति सङ्कल्प्य, अत्र प्रबलो नामाऽग्निः मृत्युर्देवता चरुर्हविः इत्याद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ।। ओꣳहरिꣳहरन्तं ... विक्रमस्वों३माछिदोमृत्यो ... विधेम स्वाहा ।। मृत्यव इदम् ।। अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय ।। ॐ सद्यश्चकमानाय०, ॐ कामेनमे०, ॐ परंमृत्यो०, ॐ प्रपूर्व्यं ... प्रथमजामृतस्य स्वाहा ।। सर्वत्र मृत्यव इदम् ।। इति चतसृभिरुपहुत्य, स्विष्टकृदादि वरदानान्तं कृत्वा ।। अनोयुगं रथयुगं वा ।। अनोयुगं नाम अनसो रथस्य वा चक्रच्छिद्रगतदारुद्वयोरुपरिस्थापितदारुविशेषः ।। तं स्नाप्य वस्त्रेणाच्छाद्य तदग्नेः पूर्वभागे संस्थाप्य तस्याग्रेऽश्वत्थपर्णेषु हुतशेषं निदधाति 'ॐ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नम' इति ।। अथ दशमेऽहनि तं युगमुत्थापयति 'ॐ ब्रह्मजज्ञानं' इति ।। अथोदकुम्भमुत्थापयति 'ॐ भूर्भुवःसुवः' इति ।। अनेन जातकर्मणा श्रीपरमेश्वरः प्रीयताम् ।। इति जातकर्मप्रयोगः ।। छ ।।

अथ नाकमणम् ।। एकादशे द्वादशे षोडशेऽष्टादशे विंशे द्वाविंशे वा दिने मासि शताहे वा, व्यतीपात-वैधृति-छिद्रतिथि-पर्व-पापवार-चरराशीश्च वर्जयित्वा, अश्विनी-रोहिणी मृगशिरः-पुनर्वसु-पुष्य-मघोत्तरात्रय-हस्त-स्वात्यनूराध-मूल-श्रवण-धानिष्ठा-शततारा-रेवतीषूपनिष्क्रमणादर्वागन्यस्मिन्वा शुभे दिने नामकरणं कुर्यात् ।। तत्र सूत्रम् 'दशम्यां द्वादश्यां वा नामकरणम्' इति (दशम्यामतीतायामित्यर्थः) ।। अथवोपनिष्क्रमणात्पूर्वं शुभतिथिवारनक्षत्राद्यन्वितदिने आचतुर्थमासान्नामकरणस्य मुख्यः कालः, तदूर्ध्व गौणः ।। तत्र बोधायनस्मृतिः 'नामधेयं दशम्यां तु द्वादश्यां वाऽस्य कारयेत् ।। पुण्ये तिथौ मुहूर्ते वा नक्षत्रे वा गुणान्विते' इति ।। वसिष्ठः 'दशमे द्वादशे

वाऽह्नि नामकर्म विधीयते ॥ ततः परं विधानोक्तवारनक्षत्रराशिषु' ॥ गर्गः 'व्यतीपाते च सङ्क्रान्तौ ग्रहणे वैधृतावपि ॥ श्राद्धं विना शुभं नैव प्राप्तकालेऽपि मानवः' ॥ अन्यच्च 'अमासङ्क्रान्तिविष्ट्यादौ प्राप्तकालेऽपि नाचरेत्' इति ॥ सङ्ग्रहे 'अष्टदशाहे विगते दशाहे स्याद्द्वादशाहेऽप्यथ मासि वर्षे ॥ चन्द्रानुकूले सुदिने शताहे पुत्रस्य कुर्यादथ नामकर्म' ॥ भारते 'द्वादशे षोडशे विंशे द्वाविंशे क्रमतो दिने ॥ नाम कार्यं द्विजातीनां विप्रस्य दशमेऽपि वा ॥ राशयश्च स्थिराः श्रेष्ठाः द्विस्वभावाः शुभैर्युताः ॥ श्रेष्ठा नेष्टास्तथा शेषा यद्यप्युक्तशुभैर्युताः' ॥ कालविधाने 'मित्रादित्य मघोत्तरा शतभिषक्स्वाती धनिष्ठाच्युत प्राजेशाश्वि शशाङ्क पौष्ण दिनकृत्पुष्येषु राशौ स्थिरे ॥ छिद्रां पञ्चदर्शीं विहाय नवमीं शुद्धेऽष्टमे भार्गवज्ञाचार्यामृतपादभागदिवसे नामानि कुर्याच्छिशोः' ॥ आदित्यः-पुनर्वसुः ॥ 'युग्माश्च तिथयः शस्ता अजं धर्मतिथी विना ॥ पक्षच्छिद्रा इति ज्ञेयाः सर्वकर्मसु गर्हिताः ॥ अजो द्वितीया, धर्मो दशमी ॥ द्वितीया-दशम्यौ विना सर्वायुग्मतिथयः पक्षच्छिद्रा इत्यन्वयः ॥ युग्मतिथयश्च नामकर्मणि शस्ता इति ॥ युग्मास्तिथयः दशमद्वादशादिदिवसाः न तु चतुर्थी षष्ठ्यादि तिथयः' ॥ गर्गः 'मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता' ॥ अथ मासनामानि 'कृष्णोऽनन्तोऽच्युतश्चक्री वैकुण्ठोऽथ जनार्दनः ॥ उपेन्द्रोयज्ञपुरुषो वासुदेवस्तथा हरिः ॥ योगीशः पुण्डरीकाक्षो मासनामान्यनुक्रमात् ॥ तन्मासनाम प्रथमं दद्यात्सम्बोध्य चैव हि' ॥ चैत्रादिगणयेदिति शेषः ॥ 'शर्मेति ब्राह्मणस्योक्तं वर्मेति क्षत्रियस्य तु ॥ गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः,' इति व्यासोक्तेः ॥ कारिकायाम् 'पुंसां युग्माक्षराणि स्युर्विपरीतानि योषिताम्' इति ॥ सूत्रेऽपि 'घोषवदाद्यन्तरन्तस्थं दीर्घाभिनिष्ठानान्तमपि वा यस्मिंस्विदुपसर्गः स्यात्' इति ॥ वर्गाणां प्रथमद्वितीयाः शषसा अघोषाः अन्ये घोषाः ॥ घोषाक्षरमादौ यस्य तत्तथोक्तम् ॥ अन्तरं मध्ये अन्तस्थो यस्य तत्तथोक्तम् ॥ यरलवा अन्तस्थाः, अभिनिष्ठानो विसर्गः, सोऽन्ते यस्य तत्तथोक्तम् ॥ एतल्लक्षणयुक्तं देवतानाम ऋषिनाम वा स्वपूर्वपुरुषनाम वा दद्यात् ॥ यथा हरिशर्मा, नारायणशर्मा, इत्यादि द्रष्टव्यम् ॥ इति नामकरणकालनिर्णयः ॥ छ ॥

अथ नामकरणप्रयोगः ॥ कर्ता प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा वैश्वदेवं हुत्वा नान्दीश्राद्धं कृत्वा पुण्याहं वाचयेत् ॥ सविता प्रीयतां इति विशेषः ॥ पुनः प्राणानायम्य देशकालौ सङ्कीर्त्य मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थं व्यावहारिकसिद्ध्यर्थं नामकरणाख्यं कर्म करिष्ये इति सङ्कल्प्य, स्थण्डिलोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य, प्राणानायम्य नामकरणहोमं करिष्ये, नामकरणहोमः कर्माधारवत्तन्त्रमित्यादि पार्थिवो नामाग्निः सविता देवता चरुर्हविः अग्निः स्विष्टकृदित्यादि सङ्कल्प्य अन्वाधानाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ॥ ॐ भूर्भुवःसुवरोमिति पुरोनुवाक्यामनूच्य तत्सवितुरिति याज्यया हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय अथ आज्याहुतीरुपजुहोति ॥ ॐ प्रजापतेनत्वदेतांन्यन्यः०, रयीणां पति०, प्रजापते

त्वं, तवेमे लोकाः०, प्रजापतिं प्रथमं०, यो राय ईशे० ॥ सर्वत्र प्रजापतय इदम् ॥ इति षड्भिर्हुत्वा स्विष्टकृदादि वरदानान्तं कृत्वा अग्रेणाग्निमश्वत्थपर्णेषु 'ॐ भूर्भुवःसुवः' इति हुतशेषं निधाय ॥ अथ स्वर्णादिपात्रे तण्डुलान्पूरयित्वा तत्र सुवर्णेन हरिद्राखण्डेन वा कुलदेवतानाम मासनाम नक्षत्रनाम व्यावहारिकनामानीति क्रमेण नामचतुष्टयं लिखेत् ॥ यथा 'कुलदेवतानाम गणपतिभक्तः' इति ॥ 'मासनाम कृष्णः' ॥ अनन्तः, अच्युतः, चक्री, वैकुण्ठः, जनार्दनः, उपेन्द्रः, यज्ञपुरुषः, वासुदेवः, हरिः, योगीशः, पुण्डरीकाक्षः, इति द्वादशनामानि चैत्रादि गणयित्वा, तत्तन्मासप्राप्त नाम लिखेत् ॥ अथ नक्षत्रनाम 'अश्विनः, आपभरणः, कार्तिकः कृत्तिक इति वा, रौहिणः, मार्गशीर्षः, आर्द्रकः, पुनर्वसुः, तिष्यः, आश्लेषः, माघः, पूर्वाफल्गुनः, उत्तराफल्गुनः, हस्तः, चैत्रः, स्वातिः, विशाखः, अनूराधः, ज्येष्ठः, मूलकः, पूर्वाषाढः, उत्तराषाढः, श्रवणः, श्रविष्ठः, शातभिषजः, पूर्वाप्रोष्ठपदः, उत्तराप्रोष्ठपदः, रैवतः' इति तत्तन्नक्षत्रनाम विलिख्य ॥ व्यावहारिकनाम 'हरिशर्मा, नारायणशर्मा' इत्यादि ॥ इति नामचतुष्टयं विलिख्य, कुलदेवतामासनक्षत्रव्यावहारिकनामदेवताभ्यो नमः इति षोडशोपचारान् कृत्वा, पुष्पाञ्जलिं दत्वा, 'मम कुमारस्य व्यावहारिकसिध्यर्थमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं नामाभिधास्यावहे' इति पितरौ सङ्कल्पयेताम् ॥ अथ ब्राह्मणान् हिरण्यादिना तोषयित्वा, अस्य नामकरणकर्मणः पुण्याहं स्वस्ति ऋद्धिं भवन्तो ब्रुवन्तु ॥ कृष्णाय स्वस्तीति प्रतिवचनम् ॥ एवमनन्ताय, अच्युताय, चक्रिणे, वैकुण्ठाय, जनार्दनाय, उपेन्द्राय, यज्ञपुरुषाय, वासुदेवाय, हरये, योगीशाय, पुण्डरीकाक्षाय ॥ स्वस्तीति प्रतिवचनम् ॥ नक्षत्रनाम्ना आश्विनाय स्वस्ति भवन्तो ब्रुवन्तु ॥ पुनर्वसवे, स्वातये, प्रौष्ठपदाय, रैवताय, स्वस्ति भवन्तो ब्रुवन्तु ॥ शेषाणि सुगमानि ॥ व्यावहारिकनाम्ना हरिशर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥ हरिशर्मणे स्वस्तीति प्रतिवचनम् ॥ अथ कुमारस्य दक्षिणे कर्णे क्रमेण पितरौ नामचतुष्टयं कथयेताम् ॥ यथा 'कुलदेवतानाम्ना त्वं गणपतिभक्तोऽसि' इति त्रिः ॥ मासनाम्ना त्वं कृष्णोऽसीति त्रिः ॥ चक्र्यसि, हरिरसि, पुण्डरीकाक्षोऽसि ॥ शेषमूह्यम् ॥ नक्षत्रनाम्ना त्वमाश्विनोऽसीति त्रिः ॥ आपभरणोऽसि, पुनर्वसुरसि, स्वातिरसि, रैवतोऽसि ॥ शेषमूह्यम् ॥ व्यावहारिकनाम्ना त्वं शिवशर्माऽसि, हरिशर्माऽसीति त्रिस्त्रिः कथयित्वा अथ ब्राह्मणहस्तेऽक्षतान्दत्वा स्वयमुत्थाय कुलदेवतानाम्ना अयं गणपतिभक्तो भवतस्सर्वान् ब्राह्मणानभिवादयते इत्युक्ते, आयुष्मान् भवतु गणपतिभक्त इति प्रतिवचनम् ॥ मासनाम्ना कृष्णो भवतस्सर्वान् ब्राह्मणानभिवादयते, आयुष्मान् भवतु कृष्णः इतीतरे ॥ अनन्तो भवतः इत्यादि ॥ नक्षत्रनाम्ना अयमाश्विनो भवतस्सर्वानित्यादि ॥ आयुष्मान् भवत्वाश्विनः इति प्रतिवचनम् । एवमेवापभरणो भवतः इत्यादि ॥ व्यावहारिकनाम्ना अयं हरिशर्मा भवतस्सर्वान् ब्राह्मणानभिवादयते, आयुष्मान् भवतु हरिशर्मा ॥ इत्याशीरुक्त्वा, होमशेषं समाप्य, आरार्तिकं कृत्वा, ब्राह्मणा मन्त्राक्षतान्दद्युः ॥ अत्रासौ पदस्थाने नक्षत्रनाम निर्देश्यमित्युक्तं सूत्रे ॥ यथा 'रोहिणश्चापभरणो मार्गशीर्षोऽथ कार्तिकः ॥ माघ आश्वयुजश्चैत्रो ज्यैष्ठो प्रौष्ठपदस्तथा ॥ श्रावणश्शातभिषजो रैवतो द्वादशस्वपि ॥ आदिवृद्धिरकारान्तः सम्बुद्धौ रौहिणेति च ॥ तिष्यः फल्गुन आश्लेषो विशाखो हस्त आर्द्रकः ॥ श्रविष्ठो मूलकाषाढौ अनूराधोप्यवृद्धयः ॥ सम्बुद्धौ तद्वदेव स्युरथ स्वातिः पुनर्वसुः ॥ 'गृह्यसूत्रे' अथ नक्षत्राणि, रोहिणी-मृगशीर्ष-मघा-चित्रा-ज्येष्ठा-श्रवण-शतभिषग्रेवत्याश्वयुक्षु प्रथमाक्षरवृद्धिः, स्याद्रोहिण्यां रौहिणायेति तथेतराणि, तिष्या-आश्लेषा-हस्त-विशाखा-अनूराधा-आषाढ-श्रविष्ठासु प्रकृतिवत्तिष्यायेति तथेतराणि, फल्गुन्यां फल्गुनायेति, स्वाति-पुनर्वस्वोः स्वातये पुनवरसव इति, मूलार्द्रयोः मूलकाय आर्द्रकायेति, प्रोष्ठपदासु प्रोष्ठपदाय प्रौष्ठपदायेति वा, एवमापभरण्यामापभरणाय अपभरणायेति वा, अग्नये कृत्तिकाय कार्तिकायेति वा विख्यातानि, स्त्रीविषये कुमार्यै रौहिण्यै सुश्रियै जयन्त्या इति, प्रकृतिवत्तिष्यायै चेति, मूलार्द्रयोर्मूलकायै आर्द्रकायै चेति, प्रोष्ठपदासु निर्ऋत्यै रुद्राण्यै चेत्याभरण्यै कार्तिकायै रौहिण्यै स्वस्तीति' इति नामकरणप्रयोगः ॥ छ ॥

अथोपनिष्क्रमणम् ॥ तच्च तृतीये चतुर्थे वा मासि शुक्लपक्षे छिद्रतिथीन् सोमवारं च वर्जयित्वा शुभवारेषु पुनर्वसूतरात्रयहस्तचित्रास्वातीश्रवणधनिष्ठरेवत्यश्विनीषु

मेषवृश्चिकमीनव्यतिरिक्तराशिषु उपनिष्क्रमणं कुर्यात् ॥ उपनिष्क्रमणं नाम गृहाद्बहिः शिशोः प्रथमनिर्गमनं इत्यर्थः ॥ अत्र गृह्यसूत्रम् 'चतुर्थे मास्युपनिष्क्रमणम्' इति ॥ निष्क्रमणं चन्द्रसूर्यदर्शनं देवतानमस्कारं वा द्वादशेऽह्नि वा तृतीये चतुर्थे वा मासि कुर्यादिति स्मृत्यर्थसारोक्तेश्च ॥ बृहस्पतिः 'अथ निष्क्रमणं नाम गृहात्प्रथमनिर्गमः ॥ अकृतायां क्रियायां स्यादायुःश्रीनाशं शिशोः ॥ कृते सम्पद्विवृद्धिः स्यादायुर्वर्धनमेव च' इति ॥ यमः 'तृतीये मासि कर्तव्यमहस्सूर्यस्य दर्शनम् ॥ चतुर्थे मासि कर्तव्यमग्नेश्चन्द्रस्य दर्शनम्' इति ॥ उपनिष्क्रमणं कुर्याच्चतुर्थे मासि सावन इति च ॥ मुहूर्तसङ्ग्रहे 'चत्वार्यर्यम्णो विश्वर्क्षात्तिस्त्रोऽहिर्बुध्न्यभादपि ॥ मैत्रमादित्यपुष्यौ च रोहिणी च शुभावहाः ॥ अर्यमा=उत्तरा ॥ उत्तरादि चतुष्टयम् ॥ उत्तराषाढादि त्रयम् ॥ उत्तराभाद्रादपि त्रयम् ॥ आदित्यः पुनर्वसुः ॥ पूर्वपक्षः शुभः प्रोक्तः कृष्णे चान्त्यत्रिकं विना ॥ रिक्ता षष्ट्यष्टमी दर्शं द्वादशीश्च विवर्जयेत् ॥ वर्ज्यास्त्वशुभयोगाः स्युर्विष्टिश्च शकुनादि च ॥ झषालीमेषवर्ज्याः स्युस्तथैवाधोमुखानि च ॥ सतां च वारवर्गाश्च शुभदा उदयास्तथा ॥ चान्द्रं सर्व विवर्ज्यं स्यात् सर्वेऽङ्कस्था विनाशदाः ॥ अङ्कस्थाः=नवमस्थाः ॥' इति कालनिर्णयः ॥ छ ॥

अथ प्रयोगः ॥ प्रातः स्नानादि सर्वं पूर्ववत्कृत्वा नान्दीश्राद्धं कृत्वा, पुण्याहं वाचयेत् ॥ सविता प्रीयतामिति विशेषः ॥ अथ स्थण्डिलोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, श्रीपरमेश्वरप्रीत्यर्थं उपनिष्क्रमणहोमं करिष्ये, उपनिष्क्रमणहोमः कर्म इत्यादि, शिवो नामाऽग्निः सविता देवता चरुर्हविः इत्यादि सङ्कल्प्य, पूर्ववद्गायत्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय ॥ ॐ स्वस्ति नो मिमीताम्० ॥ अश्विभ्यां भगायाऽदित्यै पूष्णेऽसुराय द्यावापृथिवीभ्यामिदम् ॥१ ॥ ॐ स्वस्तये वायुम्० ॥ वायवे सोमाय भुवनपतये बृहस्पतय आदित्येभ्य इदम् ॥२॥ ॐ विश्वेदेवानो अद्या० ॥ विश्वेभ्यो देवेभ्यो वैश्वानराय वसवेऽग्नये देवेभ्यो ऋभुभ्यो रुद्रायेदम् ॥३॥ ॐ स्वस्ति मित्रावरुणा० ॥ मित्रावरुणाभ्यां पथ्यै रेवत्या इन्द्रायाऽग्नयेऽदित्या इदम् ॥४॥ ॐ स्वस्ति पन्थामनुचरेम० ॥ सूर्याचन्द्रमोभ्यामिदम् ॥५॥ ॐ स्वस्त्ययनं तार्क्ष्यम्० ॥ तार्क्ष्यायाऽरिष्टनेमये असुरघ्नाय इन्द्रसकायेदम् ॥६॥ ॐ अंहोमुच माङ्गिरसम्० ॥ अङ्गिरसे स्वस्त्यात्रेयाय तार्क्ष्यायेदम् ॥७॥ ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः० ॥ इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये स्वस्तये बृहस्पतय इदम् ॥८॥ इत्यष्टभिरुपहुत्य, स्विष्टकृदादिवरदानान्तं कृत्वाऽग्रेणाग्निमश्वत्थपर्णेषु व्यातिभिर्हुतशेषं निधाय, ततो मङ्गलघोषपुरस्सरं गृहाद्बहिर्देवतायतनं गत्वा, देवताः सम्पूज्य,

प्रार्थयेत् ‘चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ।। निक्षेपार्थमहं दद्मि ते मे रक्षन्तु सर्वदा ।। अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा ।। रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः’ इति प्रार्थ्य, ब्राह्मणान्त्सम्पूज्य, आशिषो वाचयित्वा, स्वगृहानागत्य, उत्तरपरिषेकादिकं कुर्यात् ।। इत्युपनिष्क्रमणप्रयोगः ।। छ ।।

अथान्नप्राशनम् ।। तच्च षष्ठेऽष्टमे दशमे द्वादशे वा मासि पुंसाम् ।। स्त्रीणां तु सप्तमे नवमे वा मासि ।। शुक्लपक्षेऽश्विनीरोहिणी-मृगशिरः-पुनर्वसु-पुष्योत्तरात्रय-हस्त-चित्रा-स्वात्यनूराधा-श्रवण-धनिष्ठा-शततारा-रेवतीषु प्रथमजन्मनक्षत्रं वर्जयित्वा, अन्यजन्मनक्षत्रद्वये छिद्रतिथीन्वर्जयित्वा, अन्यशुभतिथिषु सोम-बुध-गुरु-शुक्रवारेषु मेष-वृश्चिक-मीनवर्जितेषु राशिष्वन्नप्राशनं कुर्यात् ।। अत्र सूत्रम् ‘षष्ठे मासि अन्नप्राशनम्’ इति ।। बोधायनस्मृतौ ‘अतोऽन्नप्राशनं मासे षष्ठे कार्यं यथाविधि ।। अष्टमे वाऽपि कर्तव्यं यथेष्टं मङ्गलं कुले’ ।। शङ्खोऽपि ‘संवत्सरेऽन्नप्राशनमर्धसंवत्सरे वा जातेषु दन्तेषु’ इति ।। निर्णयसिन्धौ नारदः ‘तदभावेऽष्टमे मासि नवमे दशमेऽपि वा ।। सप्तमे मासि वा कार्यं नवान्नप्राशनं शुभम्’ इति ।। श्रीधरीये ‘व्योमेन्द्रियेन्दौ दिवसे प्रवृद्धे पश्चात् सिते बालनवान्न भुक्तिः ।। खाष्टेन्दुसङ्ख्यात्पुरतस्तु युग्मे मानेन सौरेण वदन्ति तज्ज्ञाः’ ।। जननदिनादारभ्य पञ्चाशदुत्तरशतदिने प्रवृद्धे गते सतीत्यर्थः ।। खाष्टेन्दुसङ्ख्यादिति जन्मदिवसादारभ्य अशीत्युत्तरशतदिनादर्वागित्यर्थः ।। श्रीपतिः ‘षष्ठे मासे प्राशनं दारकाणामन्यस्मिंस्तत्कन्यकानां विधेयम्’ ।। इत्यनेन पुंसां षष्ठादि युग्ममासे, कन्यकानामयुग्ममास इति ।। अत एव गर्गः ‘नरस्यान्नाशने युग्मं स्त्रीणां चान्नाशनेऽयुजम्’ इति ।। अथ नक्षत्राणि ।। श्रीधरीये ‘आदित्य-तिष्य-वसु-सौम्यकरानिलाश्वि-चित्राज-विष्णु-वरुणोत्तर-पौष्ण-मित्राः ।। बालान्नभोजनविधौ दशमे विशुद्धे छिद्रा विहाय नवमीं तिथयः शुभाः स्युः’ ।। गुरुश्च ‘पौष्णादितीन्दुहस्ताश्वित्वाष्ट्रवासववैष्णवाः ।। रोहिणीमैत्रतिष्याश्चवरुणाश्चोत्तरात्रयम् ।। श्रविष्ठाश्च शुभा ह्येते षोडशान्नाशने शिशोः’ ।। विधिरत्ने ‘अन्नप्राशनकार्ये तु जन्मभं मृत्युदं भवेत् ।। शुभं कर्मर्क्षमाधाने विवाहे चान्नभोजने ।। वारांशकाश्च गुरुशुक्रशशीन्दुजानां मेषालिमीनरहितानि शुभानि भानि ।। भुक्तौ शिशोः शुभकराः परिहृत्य सौम्यं भौमं सितं नवमनैधनसप्तमेषु ।। अर्काङ्गारकमन्दानां वाराश्चापि शुभावहाः ।। यदा वाराधिपस्तिष्ठेत्स्वोच्चमित्रग्रहे तदा ।। गुरुणा बलिना वाऽपि वीक्षिताश्च बलान्विताः ।। दशमस्थान्ग्रहान्सर्वान्वर्जयेन्मतिमान्नरः ।। अन्नप्राशनकृत्येषु मृत्युक्लेशभयावहान्’ इति ।। इति कालनिर्णयः ।।छ ।।

अथान्नप्राशनप्रयोगः ।। कर्ता प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, वैश्वदेवं नान्दीश्राद्धं पुण्याहवाचनं च कृत्वा, सविता प्रीयतामिति विशेषः ।। अथ स्थण्डिलोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थमन्नप्राशनाख्यं कर्म करिष्ये, अन्नप्राशनहोमः कर्म आघारवत्तन्त्रमित्यादि शुचिर्नामाग्निः सविता देवता चरुर्हविरग्निः स्विष्टकृदित्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, पूर्ववद्द्वयत्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय ।। ॐ अहमस्मि प्रथमजा ऋतस्य०, पूर्वमग्ने०, जहाम्यन्यम्०, पराके अन्नम्०, महान्तौ चरु०, अन्नं प्राणमन्नम्०, मोघमन्नम्, अहं मेघः० ।। सर्वत्रान्नयेदम् ।। इत्यष्टभिर्हुत्वा, स्विष्टकृदादिवरदानान्तं कृत्वा, अग्रेणाग्निमश्वत्थपर्णेषु व्याहृत्या हुतशेषं निधाय, कुमारं मातुरुत्सङ्ग

उपवेश्य, दीपद्वययुक्ते स्वर्णादिपात्रे समस्तभक्ष्यभोज्यशाकादिसंयुक्तेऽथौदनं दधिमधुघृतजलैर्मिश्रितं निधाय, कुमारं श्वेतवस्त्रैरलङ्कृत्य, हिरण्येन तदन्नं गृहीत्वा ॥ ॐ या जाता ओषधयः० ॥ ॐ भूर्भुवःसुवरपां त्वौषधीनाꣳरसमन्नं प्राशयामि ॥ शिवास्ता आप औषधयः सन्त्वनमीवास्मा आप ओषधयः सन्तु ॥ ॐ शतं वो अम्ब० ॥ ॐ भूर्भुवःसुवरपाम्० ॥ ॐ पुष्पावतीः० ॥ ॐ भूर्भुवःसुवरपाम्० ॥ ॐ ओषधीरिति मातरः० ॥ ॐ भूर्भुवःसुवरपाम्० ॥ ॐ अश्वत्थे वः० ॥ ॐ भूर्भुवःसुवरपाम्० ॥ ॐ यदहं वाजयन्निमा ओषधीः० ॥ ॐ भूर्भुवःसुवरपाम्० ॥ इति षड्भिः प्राशयित्वा, मुखं प्राक्षाल्य, तूष्णीमाचमय्य, आशिषो वाचयित्वा, उत्तरपरिषेकादिकं कुर्यात् ॥ इत्यन्नप्राशनप्रयोगः ॥छ ॥

अथ कर्णवेधनम् ॥ तच्च द्वादशे षोडशे वाऽह्नि प्रथमे षष्ठे सप्तमेऽष्टमे वा मासि संवत्सरे वा शुक्लपक्षे पूर्वाह्णे दिवैव तिथिसन्धिनक्षत्रसन्धि-छिद्रतिथि-पर्व-पापवारांश्च वर्जयित्वा, जन्ममासमेकादशीं च विहाय, मृगशिर-आर्द्रा-पुनवरसु-पुष्योत्तरात्रय-हस्त-चित्रा-श्रवण-धनिष्ठा-रेवतीषु सिंह-वृश्चिक-कुम्भराशींश्च वर्जयित्वा, अन्यराशिषु कर्णवेधनं कुर्यात् ॥ अत्र सूत्रम् 'सप्तमे मास्यष्टमे मासि वा कर्णवेधनम्' इति ॥ गर्गः 'मासे षष्ठे सप्तमे वाऽप्यष्टमे मासि वत्सरे ॥ कर्णवेधं प्रशंसन्ति पुष्ट्यायुःश्रीविवृद्धये' ॥ मदनरत्ने 'प्रथमे सप्तमे मासि अष्टमे दशमेऽथवा ॥ द्वादशे च तथा कुर्यात्कर्णवेध शुभावहम्' ॥ श्रीधरीये 'मासे षष्ठे सप्तमे वाऽष्टमे वा वेध्यौ कर्णौ द्वादशे षोडशेऽह्नि ॥ मध्ये वाऽह्नः पूर्वभागे न रात्रौ नक्षत्रे द्वे द्वे तिथी वर्जयित्वा' ॥ गुरुः 'जन्मतो दशमे वाऽह्नि द्वादशे वाऽथ षोडशे ॥ सप्तमे मासि वा कुर्यादष्टमे मासि वा पुनः' ॥ व्यासः 'यो जन्ममासे क्षुरकर्म यात्रां कर्णस्य वेधं कुरुते च मोहात् ॥ नूनं स रोगी धनपुत्रनाशनं प्राप्नोति मूढो वधबन्धनानि' ॥ गुरुः 'यस्मिन्वारे तिथी तारे द्वे द्वे युक्ते न शोभने ॥ सन्ध्ये द्वयोः पुरा पश्चाद्दिनादि शुभतारयोः ॥ पूर्वाह्णे सुप्रशस्तं स्यादपराण्हे न शोभनम्' ॥ अगस्त्यः 'द्वयोस्तु सन्ध्ययोर्लग्ने न कुर्यात्कर्णवेधनम् ॥ रात्रावपि तथा लग्ननक्षत्रतिथिसन्धिषु ॥ कर्णवेधं न कुर्वीत कुर्याच्चेच्छेदनं भवेत् ॥ श्रीधरीये 'हरिहरकरचित्रासौम्यपौष्णोत्तरार्यादितिवसुषु घटालीर्सिहवर्ज्ये विलग्ने ॥ शशिबुधगुरुकाव्यानां दिने पर्वरिक्तारहिततिथिषु शुद्धे नैधने कर्णवेधः' ॥ गुरुः 'वृषवर्ज्याः स्थिराः सर्वे न शुभा मकराजभौ ॥ मध्यमौ शेषिताः सर्वे शुभाः स्युः कर्णवेधने' इति ॥ इति कर्णवेधनकालनिर्णयः ॥ छ ॥

अथ कर्णवेधनप्रयोगः ॥ प्रातर्मङ्गलस्नानादि औपासनैकदेशाग्निं प्रतिष्ठाप्य, मम कुमारस्य

बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कर्णवेधनाख्यं कर्म करिष्ये, कर्णवेधनहोमः कर्म आघारवत्तन्त्रमित्यादि वर्द्धमानो नामाग्निः श्रोत्रं देवता चरुर्हविरित्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा पक्वात् जुहोति ॥ ओ३ श्रोत्रेण भद्रं० ... आश्रृणोमों३येन प्राच्या ... बभूव स्वाहा ॥ श्रोत्रायेदम् ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय ॥ ॐ प्राणो रक्षति० ॥ प्राणायेदम् ॥१॥ ॐ यो देवो देवेषु० ॥ प्राणायेदम् ॥२॥ ॐ मनसश्चित्तेदं ... ष्वग्निय३ स्वाहा ॥ मनस इदम् ॥३॥ ॐ आन एतु० ॥ मनस इदम् ॥४॥ ॐ जुषताम्मे वाक्० ॥ वाच इदम् ॥५॥ ॐ यया रूपाणि० ॥ वाचे देव्या इदम् ॥६॥ ॐ चक्षुर्देवाना ... द्विचक्षण३ स्वाहा ॥ चक्षुष इदम् ॥७॥ ॐ आयुरिन्नः ... मृत३ स्वाहा ॥ चक्षुष इदम् ॥८॥ ओ३ श्रोत्रेण भद्रम्० ॥ श्रोत्रायेदम् ॥९॥ ॐ येन प्राच्या० ॥ श्रोत्रायेदम् ॥१०॥ इति दशभिरुपहुत्य, स्विष्टकृदादिवरदानान्तेऽग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति 'ॐ समुद्राय वयुनाय सिन्धूनां पतये नमः ॥ नदीना३ सर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहामर्त्य३ हविः' इति ॥ अथ कर्ताऽस्य कुमारस्य कर्णवेधनकर्मणः पुण्याहं कर्मणे स्वस्ति कर्मण ऋद्धिं भवन्तो ब्रुवन्तु इत्याशिषो वाचयित्वा, शिवं कर्मास्तु श्रोत्रं प्रीयतां इति वाचयित्वा, अथ सूच्या वा सुवर्णेन कण्टकेन वा दक्षिणकर्णं तृणत्ति 'ॐ गायत्रीत्रिष्टुब्जगती' इत्यथाप उपस्पृश्य, द्विपदायेति वामकर्णं विद्ध्वा, अप उपस्पृश्य अथ लोहितसूत्रेण वा शणसूत्रेण वा बध्नाति 'वरुणस्य स्कम्भनमसि' इति ॥ परेऽहनि विसर्जयति 'वरुणस्य स्कम्भसर्जनमसि' इति ॥ अथाप उपस्पृश्य, आशिषो वाचयित्वा, उत्तरपरिषेकादिकं कुर्यात् ॥ इति कर्णवेधनप्रयोगः ॥ छ ॥

अथ नामकरणादि चतुष्टयस्य सङ्क्षेपप्रकारः ॥ गृह्यसूत्रे 'नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधादि ब्राह्मणभोजनादेवैकेषां पुण्याहवाचनादेवैकेषां प्रसिद्धे चौलौपनयने' इति ॥ अनेन तत्तत्कालकर्तव्यनामकरणादिचतुष्टयस्य आपदि ब्राह्मणभोजनेन वा केवलं पुण्याहवाचनेन वा कर्तव्यत्वं प्रतिपादितं भवति न तु समानतन्त्रेण तत्र यथाकर्तव्यत्वमेव ॥ अस्मिन्पक्षे तु पुण्याहं ब्राह्मणभोजनं वा कृत्वा, उपरिष्टात्तन्त्राणि कुर्यात् ॥ इति नामकरणादितन्त्रप्रयोगः ॥ छ ॥

अथ चौलम् ॥ तच्च जननादारभ्य संवत्सरे पूर्णे द्वितीये तृतीये तृतीयभागगते पञ्चमेऽब्दे सप्तमेऽद्वे वा कार्यम् ॥ त्रिभागगते पञ्चम इति सप्तपञ्चाशन्मासादूर्ध्वमित्यर्थः ॥

तत्राप्युत्तरायणे शुक्लपक्षे गुरुशुक्रास्तमलमासादिरहिते जन्ममासं जन्मपक्षं वा वर्जयित्वा, मकर-कुम्भ-मीन-मेष-वृषभ-मिथुनमासेषु अश्विनी-रोहिणी-मृगशिरःपुनर्वसु-पुष्योत्तरात्रय-हस्त-चित्रा-स्वाती-श्रवण-धनिष्ठा-शततारा-रेवतीषु-वृषभ-मिथुन-कर्कटक-कन्या-तुला-मीनलग्नेषु अष्टमे नवमे च शुद्धे सप्तमे शुक्रपापग्रहरहितेऽष्टमस्थिते शुक्रे चौलं कुर्यात्॥ अत्र सूत्रम् 'संवत्सरे चौलकर्म त्रिषु वा संवत्सरेषु' इति॥ स्मृतिरपि 'ततः संवत्सरे पूर्णे चूडाकर्म विधीयते॥ द्वितीये वा तृतीये वा कर्तव्यं श्रुतिचोदनात्'॥ पारिजाते 'जाताधिकाराज्जन्मादितृतीयेऽद्वे तु चौलकम्॥ आद्येऽद्वे कुर्वते केचित्पञ्चमेऽद्वे द्वितीयके॥ उपनीत्या सहैवेति विकल्पाः कुलधर्मतः'॥ बृहस्पतिः 'द्वितीयेऽब्दे शिशोर्गर्भजन्मतो वा विशेषतः॥ पञ्चमे सप्तमे वाऽपि स्त्रियाः पुसोऽपि वा सम' इति॥ नारदः 'जन्मतस्तु तृतीयेऽब्दे श्रेष्ठमिच्छन्ति पण्डिताः॥ पञ्चमे सप्तमे वाऽपि जन्मतो मध्यमं भवेत्॥ अधमो गर्भतः स्यात्तु नवमैकादशेऽपि वा'॥ श्रीधरीये 'वर्षे तृतीयेऽप्यथ पञ्चमेऽब्दे गतत्रिभागे प्रवदन्ति चौलम्॥ उदग्गतेऽर्के गुरुशुक्रतेजःप्रकाशिते व्योम्नि च शुक्लपक्षे'॥ काश्यपः 'जन्मर्क्षाणां चतुर्विंशात्परतश्चौलमाचरेत्॥ अथवा पञ्चमे वर्षे सावनेनैव योजयेत्॥ गतत्रिभागे पञ्चम इति मतान्तरमुच्यते॥ तथा च नृसिंहः 'तृतीये पञ्चमे वर्षे गते भागे तृतीयके॥ आदौ चौल प्रकर्तव्यमिति केचित्प्रचक्षत' इति॥ देवरातः 'उत्तर देवभागः स्याद्दक्षिणं याम्यमुच्यते॥ देवभागं गते सुर्ये चूडाकर्म समाचरेत्॥ अयने चोत्तरे सौम्यं दक्षिणे त्वशुभावहम्'॥ ज्योतिरर्णवे 'मकरे सर्वसम्पत्तिः कुम्भे सन्तानवर्धनम्॥ मीनमासे सदा सौख्यं मेषे सर्वार्थसाधनम्॥ विजय वृषभे विद्यान्मिथुने वंशवृद्धिकृत्॥ कर्कटे बहुरोगी स्यात्सिंहे नष्टप्रजो भवेत्॥ षष्ठे कुलक्षयं विद्यात्तुलायां देहनासनम्॥ वृश्चिके बन्धुनाशः स्याद्वित्तनाशस्तु कार्मुक' इति॥ बृहस्पतिः 'उत्तरायणगे सूर्ये विशेषात्सौम्यगोलके॥ अधिमासस्तु निन्द्यः स्यात्संसर्पाहस्पती तथा॥ गुरुशुक्रौ न दृश्येते यदाऽतिस्फुटमम्बरे॥ बालवृद्धाह्वयः कालश्चौले निन्द्यस्तयोर्द्वयोः'॥ सङ्ग्रहे 'स्वजन्ममासे बालानां चौलमायुः क्षयावहम्॥ तत्रापि केचित्कुर्वन्ति सहोपनयनेन तत्'॥ व्यासश्च 'यो जन्ममासे क्षुरकर्मयात्राम्' इति कर्णवेधप्रकरण उक्तम्॥ अथ जन्ममासलक्षणम् 'आरभ्य जन्मदिवसाद्यावत्रिंशद्दिनं भवेत्॥ जन्ममासः स विज्ञेयः सर्वकर्मबहिष्कृतः॥ जन्ममासं तथा जन्मदिनं जन्मद्वयं तथा॥ हूणे वङ्गे त्यजेत्सर्वमन्यदेशे शुभावहम्॥ अन्नप्राशनमुद्वाहश्चौलकर्मोपनायनम्॥ जन्ममासेषु वर्ज्यं स्यात्कलिङ्गे मगधे तथा'॥ गुरुः 'शुक्लपक्षे शुभं प्रोक्तं कृष्णक्षे शुभेतरत्॥ अशुभोऽन्त्यत्रिभागः स्यात्कृष्णपक्षे त्रिधा कृते'॥ अथ नक्षत्राणि 'आदित्यसौम्यवसुवैष्णवपौष्णतिष्यत्वाष्ट्राश्विचण्डकिरणेषु दिवा प्रशस्तम्॥ स्वातीविधातृवरुणोत्तरभानि मध्यान्याहुर्निशास्वथ न च क्षुरकर्म कार्यम्॥ सम्पदि क्षेमभे मैत्रे साधके भेऽतिमित्रभे॥ चौलकर्म प्रशस्तं स्याच्छोभनाशं गते विधौ॥ अद्यंशो विपदि त्याज्यः प्रत्यरे चरमोऽशुभः॥ वधे त्याज्यस्तृतीयांशः शेषांशा अपि शोभनाः'॥ अर्णवे 'जन्मत्रये वाऽर्किदिवाकरारवारेऽधिमासे सितजीवमौढ्ये॥ पक्षद्वये पर्वनिशादिनान्ते क्षौरं यदि स्यात्कुलनाशहेतुः॥ षष्ठ्यष्टमी प्रतिपदस्तिथयश्च रिक्ता वर्ज्या, शशाङ्कगुरुसोमजभार्गवानाम्॥ वारांशकोदयविलोकनमिष्टमाहुः क्षौरे च कर्मणि न शोकमुशन्ति शावे॥ द्वित्रिपञ्चमसप्तम्यामेकादश्यां तथैव च॥ दशम्यां च त्रयोदश्यां कार्यं क्षौरं विजानता'॥ गुरुः 'पापग्रहाणां वारांशा निन्दिताः शुभकर्मणि॥ शुभग्रहाणां वारा ये पूजिता ब्रह्मणो मतम्॥ सोमवारे सिते पक्षे, कृष्णपक्षेऽतिगर्हितः॥ बुधवारे शुभः प्रोक्तः पापग्रहयुते बुधे॥ पापग्रहणां वारांशा विप्राणां तु शुभो रवेः॥ क्षत्रियाणां क्षमासूनोर्विट्शूद्राणां शनिः शुभः'॥ माधवीये 'कर्क्यङ्गनामिथुनमीनतुलोक्षनक्राः पूज्याः क्रियालिहरिचापधरा जघन्याः॥ तेऽपि स्ववीर्युशुभदृष्टियुता विधेयाश्चौले घटः शुभयुतोऽपि निषिद्ध एव'॥ उक्षा=वृषभः, क्रियो=मेषः॥ वसिष्ठः 'वृषभश्च कुलीरश्च यमकन्यातुलाधराः॥ मकरश्चैव मीनश्च क्षुरकर्मणि पूजिताः'॥ गुरुः 'अष्टमस्था ग्रहाः सर्वे नेष्टाः शुक्रविवर्जिताः॥ शुक्रस्तु निधने क्षौरे सर्वसम्पत्प्रदः शिशोः'॥

बृहस्पतिः 'लग्नादष्टमराशीशः केन्द्रगः शुभवीक्षितः ।। यद्यप्यष्टमगस्योक्तं दोषमाशु व्यपोहति ।। रन्ध्रेशः स्वांशगः स्वोच्चस्वक्षेत्रोपचयर्क्षगः ।। अष्टमस्थस्य दोषोऽयं विनश्यति न संशयः' ।। नारदः 'लग्नाष्टमेशयोर्मैत्र्ये लग्नेशे बलसंयुते ।। अस्तगे निधनांशे वा निधनेऽपि शुभो ग्रहः' ।। वसिष्ठः 'जामित्रे भास्करे क्षौरे मृत्युः स्यद्भूमिजे तथा ।। शुक्रे सौम्ये विनाशः स्यान्मन्दभाग्यं शनैश्चरे ।। त्रिषडायगताः पापाः क्षुरकर्मणि पूजिताः ।। शेषेषु निन्दिताः प्रोक्ताः स्वोच्चस्वर्क्षबलादृते' इति ।। एतच्च शिशोर्मातरिगर्भिण्यां न कार्यम् ।। तथा च ज्योतिर्निबन्धे मदनरत्ने बृहद्गर्गः 'पुत्रचूडाकृतौ माता यदि वा गर्भिणी भवेत् ।। शस्त्रेण मृत्युमाप्नोति तस्मात्क्षौरं विवर्जयेत्' ।। नारदस्तुः 'सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत् ।। पञ्चाब्जात्प्राग्गतोर्ध्वं तु गर्भिण्यामपि कारयेत्' ।। निर्णयसिन्धौ गार्ग्यः 'पञ्चममासादूर्ध्वं मातुर्गर्भस्य जायते मृत्युः' इति ।। बृहस्पतिः 'गर्भे मातुः कुमारस्य नकुर्याच्चौलकर्म तु ।। पञ्चमासादधः कुर्यादत ऊर्ध्व न कारयेत्' इति ।। इति चौलकालनिर्णयः ।।छ।।

अथ चौलप्रयोगः ।। प्रार्तङ्गलस्नानादि नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, पूर्वेद्युः सद्यो वा नान्दीश्राद्धं कृत्वा, उदकशान्तिप्रतिसरबन्धौ कृत्वा, पवनादिकं कृत्वा, केशिनः प्रीयन्तामिति पुण्याहं वाचयित्वा, पुनः प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं चौलाख्यं कर्म करिष्ये' इति सङ्कल्प्य, स्थण्डिलोल्लेखनाद्यौपासनैकदेशाग्निं प्रतिष्ठाप्य, चौलहोमः कर्म आघारवत्तन्त्रमित्यादि सद्भ्यो नामाऽग्निः केशिनो देवताः चरुर्हविः अग्निः स्विष्टकृदित्यादि सङ्कल्प्य, पात्रासादनकाले प्राकृतपात्रैः सह क्षुरं दर्भान् शीतोदकमुष्णोदकं चसाद्य, प्रोक्षिण्यादिसंस्कृत्य, केशिभ्यो जुष्टं निर्वपामीति चरुं निरूप्य, अग्निमुखान्तं कृत्वा, पक्वज्जुहोति ।। ॐ ये केशिनः... स॒सृजाथों३नर्तेब्रह्मणः..... वपनस्य नान्यः स्वाहा ।। केशिभ्य इदम् ।। स्विष्टकृतमवदायान्तःपरिधौ निधाय ।। ॐ आरोहप्रोष्ठम्० ।। वशिन्या उग्राया इदम् ।।१।। ॐ येनावपत्सविता० ।। सवित्रे सोमाय राज्ञे वरुणाय ब्रह्मण इदम् ।।२।। ॐ मा ते केशा० ।। धात्र इन्द्राय बृहस्पतये सवित्र इदम् ।।३।। ॐ तेभ्यो निधानम्० ।। द्यावापृथिवीभ्यामिदम् ।।४।। ॐ बलं ते० ।। सवित्रे सोमायाश्विभ्यामिदम् ।।५।। ॐ यत्सीमन्तम्० ।। अश्विभ्यामिदम् ।।६।। इति षड्भिः उपहुत्य, स्विष्टकृदादिवरदानान्तं कृत्वा, अग्रेणाग्निमौदुम्बरपर्णेषु हुतशेषं निदधाति 'ॐ न॒मो हिर॑ण्यबाहवे सेना॒न्ये॑ दि॒शां च॒ पत॑ये॒ नम॑ः' इत्यथापरेणाग्निमुष्णास्वप्सु शीता आनयति 'ॐ उ॒ष्णेन॑ वायवु॒दकेनेह्यदि॑ति॒ः केश॑ान्वप तु इति ।। स्वयं प्राङ्मुख उपविश्य, शिशुं प्रत्यङ्मुखमुपवेश्य, ताभिरद्भिरस्य शिशोः

शिर आर्द्रीकरोति 'ॐ आप उन्दन्तु ... वर्चसे' इति ॥ अथोर्ध्वाग्रान्दर्भान् केशेषु निदधाति 'ॐ ओषधे त्रायस्वैनम्' इति ॥ नान्केशान्दर्भैः सह वामहस्ते गृहीत्वा, दक्षिणेन क्षुरं गृहीत्वा अभिमन्त्रयते 'ॐज्योक्च सूर्य दृशे' इति ॥ अथैनं स्वधितिं वामहस्तगृहीतेषु केशेषु निदधाति 'ॐ स्वधिते मैनꣳहिꣳसीः' इति ॥ अथ दर्भैः सह तान्केशाश्छित्ति 'ॐ येनावपत्सविता क्षुरेण' इत्यथाप उपस्पृश्य प्रवपत इतरान्केशाननुमन्त्रयते 'ॐ मा ते केशान्' इति ॥ अथ नापितेनोप्तान्त्सर्वान्केशानेकीकृत्य दर्भस्तम्बे निदधाति 'ॐ तेभ्यो निधानं बहुधा व्यैच्छन्' इत्यथैनमुष्णोदकेन प्लावयति 'ॐ बल ते बाहुवोः' इति ॥ 'अथैकशिखस्त्रिशिखः पञ्चशिखो वा यथैवैषां कुलधर्मः स्याद्यथाऋषिशिखानि दधातीत्येके' इति सूत्रम् ॥ स्वस्वगोत्रे यावन्तः प्रवरा ऋषयः तावत्यः शिखा इत्यर्थः ॥ ततो मङ्गलतूर्यघोषैः सहोष्णोदकेन स्नाप्य, आच्छाद्यालङ्कृत्य, ब्राह्मणान्फलताम्बूलादिना सन्तोष्य, अस्य चौलकर्मणः पुण्याहं स्वस्ति ऋद्धिं भवन्तो ब्रुवन्त्विति वाचयित्वा, शिवं कर्मास्तु केशिनः प्रीयन्तामित्युक्त्वा, उत्तरपरिषेकादिकं कुर्यात् ॥ इति चौलप्रयोगः ॥ छ ॥ अत्रैकदेशाग्निविषये विशेष उक्तो विष्णुभट्टेन 'तत्रौपासनवतः सर्वेषु गृह्यकर्मसु गर्भाधानादिजातकर्मान्तेषु संस्कारकर्मसु स एवौपासनाग्निः समस्तो भवति ॥ स्थण्डिलोक्तनियमोऽपि तस्यैवाग्नेः, इतरस्य लौकिकोग्निः, बहुकर्तृकेऽपि कर्मणि स एवाग्निः ॥ समस्तौपासनाग्नौ ब्रह्मौदनपाके पुनस्त्वादित्यमन्त्रेण लौकिकाग्नौ प्रतिकर्म हुत्वा, तत्र ग्रह्यणि कर्माणि वैश्वदेवादीनि कृत्वा तमुत्सृजेत्, अपवृत्ते कर्मणि लौकिकः सम्पद्यत इति न्यायात् ॥ एवमुत्पादितोऽग्निः प्रजासंस्कारेषु समस्तो ग्राह्यः, न त्वेकदेशः ॥ अथ चेदौपासनं विभज्य ब्रह्मौदनस्य पाकस्तदाऽर्धान्तरं पितुरौपासनं विद्यत एव, तस्मिन्नौपासनाग्नौ गृह्याणि कर्माणि क्रियन्त इत्युक्तमेव' इति ॥ छ ॥

अथ यमलजनने तत्र ज्येष्ठकनिष्ठविभाग उच्यते ॥ निर्णयसिन्धौ ॥ मनुः 'जन्मज्येष्ठस्य चाह्वानं सुब्रह्मण्यास्वपि

स्मृतम् ।। यमयोश्चैव गर्भेषु जन्मतो ज्यैष्ठता स्मृता' ।। देवलोऽपि 'यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम् ।। सन्तानपितरश्चैव तस्मिन् ज्यैष्ठ्यं प्रतिष्ठितम्' इति ।। भागवते तु 'द्वौ तदा भवतो गर्भौ सूतिर्वेशविपर्ययात्' इति पश्चादुत्पन्नस्य ज्यैष्ठ्यमुक्तम् ।। अत्र शिष्टाचारव्यवस्था ज्ञेया ।। अथ गोस्त्रियोर्यमलजनने प्रायश्चित्तमुक्तं गृह्यसूत्रे प्रयाश्चित्तप्रश्ने 'अथ गोस्त्रियोर्यमलजन्मन्युल्लेखनाद्याज्यसंस्कारान्तं कृत्वा, चतस्रो व्याहृतीः, पाहिनो अग्न इति पञ्च, पुनः व्याहृतिचतुष्टयमिति पाहित्रयोदशाहुतीर्जुहुयात्' इति ।। अथ यमलसंस्कारः ।। निर्णयसिन्धौ 'एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।। क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च' ।। ज्योतिर्विधिरत्ने 'एकस्मिन्वासरे प्राप्ते कुर्याद्यमलजातयोः ।। क्षौरं चैव विवाहं च मौञ्जीबन्धनमेव च' इति ।। भट्टकारिकायाम् 'एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।। कर्तव्यं मङ्गल स्वस्रोर्भ्रात्रोर्यमलजातयोः' ।। आश्वलायनस्मृतौ 'पिता त्वहनि चैकस्मिन्नेकस्या सहजातयोः ।। करोति जातकर्माणि पृथक् स्नात्वा यथाविधि ।। बहुभार्यासु चैकस्मिन्बहुपुत्रेषु वासरे ।। जातेष्वेकः पिता कुर्याज्जातकर्माणि च द्वयोः' इति ।। इति यमलसंस्कारनिर्णयः ।। छ ।। अथ यमलजातयोः समानतन्त्रप्रयोगः ।। कर्ता स्नात्वाऽऽचम्यालङ्कृत्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'अनयोर्यमलजातयोः कुमारयोः बीजगर्भसमुद्भवैनो-निबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं जातकर्म करिष्ये' इति सङ्कल्प्य, अनयोर्यमलजातयोर्जात-कर्माङ्गतया विहितं नान्दीसमाराधनं हिरण्येन करिष्ये, पुण्याहं वाचयिष्ये, इति सङ्कल्पे विशेषः ।। एवं नान्दी पुण्याहं च कृत्वा, अद्भ्यःसम्भूत इत्यनुवाकं पृथक्पृथगुक्त्वा, पृथक्पृथग्जपित्वा, पृथक्संस्कृत्य, प्राणोरक्षतीति पृथग्जपित्वा, सीदत्व मातुरस्याः० - हꣳसः शुचिषत्० इति पृथग्जपित्वा, पृथगेव मातुरुपस्थ आधाय, यस्ते स्तन इति सकृज्जपित्वा, स्तनमभिमत्र्य, द्यौस्ते पृष्ठमिति द्विर्जपित्वा, स्तनं पृथक्प्राशयित्वा, आपस्सुप्तेष्वित्युदकुम्भनिधानं सकृत्, सकृदेव होमः ।। एवमेव नामकरणादि चौलान्तेषु सकृदेव नान्दीपुण्याहहोमहुतशेषादयः ।। नामकरणे कुलदेवतादिनामचतुष्टयं पृथङ्निर्देश्यम् ।। अन्नप्राशनेऽपि याजाता इत्यादि पृथक्प्राशनं च ।। कर्णवेधे गायत्रीत्रिष्टुबित्यादि पृथक् ।। चौलेऽपि

उष्णेनवायउदकेनेत्यादि पृथगेव कुर्यात् ।। यद्येकः पुमानेका स्त्री चेत्तदा अनयोः कुमारयोरित्येवं सङ्कल्पः ।। पुरुषस्योक्तप्रकारेण संस्कारः समन्त्रकः, स्त्रियास्त्वमन्त्रक एव ।। उभे यदि कन्ये - अनयोः कुमार्योरिति सङ्कल्पः, तूष्णीमेव संस्कारः ।। उपनयने तु पृथङ्मन्त्रं वाचयित्वा, उपवीतधारणम् ।। होमोऽपि पृथक् ।। आयुर्दा अग्न इत्यादि सर्वं पृथक्पृथग्वाचयित्वा, पृथगेव होमवस्त्रदण्डादिधारणं कारयित्वा, गायत्र्युपदेशोपस्थाननामग्रहादि सर्वं पृथगेव कुर्यात् ।। गर्भाधानादिविष्णुबल्यन्तेषु होमादिकं सर्वं जननान्तरमपि सकृदेव ।। यमलजननशान्तिस्तु शौनकीये पारिजातादौ द्रष्टव्या ।। इति वेङ्कटेशकृतौ प्रयोगमालायां गर्भाधानादिचौलान्तानां भिन्नतन्त्रप्रयोगः समाप्तः ।। छ ।।

अथ तेषां समानतन्त्रनिर्णयः ।। यदि नामकरण द्वादशाहाद्युक्तदिने करोति, तस्मिन्नेव दिने उपनिष्क्रमणान्नप्राशनकर्णवेधनान्यपि अपकृष्य कर्तव्यानीत्युक्तम् ।। तथा च पुराणे 'द्वादशेऽहनि राजेंद्र शिशोर्निष्क्रमण गृहात्' इति ।। 'द्वादशेऽहनि राजेन्द्र यथेष्टं मङ्गलं कुले' इति वचनाच्च ।। मङ्गलं=अन्नप्राशनम् ।। निष्क्रमणं द्वादशेऽहनि तृतीये वा मासि चतुर्थे वा कुर्यादिति स्मृत्यर्थसारोक्तेः ।। वेध्यौ कर्णौ द्वादशे षोडशेऽह्नीति मदनरत्ने वसिष्ठश्रीधरवचनाच्च ।। इत्यादिवचनपर्यालोचनया द्वादशेऽहनि नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधानामपि विहितत्वादन्नप्राशनस्य तदन्तर्वर्तित्वान्नामकरणदिनेऽप्यपकृष्य कर्तव्यानि ।। एतदपि तत्तन्मुख्यकाले कर्तुमशक्तपरमिति ज्ञेयम् ।। अथ यदि द्वादशादिदिने कर्णवेधान्तानि नामकरणेन सह करोति, अथवा अतीतवशात्समानतन्त्रेण करोति, तत्प्रयोगप्रचारार्थं समानतन्त्रप्रयोगो लिख्यते ।। अथ गर्भाधानादिकर्मणामेकैकस्य द्वयोः त्र्यादीनां वा प्रमादादिना लोपे उत्तरोत्तरकर्मकाले लुप्तकर्मणां कालातिक्रमप्रायश्चित्तं कृत्वोत्तरेण सह समानतन्त्रेण कार्याणि ।। सर्वेषां लोपे तूपनयनकाले प्रायश्चित्तपूर्वकं कर्तव्यानि ।। पूर्वाकरणे ह्युत्तरस्मिंन् अधिकाराभावात् ।। उत्तरस्य प्राप्तकालत्वेन पूर्वेषां तत्कालकर्तव्यताया अर्थसिद्धत्वात् ।। तदुक्तं त्रिकाण्डमण्डनेन 'कालातीतेषु कार्येषु प्राप्तवत्स्वपरेषु च ।। कालातीतानि कृत्वैव विदध्यादुत्तराणि तु' ।। एतदभिप्रायेणैव पुंसवनानुवृत्तौ जातूकर्ण्यः 'व्यक्ते गर्भे भवेत्कार्यं सीमन्तेन सहाथवा' इति ।। जन्मनोऽनन्तरमित्युदाहृतबीजवापवचनमप्येतदभिप्रायम् ।। मदनरत्ने ''अन्नप्राशनकाले वा कुर्यान्निष्क्रमणक्रियाम्' इति ।। मनुः 'जातकर्मादिसंस्काराः स्वकाले न भवन्ति चेत् ।। चौलादर्वाक्प्रकुर्वीत प्रायश्चित्तादनन्तरम्' ।। गृह्यसूत्रे 'अथर्तुसंवेशनादि जन्मप्रभृति वा कुमारः क्रियाभिर्लुप्तः स्यादुपनयनं चैकं स्यात्' इति ।। उपनयनं लुप्तगर्भाधानं चैककालकर्तव्यत्वादेकं स्यात्, एकप्रयोगापन्नं स्यादित्यर्थः ।। एतेषामुपनयनकालेऽनुष्ठाने पक्षद्वयं फलितम् ।। कालकर्तैक्येऽपि वचनात्पृथक्पृथक्स्थण्डिलानि कृत्वा, दशसंस्काराः कालातिपत्तिप्रायश्चित्तपूर्वकं पृथक्पृथक्प्रयोक्ताव्या इत्येकः पक्षः ।। अथवैकस्मिन्नेव स्थण्डिले कालातिपत्तिप्रायश्चित्तपूर्वकं प्रधानादौ प्रधानादौ व्याहृतिपूर्वकं द्वे द्वे मिन्दाहुती हुत्वा, तन्त्रेणैव कार्या इत्यपरः ।। अत्र गृह्यसूत्रम् 'तासां पृथक्पृथक् क्रियाणां करणं न चैकहोमे सर्वाणि कर्माण्युपपातयेद्यद्येकहोमे सर्वाणि कर्माण्युपपातयेत्प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयान्मिदाहुती हुत्वा, जयाभ्यातान्रुद्राहुत्यन्तं चेति विज्ञायते'

इति ॥ कालातिपन्नप्रायश्चित्तपूर्वकं समानतन्त्रमुक्तं प्रायश्चित्तप्रश्ने 'ततम्मआपो यत्पाकत्रा मनस्वतीः मिन्दाहुती महाव्याहृतीर्व्याहृतीश्च प्रायश्चित्तं जुहुयात् ॥ कालातिक्रमे प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती जुहुयाद्व्याहृतिपूर्वकं च' इति ॥ कल्पसारकारिकायामपि 'यदि पुंसवनादीनि न कृतान्युपनायनात् ॥ तत्तत्संस्कारयेत्तत्र प्रायश्चित्ताहुतिस्त्वियम् ॥ पृथक्तन्त्रास्तु संस्काराः तन्त्रैक्ये जुहुयादिमाः ॥ जयाभ्यातानहोमांश्च रुद्राहुत्यन्तकाश्च ते ॥ ततम्मआप इत्येका यत्पाकत्रा मनस्वती ॥ महाव्याहृतयश्चेति कालातिक्रम उच्यते ॥ प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती स्मृते ॥ व्याहृत्याहुतिपूर्वंचेत्तत्रैतानि तु तन्त्रतः' इति ॥ विष्णुभट्टोऽपि 'अथ यदि समानतन्त्राणि कालातिक्रमप्रायश्चित्तं हुत्वाऽनन्तरं प्रधानमुपहोमं च कृत्वा, पुनरप्यतिपातप्रधानमुपहोम' इति ॥ कुमारस्वामिकारिकायाम् 'मखान्ते जुहुयादाज्यं स्रुवेणैवाहुतीरिमाः ॥ जयाभ्यातानमन्त्रैस्तु रुद्राहुत्यन्तकैः स्मृताः' ॥ ततम्म आपो यत्पाकत्रा मनसोज्योतिरेव च ॥ महाव्याहृतयश्चेति कालातिक्रम ईरिताः ॥ हुत्वा पृथक्पृथक्पादमर्धं चौले समाचरेत्' इति कात्यायनवचनात् ॥ पादं=पादकृच्छ्रं ॥ अर्धमर्धकृच्छ्रमित्यर्थः ॥ केचित्तु 'प्रायश्चित्ते कृते पश्चादतीतमपि कर्म वै ॥ कार्यमित्येक आचार्या नेत्यन्ये तु विपश्चित' इति ॥ अनेन प्रायश्चित्तहोमे कृते लुप्तं कर्म कृताकृतमित्याहुः ॥ तत्तुच्छम् ॥ 'लुप्तकर्मणि सर्वत्र प्रायश्चितं समाचरेत् ॥ प्रायश्चित्ते कृते पश्चाल्लुप्तं कर्म समाचरेत्' इति कात्यायनवचनात्प्रायश्चित्तहोमे कृच्छ्रे च कृतेऽपि लुप्तानां कर्मणां पुनः करणत्वं युक्त, अकरणे बहुवचनविरोधः ॥ इति समानतन्त्रनिर्णयः ॥ छ ॥

अथ गर्भाधानादिसमानतन्त्रप्रयोगः ॥ गर्भाधानाद्यतीतानुसारेण उत्तरत्र तत्तदुक्तकाले क्रियमाणकर्मणा सह कालातिपत्तिप्रायश्चित्तपूर्वकं गर्भाधानादि वा जातकर्मादि वा कुर्यात् ॥ अथवा यद्युक्तद्वादशाहादौ नामकर्मणदिने अतिक्रान्तगर्भाधानादिकं कर्णवेधनान्तं च कर्म अपकृष्य करोति, तदा गर्भाधानादिजातकर्मान्तकर्मणां मुख्यकालातिपत्तिप्रायश्चित्तं कृत्वा, तत्तत्प्रधानहोमानुपहोमाश्च हुत्वा, नामकरणादिकं कुर्यात् ॥ एव निष्कमणादावपि ज्ञेयम् ॥ सर्वेषु लुप्तेषु चौलकाले वा उपनयनकाले वा प्रायश्चित्तपूर्वकं तत्सर्वं कुर्यात् ॥ यथा ॥ पूर्वेद्युर्नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, गणपतिं सम्पूज्य, नान्दीसमाराधनं कर्तुं पुण्याहवाचनं करिष्य इति सङ्कल्प्य तत्कृत्वा, पुनः प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य श्वः करिष्यमाणगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्न-प्राशनकर्णवेधनचौलकर्मणां अङ्गत्वेन विहितं नान्दीसमाराधनं हिरण्येन करिष्ये' इति सङ्कल्प्य, तत्कृत्वा, तस्यामेव रात्रावुदकशान्तिप्रतिसरबन्धौ च कृत्वा, परेद्युः प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि च कृत्वा, गणपतिं सम्पूज्य, वेधाः प्रजापतिर्धाता सविता मृत्युस्सविता सविता सविता श्रोत्रं केशिनः प्रीयन्तामिति पुण्याहं वाचयित्वा, प्रधानसङ्कल्पं कृत्वा, तत्तत्कर्म कुर्यात् ॥ पूर्वेद्युरसम्भवे सद्यो वा प्रातर्मङ्गलस्नानादि वैश्वदेवनान्द्युदकशान्तिप्रतिसरबन्धांश्च कृत्वा, पुनः स्नानपवनादिकं कृत्वा, प्रधानकर्म कुर्यात् ॥ यथा ॥ कर्ता

पत्नीपुत्रसहितः प्रातर्मङ्गलस्नानादिवैश्वदेवान्तं नित्यकर्म कृत्वा, प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य अद्य करिष्यमाणगर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्म कर्तुं शरीरशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये' इति सङ्कल्प्य, तत्कृत्वा, गणपतिं सम्पूज्य, नान्दीसमाराधनकर्मणः पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा, नान्दीमुखाः पितरः प्रीयन्तामिति वाचयित्वा, पुनः प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य करिष्यमाणगर्भाधान ... चौलकर्मणामङ्गत्वेन विहितं नान्दीसमाराधनं हिरण्येन करिष्ये' इति सङ्कल्प्य, तत्कृत्वा, पुनराचमनप्राणायामादिकं कृत्वा, 'मम कुमारस्य अद्य करिष्यमाणगर्भाधान ... चौलकर्म कर्तुं पुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, 'मम कुमारस्य अद्य करिष्यमाणगर्भाधानपुंसवनसीमन्त-विष्णुबलिजातकर्म नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्मणां पुण्याहं भवन्तो ब्रुवन्तु ॥ कर्मभ्यः स्वस्ति भवन्तो ब्रुवन्तु ॥ कर्मणां ऋद्धिं भवन्तो ब्रुवन्तु ॥ वेधाः प्रजापतिर्धाता सविता मृत्युस्सविता सविता सविता श्रोतं केशिनः प्रीयन्ताम्' इति वाचयित्वा, प्रोक्षणान्तं कृत्वा, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरं आयुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्म-नामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्माणि समानतन्त्रेण करिष्ये' इति सङ्कल्प्य, जातकर्मतन्त्रं कुर्यात् ॥ यथा ॥ कुमारं स्पृष्ट्वा पश्यन्जपति ॥ 'ॐ अद्भ्यः सम्भूतः पृथिव्यै रसाच्च ॥ विश्वकर्मणः समवर्तताधि ॥ तस्य त्वष्टा विदधद्रूपमेति ॥ तत्पुरुषस्य विश्वमाजानमग्रे ॥ वेदाहमेतं पुरुषं महान्तम् ॥ आदित्यवर्णं तमसः परस्तात् ॥ तमेवं विद्वानमृत इह भवति ॥ नान्यः पन्था विद्यतेऽयनाय ॥ प्रजापतिश्चरति गर्भे अन्तः ॥ अजायमानो बहुधा विजायते ॥

तस्य धीराः परिजानन्ति योनिम् ।। मरीचीनां पदमिच्छन्ति वेधसः ।। यो देवेभ्य आतपति ।। यो देवानां पुरोहितः ।। पूर्वो यो देवेभ्यो जातः ।। नमो रुचाय ब्राह्मये ।। रुचं ब्राह्मं जनयन्तः ।। देवा अग्रे तदब्रुवन् ।। यस्त्वैवं ब्राह्मणो विद्यात् ।। तस्य देवा असन्वशे ।। ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ।। अहोरात्रे पार्श्वे ।। नक्षत्राणि रूपम् ।। अश्विनौ व्यात्तम् ।। इष्टं मनिषाण ।। अमुं मनिषाण ।। सर्वं मनिषाण ।।' इत्येतेनाभिमन्त्र्य ।। अथ कुमारं स्नापयति ।। 'ॐ क्षेत्रियै त्वा निर्ऋत्यै त्वा ।। द्रुहो मुञ्चामि वरुणस्य पाशात् ।। अनागसं ब्रह्मणे त्वा करोमि ।। शिवे ते द्यावापृथिवी उभे इमे ।।१।। ॐ शं ते अग्निस्सहाद्भिरस्तु ।। शं द्यावापृथिवी सहौषधीभिः ।। शमन्तरिक्षꣳसह वातेन ते ।। शं ते चतस्रः प्रदिशो भवन्तु ।।२।। ॐ या दैवीश्चतस्रः प्रदिशः ।। वातपत्नीरभिसूर्यो विचष्टे ।। तासां त्वा जरस आदधामि ।। प्रयक्ष्म एतु निर्ऋतिं पराचैः ।।३।। ॐ अमोचि यक्ष्माद्दुरितादवर्त्यै ।। द्रुहः पाशान्निर्ऋत्यै चोदमोचि ।। अहा अवर्तिमविदत्स्योनम् ।। अप्यभूद्भद्रे सुकृतस्य लोके ।।४।। ॐ सूर्यमृतं तमसो ग्राह्या यत् ।। देवा अमुञ्चन्नसृजन्व्येनसः ।। एवमहमिमं क्षेत्रियाज्जामि शꣳसात् ।। द्रुहो मुञ्चामि वरुणस्य पाशात् ।।५।। ॐ बृहस्पते युवमिन्द्रश्च वस्वः ।। दिव्यस्येशाथे उत पार्थिवस्य ।। धत्तꣳरयिꣳस्तुवते कीरये चित् ।। यूयं पात स्वस्तिभिस्सदा नः ।।६।।' इति षड्भिः स्तापयित्वा ।। अथ कुमारं स्वाङ्क उपवेशयति 'ॐ अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे ।। आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति ।। अथ कुमारं मूर्ध्न्यभिजिघ्रति 'ॐ अश्मा भव परशुर्भव हिरण्यमस्तृतं भव ।। पशूनां त्वा हिङ्कारेण ब्रह्मणाऽभिजिघ्रामि आश्विन, आपभरण, कार्तिक, रौहिण, मार्गशीर्ष, आर्द्रक, पुनर्वसो, तिष्य, आश्लेष, माघ, पूर्वाफल्गुन, उत्तराफल्गुन, हस्त, चैत्र, स्वाते, विशाख,

अनूराध, ज्येष्ठ, मूलक, पूर्वाषाढ, उत्तराषाढ, श्रावण, श्रविष्ठ, शातभिषज, पूर्वाप्रोष्ठपद, उत्तराप्रोष्ठपद, रैवत' इत्यसौ पदस्थाने नक्षत्रनाम सम्बुद्ध्यन्तमुक्त्वा ।। अथ कुमारस्य दक्षिणे कर्णे जपति 'ॐ अग्निरायुष्मान्त्स वनस्पतिभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ।। ॐ सोम आयुष्मान्त्स ओषधीभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ।। ॐ यज्ञ आयुष्मान्त्स दक्षिणाभिरायुष्मान्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ।। ॐ ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्मत्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि ।। ॐ देवा आयुष्मन्तस्तेऽमृतेनायुष्मन्तस्तेन त्वाऽऽयुषाऽऽयुष्मन्तं करोमि' ।। अथ वामकर्णे जपति 'ॐ आयुष्टे विश्वतो दधदयमग्निर्वरेण्यः ।। पुनस्ते प्राण आयाति परायक्ष्म्ꣳसुवामि ते' इति ।। अथ दधिमधुघृतमिति समुदायुत्य हिरण्येन कुमारं प्राशयति 'ॐ प्राणो रक्षति विश्वमेजत् ।। इर्यो भूत्वा बहुधा बहूनि ।। स इत्सर्वं व्यानशे ।।१।। ॐ यो देवो देवेषु विभूरन्तः ।। आवृदूदात्क्षेत्रिय ध्वगद्वृषा ।। तमित्प्राणं मनसोपशिक्षत ।। अग्रं देवानामिदमत्तु नो हविः ।।२।। ॐ मनसश्चित्तेदम् ।। भूतं भव्यं च गुप्यते ।। तद्धि देवेष्वग्रियम् ।।३।। ॐ आन एतु पुरश्चरम् ।। सह देवैरिमꣳहवम् ।। मनः श्रेयसि श्रेयसि ।। कर्मन्यज्ञपतिं दधत् ।।४।। ॐ जुषतां मे वागिदꣳहविः ।। विराड्देवी पुरोहिता ।। हव्यवाडनपायिनी ।।५।। ॐ यया रूपाणि बहुधा वदन्ति ।। पेशाꣳसि देवाः परमे जनित्रे ।। सा नो विराडनपस्फुरन्ति ।। वाग्देवी जुषतामिदꣳहविः ।।६।। ॐ चक्षुर्देवानां ज्योतिरमृते न्यक्तम् ।। अस्य विज्ञानाय बहुधा निधीयते ।। तस्य सुम्नमशीमहि ।। मा नो हासीद्विचक्षणम् ।।७।। ॐ आयुरिन्नः प्रतीर्यताम् ।।

अनन्धाश्चक्षुषा वयम् ॥ जीवा ज्योतिरशीमहि ॥ सुवर्ज्योतिरुतामृतम् ॥८॥ ॐ श्रोत्रेण भद्रमुतशृण्वन्ति सत्यम् ॥ श्रोत्रेण वाचं बहुधोद्यमानाम् ॥ श्रोत्रेण मोदश्च महश्च श्रूयते ॥ श्रोत्रेण सर्वा दिश आशृणोमि ॥९॥ ॐ येन प्राच्या उत दक्षिणा ॥ प्रतीच्यै दिशः शृण्वन्त्युत्तरात् ॥ तदिच्छ्रोत्रं बहुधोद्यमानम् ॥ अरान्ननेमिः परिसर्वं बभूव ॥१०॥ इति दशभिः प्राशयित्वा, तदवशिष्टं गोष्ठे निनयति 'ॐ भूर्भुवः सुवः' इति ॥ अथैनं मातुरुत्सङ्ग आदधाति 'ॐ सीद त्वं मातुरस्या उपस्थे विश्वान्यग्ने वयुनानि विद्वान् ॥ मैनामर्चिषा मा तपसाभिशूशुचोऽन्तरस्याꣳशुक्रज्योतिर्विभाहि ॥१॥ ॐ अन्तरग्ने रुचात्वमुखायै सदने स्वे ॥ तस्यास्त्वꣳहरसा तपन्जातवेदः शिवो भव ॥२॥ ॐ शिवो भूत्वा मह्यमग्नेऽथो सीद शिवस्त्वम् ॥ शिवाः कृत्वा दिशः सर्वाः स्वां योनिमिहासदः ॥३॥ ॐ हꣳसश्शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥४॥' इति चतसृभिः ॥ इतःपरं मन्त्रावृत्तिरेव ॥ अर्थलोपात्, 'अर्थलुप्तेष्वनादर' इति प्रायश्चित्तप्रकरणे उक्तत्वात् ॥ 'ॐ यस्ते स्तनः शशयो यो मयो भूर्येन विश्वा पुष्यसि वार्याणि ॥ यो रत्नधा वसुविद्यस्सुदत्रस्सरस्वति तमिह धातवेकः ॥ ॐ द्यौस्ते पृष्ठꣳरक्षतु वायुरूरू अश्विनौ च स्तनं धयन्तꣳसविताऽभिरक्षतु ॥ आवाससः परिधानाद्बृहस्पतिर्विश्वेदेवा अभिरक्षन्तु पश्चात् ॥ ॐ आपः सुप्तेषु जाग्रत रक्षाꣳसि निरितोनुदध्वम्' इति मन्त्रान्जपित्वा, 'अथास्य कुमारस्य गर्भाधान ... चौलहोमं कर्तुं स्थण्डिलोल्लेखनाख्यं कर्म करिष्ये' इति सङ्कल्प्य, तत्कृत्वा, औपासनैकदेशाग्निं प्रतिष्ठाप्य, सद्यस्सन्धानपक्षे समस्ताग्निरेव नत्वेकदेशः ॥ द्विराचम्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः-श्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधान पुंसवन सीमन्तविष्णुबलिजातकर्म नामकरणोप-

निष्क्रमणान्नप्राशनकर्णवेधन-चौलहोमान् कालातिपन्नप्रायश्चित्तहोमपूर्वकं समानतन्त्रेण करिष्ये ।। गर्भाधान ... चौलहोमः कर्म आधारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ मारुतश्चन्द्रमा मङ्गलः शोभनः प्रबलः पार्थिवः शिवः सुचिर्वर्धमानः सद्भ्यो नामाऽग्नयः ।। वेधाः प्रजापतिर्धाता सविता मृत्युः सविता सविता सविता श्रोत्रं केशिनो देवताः चरुर्हविरग्निः स्विष्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता एता अङ्गदेवताः प्रधानदेवताः ताः सर्वाः सन्निहिताः सन्तु एवं साङ्गेन कर्मणा सद्यो यक्ष्ये ।। तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य, अन्वाधानादिकं कृत्वा, प्राकृतपात्रैः, सह क्षुरं दर्भान् शीतोष्णोदके सूचीं लोहितसूत्रमिति सकृदेवासाद्य प्रणीतासादनान्तं कृत्वा, अग्नेः पूर्वभागे तण्डुलपुञ्जेषु हरेः प्रतिमामालिख्य, गन्धाक्षतपुष्पैरवकीर्य 'मम कुमारस्य रक्षार्थमायुः श्रीबलवृद्ध्यर्थं श्रीपरमेश्वरप्रीत्यर्थं विष्णुपूजां करिष्ये' इति सङ्कल्प्य, गन्धापुष्पोदकानि गृहीत्वा 'ॐ भूः पुरुषमावाहयामि, ॐ भुवः पुरुषमावाहयामि, ओ ँ सुवः पुरुषमावाहयामि, ॐ भूर्भुवःसुवः पुरुषमावाहयामि' इत्यावाह्य 'स्वागतं पुनरागतं भगवतो महापुरुषस्यैतदासनमुपक्लृप्तं अत्रास्तां भगवन्महापुरुष भगवतोऽयं कूर्चो दर्भमयस्त्रिवृद्धरितस्सुवर्णस्तञ्जुषस्व' इति कूर्चं दत्वा, सपवित्रे पात्रेऽप आनीय गन्धपुष्पाक्षतान्निक्षिप्य, गायत्र्याऽभिमन्त्र्य ओमित्यादित्यं दर्शयित्वा 'ॐ त्रीणि पदा विचक्रमे विष्णुर्गोपा अदाभ्यः ।। अतो धर्माणि धारयन्' इति पाद्यं दत्वा, प्रणवेनार्घ्यं दत्वा, चरुं निर्वपति ।। ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां वेधसे जुष्टं निर्वपामि ।। एवं सर्वत्र त्रिर्मन्त्रेण तूष्णीं चतुर्थम् ।। ॐ देवस्य त्वा ... हस्ताभ्यां० प्रजापतये जुष्टं निर्वपामि ।। ॐ देवस्य त्वा ... हस्ताभ्यां० धात्रे जुष्टं निर्वपामि ।। ॐ देवस्य त्वा ... सवित्रे जुष्टं निर्वपामि ।। ॐ देवस्य त्वा ... मृत्यवे जुष्टं निर्वपामि ।। सवित्रे जुष्टं ..., सवित्रे जुष्टं ..., सवित्रे जुष्टं० श्रोत्राय जुष्टं

निर्वपामि ।। ॐ देवस्य त्वा ... केशिभ्यो जुष्टं निर्वपामि ।। इति त्रिर्मन्त्रेण, तूष्णीं चतुर्थं निरूप्य ।। ॐ देवस्य त्वा ... हस्ताभ्यां० वेधसे वो जुष्टं प्रोक्षामि ।। प्रजापतये वो जुष्टं प्रोक्षामि ।। धात्रे वो जुष्टं प्रोक्षामि ।। सवित्रे वो जुष्टं ।। मृत्यवे वो जुष्टं ।। सवित्रे वो जुष्टं ।। सवित्रे वो जुष्टं ।। सवित्रे वो जुष्टं ।। श्रोत्राय वो जुष्टं प्रोक्षामि ।। केशिभ्यो वो जुष्टं प्रोक्षामि ।। इति सकृन्मन्त्रेण, द्विस्तूष्णीं प्रोक्ष्य, आज्यसंस्काराद्यग्निमुखान्तं कृत्वा, विष्णुं स्नापयति ।। आपोहिष्ठेति तिसृभिः ।। हिरण्यवर्णा इति चतसृभिः ।। पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा, अथाद्भिस्तर्पयति 'केशवं तर्पयामि, नारायणं तर्पयामि, माधवं तर्पयामि, गोविन्दं तर्पयामि, विष्णुं तर्पयामि, मधुसूदनं तर्पयामि, त्रिविक्रमं तर्पयामि, वामनं तर्पयामि, श्रीधरं तर्पयामि, हृषीकेशं तर्पयामि, पद्मनाभं तर्पयामि, दमोदरं तर्पयामि' ।। इति तर्पयित्वा, एतैरेव नामधेयैर्गन्धपुष्पाक्षतधूपदीपैरर्चयति ।। यथा ।। ॐ इदं विष्णुः० ।। केशवनारायणमाधवगोविन्दविष्णुमधुसूदन-त्रिविक्रमवामनश्रीधरहृषीकेशपद्मनाभदामोदरेभ्यो नमः गन्धान् समर्पयामि ।। ॐ तद्विष्णोः परमम्० ।। केशव ... दामोदरेभ्यो नमः पुष्पाणि समर्पयामि ।। ॐ इरावती धेनुमती० ।। केशव ... दासमोदरेभ्यो नमः अक्षतान् समर्पयामि ।। ॐ तत्सवितुः० ।। केशव ... दामोदरेभ्यो नमः धूपमाघ्रापयामि ।। ॐ उद्दीप्यस्व ।। केशव ... दामोदरेभ्यो नमः दीपं दर्शयामि ।। इति पञ्चोपचारान् कृत्वा, अथातिपन्नसंस्काराणां कालातिपन्नप्रायश्चित्तं कुर्यात् ।। 'मम कुमारस्य गर्भाधान ... चौलकर्मणां मुख्यकालातिपन्नप्रायश्चित्तार्थं कृच्छ्रत्रयपूर्वकं कालातिपत्तिप्रायश्चित्तहोमं करिष्ये' इति सङ्कल्प्य, कृच्छ्रप्रत्याम्नाय गोत्रयं तन्मूल्यं वा ब्राह्मणेभ्यो दत्वा, होमं कुर्यात् ।। चित्तं च स्वाहेत्यादि त्रयोदश स्रुवाहुतीर्हुत्वा, अग्निर्भूतानामित्यादि रुदःपशूनामित्यन्तं हुत्वा, अप उपस्पृश्य ।। ॐ ततं म आपस्तदुतायते पुनः ।। स्वाधिष्ठाधीतिरुचथाय शस्यते ।। अयꣳसमुद्र उत विश्वभेषजः ।। स्वाहाकृतस्य समुतृप्णुतर्भुवः स्वाहा ।। ऋभुभ्य इदम् ।। ॐ यत्पाकत्रा० ।। अग्नय इदम् ।। ॐ मनोज्योतिर्जुषताम्० ।। मनसे ज्योतिष उषोभ्यो निम्रुग्भ्य इदम् ।। ॐ यन्म

आत्म०, ॐ पुनरग्निः० ॥ महाव्याहृतीर्व्याहृतीश्च जुहुयात् ॥ इत आरभ्य सर्वत्र प्रधानादौ प्रधानादौ द्वे द्वे मिन्दाहुती व्याहृतिपूर्वकं जुहुयात् ॥ ॐ यन्म आत्मनः०, ॐ पुनरग्निः० ॥ स्रुवेण दर्व्यामुपस्तीर्य पूर्वार्धाच्चरोरवदाय अपरार्धादवद्यति, पञ्चावत्तिनां तु मध्यात्पूर्वादपरार्धादिति त्रिरवदाय अभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ प्रवेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे ॥ यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यों३प्रवेधसे ... हेड्यान्त्स्वाहा ॥ वेधस इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, अथ पक्वावशिष्टचरुं मेक्षणेन गृहीत्वा जुहोति, यस्त्वेत्यादि त्रिभिः ॥ ॐ यस्त्वा हृदा कीरिणा मन्यमानोऽमर्त्यं मर्त्यो जोहवीमि ॥ जातवेदो यशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्याꣳस्वाहा ॥ जातवेदसेऽग्नय इदम् ॥ ॐ यस्मै त्वꣳसुकृते जातवेद उ लोकमग्ने कृणवः स्योनम् ॥ अश्विनꣳस पुत्रिणं वीरवन्तं गोमन्तꣳरयिं नशते स्वस्ति स्वाहा ॥ जातवेदसेऽग्नय इदम् ॥ ॐ त्वे सुपुत्रशवसो वृत्रन्काम कातयः ॥ न त्वामिन्द्रातिरिच्यते स्वाहा ॥ इन्द्रायेदम् ॥ इति तिसृभिरन्नं हुत्वा, (प्रजासंस्कारपक्षमाश्रित्येदं) अथाज्याहुतीरुपजुहोति ॥ ॐ ज्येष्ठाय स्वाहा ॥ ज्येष्ठायेदम् ॥ ॐ श्रेष्ठाय स्वाहा ॥ श्रेष्ठायेदम् ॥ ॐ प्रतिष्ठाय स्वाहा ॥ प्रतिष्ठायेदम् ॥ ॐ प्रतिष्ठित्यै स्वाहा ॥ प्रतिष्ठित्या इदम् ॥ ॐ सम्पत्यै स्वाहा ॥ सम्पत्या इदम् ॥ ॐ सम्पतये स्वाहा ॥ सम्पतय इदम् ॥ ॐ ब्रह्मणे स्वाहा ॥ ब्रह्मण इदम् ॥ ॐ आयतनवते स्वाहा ॥ आयतनवत इदम् ॥ इत्यष्टभिर्हुत्वा, व्याहृतीर्हुत्वा, पुनर्मिन्दाहुती हुत्वा, पुंसवनपक्वहोमं कुर्यात् ॥ स्रुवेण दर्व्यांमुपस्तीर्य द्वितीयाद्यवदाने तु अपरार्धादवदाय पूर्वार्धादवद्यति, पञ्चावत्तिनां तु मध्यादपरार्धात्पूर्वार्धादित्यवदानं, अभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाहुतिं हुत्वा ॥

ॐ प्रजापते तन्वं मे जुषस्व त्वष्टर्देवेभिस्सह साम इन्द्र ॥ विश्वैर्देवैरातिभिः स॒रराणः पु॒सां बहूनां मातरः स्यामों३प्रजापते तन्वं मे ... स्याम स्वाहा ॥ प्रजापतय इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, अथाज्याहुतीरुपजुहोति ॥ ॐ गर्भो अस्योषधीनां गर्भो वनस्पतीनाम् ॥ गर्भो विश्वस्य भूतस्याग्ने गर्भो अपामसि स्वाहा ॥ अग्नये गर्भायेदम् ॥१॥ ॐ प्रसद्य भस्मना योनिमपश्च पृथिवीमग्ने ॥ स॒सृज्य मातृभिस्त्वं ज्योतिष्मान्पुनरासदः स्वाहा ॥ अग्नये ज्योतिष्मत इदम् ॥२॥ ॐ पुनरासद्य सदनमपश्च पृथिवीमग्ने ॥ शेषे मातुर्यथोपस्थेऽन्तरस्या॒शिवतमः स्वाहा ॥ अग्नय इदम् ॥३॥ इति तिसृभिरुपहुत्य, व्याहृतीर्हुत्वा, मिन्दाहुती हुत्वा, सीमन्तपक्वहोमं कुर्यात् ॥ स्रुवेण दर्व्यामुपस्तीर्य अपरार्धाच्चरोरवदाय पूर्वार्धादवद्यति, अभिघारयति प्रत्यनक्ति पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ धाता ददातु नो रयिमीशानो जगतस्पतिः ॥ स नः पूर्णेन वावनों३धाता प्रजाया उत राय ईशे धातेदं विश्वं भुवनं जजान ॥ धाता पुत्रं यजमानाय दाता तस्मा उ हव्यं घृतवद्विधेम स्वाहा ॥ धात्र इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, अथाज्याहुतीरुपजुहोति ॥ ॐधाता ददातु नो रयिं प्राचीं जीवातुमक्षिताम् ॥ वयं देवस्य धीमहि सुमति॒सत्यराधसः स्वाहा ॥ धात्र इदम् ॥१॥ ॐ धाता ददातु दाशुषे वसूनि प्रजाकामाय मीढुषे दुरोणे ॥ तस्मै देवा अमृताः संव्ययन्तां विश्वेदेवासो अदितिः सजोषाः स्वाहा ॥ धात्रे विश्वेभ्यो देवेभ्योऽदित्या इदम् ॥२॥ ॐ अनुनोद्यानुमतिर्यज्ञं देवेषु मन्यताम् ॥ अग्निश्च हव्यवाहनो भवतां दाशुषे मयः स्वाहा ॥ अनुमत्या इदम् ॥३॥ ॐ अन्विदनुमते त्वं मन्यासै शं च नः कृधि ॥ क्रत्वे दक्षाय नो हि नु प्रण आयु॒षि तारिषः स्वाहा ॥ अनुमत्या इदम् ॥४॥ ॐ अनुमन्यतामनुमन्यमाना प्रजावन्त॒रयिमक्षीयमाणम् ॥ तस्यै वय॒हेडसिमाऽपि

भूम सा नो देवी सुहवा शर्म यच्छतु स्वाहा॥ अनुमत्यै देव्या इदम्॥५॥ ॐ यस्यामिदं प्रदिशि यद्विरोचतेऽनुमतिं प्रतिभूषन्त्यायवः॥ यस्या उपस्थ उर्वन्तरिक्ष॒सा नो देवी सुहवा शर्म यच्छतु स्वाहा॥ अनुमत्यै देवा इदम्॥६॥ ॐ राकामह॒सुहवा॒सुष्टुतीहुवे शृणोतु नः सुभगा बोधतुत्मना॥ सीव्यत्वपः सूच्याऽच्छिद्यमानया ददातु वीरि॒शतदायमुक्थ्य॒स्वाहा॥ राकाया इदम्॥७॥ ॐ यस्ते राके सुमतयः सुपेशसो याभिर्ददासि दाशुषे वसूनि॥ ताभिर्नो अद्य सुमना उपागहि सहस्रपोष॒सुभगे रराणा स्वाहा॥ राकाया इदम्॥८॥ ॐ सिनीवालि पृथुष्टुके या देवानामसि स्वसा॥ जुषस्व हव्यमाहुतं प्रजां देवीदिदिड्ढिणः स्वाहा॥ सिनीवाल्या इदम्॥९॥ ॐ या सुपाणिः स्वङ्गुरिः सुषूमा बहुसूवरी॥ तस्यै विश्पत्नियै हविः सिनीवाल्यै जुहोतनः स्वाहा॥ सिनीवाल्या इदम्॥१०॥ ॐ कुहूमह॒सुभगां विद्मनापसमस्मिन्यज्ञे सुहवां जोहवीमि॥ सा नो ददातु श्रवणं पितृणां तस्यास्ते देवि हविषा विधेम स्वाहा॥ कुह्वै देव्या इदम्॥११॥ ॐ कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषश्चिकेतु॥ सन्दाशुषे किरतु भूरिवाम॒रायस्पोषं चिकितुषे ददातु स्वाहा॥ कुह्वै देवानां पत्न्या इदम्॥१२॥ इति॥ द्वादशभिर्हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, विष्णुबलिपक्वहोमं कुर्यात्॥ पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा॥ ॐ भूर्भुवःसुवरों३तत्सवितुः ... दयात् स्वाहा॥ सवित्र इदम्॥ अथाज्याहुतीरुपजुहोति॥ ॐ विष्णोर्नुकम्०, तदस्य प्रियम्०, प्रतद्विष्णुः०, परो मात्राया०, विचक्रमे०, त्रिर्देवः०॥ सर्वत्र विष्णव इदम्॥ इति षड्भिर्हुत्वा,

व्याहृतिमिन्दाहुतीर्हुत्वा, जातकर्मपक्कहोमं कुर्यात् ॥ पूर्ववदवदाय पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ हरिꣳहरन्तमनुयन्ति देवा विश्वस्येशानं वृषभं मतीनाम् ॥ ब्रह्म सरूपमनुमेदमागादयनं मा विवधीर्विक्रमस्वों३माच्छिदो मृत्यो मा वधीर्मा मे बलं बिवृहो मा प्रमोषीः ॥ प्रजां मा मे रीरिष आयुरुग्रनृचक्षसं त्वा हविषा विधेम स्वाहा ॥ मृत्यव इदम् ॥ अथ आज्याहुतीरुपजुहोति ॥ ॐ सद्यश्चकमानाय ॥ प्रवेपानाय मृत्यवे ॥ प्रास्मा आशा अशृण्वन् ॥ कामेनाजनयन्पुनः स्वाहा ॥ मृत्यव इदम् ॥१॥ ॐ कामेन मे काम आगात् ॥ हृदयाद्धृदयं मृत्योः ॥ यदमीषामदः प्रियम् ॥ तदैतूपमामभि स्वाहा ॥ मृत्यव इदम् ॥२॥ ॐ परं मृत्यो अनु परेहि पन्थाम् ॥ यस्ते स्व इतरो देवयानात् ॥ चक्षुष्मते शृण्वते ते ब्रवीमि ॥ मा नः प्रजाꣳरीरिषो मोत वीरान्त्स्वाहा ॥ मृत्यव इदम् ॥३॥ प्रपूर्व्यं मनसा वन्दमानः ॥ नाधमानो वृषभं चर्षणीनाम् ॥ यः प्रजानामेकराण्मानुषीणाम् ॥ मृत्युं यजे प्रथमजामृतस्य स्वाहा ॥ मृत्यव इदम् ॥४॥ इति चतसृभिर्हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, नामकरणपक्कहोमं कुर्यात् ॥ पूर्ववदवदाय गायत्र्या पक्कं हुत्वा, अथ आज्याहुतीः उपजुहोति ॥ ॐ प्रजापतेनत्वदेतान्यन्यः० ॥ प्रजापतय इदम् ॥१॥ ॐ रयीणां पतिं यजतं बृहन्तम् ॥ अस्मिन्भरेऽनृतमं वाजसातौ ॥ प्रजापतिं प्रथमजामृतस्य ॥ यजाम देवमधिनो ब्रवीतु स्वाहा ॥ प्रजापतय इदम् ॥२॥ ॐ प्रजापते त्वं निधिपाः पुराणः ॥ देवानां पिता जनिता प्रजानाम् ॥ पतिर्विश्वस्य जगतः परस्पाः ॥ हविर्नो देव विहवे जुषस्व स्वाहा ॥ प्रजापतय इदम् ॥३॥ ॐ तवेमे लोकाः प्रदिशो दिशश्च ॥ परावतो निवत उद्वतश्च ॥ प्रजापते विश्वसृज्जीवधन्यः ॥ इदन्नो देव प्रतिहर्य हव्यꣳस्वाहा ॥ प्रजापतय इदम् ॥४॥ ॐ प्रजापतिं प्रथमं यज्ञियानाम् ॥ देवानामग्रे यजतं यजध्वम् ॥ स नो ददातु

द्रविण॑ꣳ सुवीर्य॑म् ॥ रायस्पोषं विष्य॑तु नाभिमस्मे स्वाहा ॥ प्रजापतय इदम् ॥५॥ ॐ यो राज ईशे शतदाय उक्थ्यः ॥ यः पशूनाꣳ रक्षिता विष्ठितानाम् ॥ प्रजापतिः प्रथमजा ऋतस्य ॥ सहस्रधामा जुषताꣳ हविर्नः स्वाहा ॥ प्रजापतय इदम् ॥६॥ इति षड्भिर्हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा, उपनिष्क्रमणपक्वहोमं कुर्यात् ॥ पूर्ववद्गायत्र्या पक्वं हुत्वा, अथाज्याहुतीरुपजुहोति ॥ ॐ स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यादितिरनर्वणः ॥ स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतुना स्वाहा ॥ अश्विभ्यां भगायाऽदित्यै पूष्णे द्यावापृथिवीभ्यामिदम् ॥१॥ ॐ स्वस्तये वायुमुपब्रवामहै सोमꣳ स्वस्ति भुवनस्य यस्पतिः ॥ बृहस्पतिꣳ सर्वगणꣳ स्वस्तये स्वस्तय आदित्यासो भवन्तु नः स्वाहा ॥ वायवे सोमाय भुवनपतये बृहस्पतय आदित्येभ्य इदम् ॥२॥ ॐ विश्वे देवानो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये ॥ देवा अवन्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वꣳहसः स्वाहा ॥ विश्वेभ्यो देवेभ्यो वैश्वानराय वसवेऽग्नये देवेभ्यो ऋभुभ्यो रुद्रायेदम् ॥३॥ ॐ स्वस्ति मित्रावरुणा स्वस्ति पथ्ये रेवति ॥ स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अदिते कृधि स्वाहा ॥ मित्रावरुणाभ्यां पथ्यायै रेवत्या इन्द्रायाग्नयेऽदित्या इदम् ॥४॥ ॐ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव ॥ पुनर्ददता घ्नता जानता सङ्गमेमहि स्वाहा ॥ सूर्याचन्द्रमोभ्यामिदम् ॥५॥ ॐ स्वस्त्ययनं ताक्ष्र्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ॥ असुरघ्नमिन्द्रसखꣳ समत्सु बृहद्यशो नावमिवारुहेम स्वाहा ॥ ताक्ष्र्यायारिष्टनेमये असुरघ्नायेन्द्रसखायेदम् ॥६॥ ॐ अꣳहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च ताक्ष्र्यम् ॥

प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु स्वाहा ॥ आङ्गिरसाय स्वस्त्यात्रेयाय ताक्ष्यार्य इदम् ॥७॥ ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ॥ स्वस्ति नस्ताक्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु स्वाहा ॥ इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे ताक्ष्यार्यारिष्टनेमये स्वस्तये बृहस्पतय इदम् ॥८॥ इत्यष्टभिर्हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा ॥ अन्नप्राशनपक्कहोमं कुर्यात् ॥ पूर्ववत् गायत्र्या पक्कं हुत्वा, अथाज्याहुतीरुपजुहोति ॥ ॐ अहमस्मि प्रथमजा ऋतस्य ॥ पूर्वं देवेभ्यो अमृतस्य नाभिः ॥ यो मा ददाति स इदेवमावाः ॥ अहमन्नमन्नमदन्तमद्मि स्वाहा ॥ अन्नायेदम् ॥१॥ ॐ पूर्वमग्नेरपि दहत्यन्नम् ॥ यत्तौ हासाते अहमुत्तरेषु ॥ व्यात्तमस्य पशवः सुजम्भम् ॥ पश्यन्ति धीराः प्रचरन्ति पाकाः स्वाहा ॥ अन्नायेदम् ॥२॥ ॐ जहाम्यन्यं न जहाम्यन्यम् ॥ अहमन्नं वशमिच्चरामि ॥ समानमर्थं परेमि भुञ्जत् ॥ कोमामन्नं मनुष्यो दरेत स्वाहा ॥ अन्नायेदम् ॥३॥ ॐ पराके अन्नं निहितं लोक एतत् ॥ विश्वैर्देवैः पितृभिर्गुप्तमन्नम् ॥ यदद्यते लुप्यते यत्परोप्यते ॥ शततमी सा तनूर्मे बभूव स्वाहा ॥ अन्नायेदम् ॥४॥ ॐ महान्तौ चरू सकृद्दुग्धेन पप्रौ ॥ दिवं च पृश्नि पृथिवीं च साकम् ॥ तत्सम्पिबन्तो न मिनन्ति वेधसः ॥ नैतद्भूयो भवति नो कनीयः स्वाहा ॥ अन्नाय इदम् ॥५॥ ॐ अन्नं प्राणमन्नमपानमाहुः ॥ अन्नं मृत्युं तमु जीवातुमाहुः ॥ अन्नं ब्रह्माणो जरसं वदन्ति ॥ अन्नमाहुः प्रजननं प्रजानाᳶस्वाहा ॥ अन्नायेदम् ॥६॥ ॐ मोघमन्नं विन्दते अप्रचेताः ॥ सत्यं ब्रवीमि वध इत्सतस्य ॥ नार्यमणं पुष्यति नो सखायम् ॥ केवलाघो भवति केवलादी स्वाहा ॥ अन्नायेदम् ॥७॥ ॐ अहं मेघः स्तनयन्वर्षन्नस्मि ॥ मामदन्त्यहमद्मयन्यान् ॥ अहᳶसदमृतो भवामि ॥ मदादित्या अधि सर्वे तपन्ति स्वाहा ॥
अन्नायेदम् ॥८॥ इत्यष्टभिर्हुत्वा, व्याहृतिमिन्दाहुतीर्हुत्वा ॥ कार्यान्तरपक्कहोमं कुर्यात् ॥ पूर्ववदवदाय पक्कस्यात्मवाहुतिं

हुत्वा ॥ ॐ श्रोत्रेण भद्रमुत शृण्वन्ति सत्यं श्रोत्रेण वाचं बहुधोद्यमानाम् ॥ श्रोत्रेण मोदश्च महश्च श्रूयते श्रोत्रेण सर्वा दिश आश्रृणोमों३येन प्राच्या उत दक्षिणा प्रतीच्यै दिशः शृण्वन्त्युत्तरात् ॥ तदिच्छ्रोत्रं बहुधोद्यमानमरान्ननेमिः परि सर्वं बभूव स्वाहा ॥ श्रोत्रायेदम् ॥ अथाज्याहुतीर्जुहोति ॥ ॐ प्राणो रक्षति ... व्यानशे स्वाहा ॥ प्राणायेदम् ॥१॥ ॐ यो देवो देवेषु विभूरन्तः ... हविः स्वाहा ॥ प्राणायेदम् ॥२॥ ॐ मनसश्चित्तेदं ... अग्रिय॒ꣳस्वाहा ॥ मनस इदम् ॥३॥ आ न एतु पुरश्चरं ... दधत्स्वाहा ॥ मनस इदम् ॥४॥ ॐ जुषतां मे वाक् ... अनपायिनी स्वाहा ॥ वाचे देव्या इदम् ॥५॥ ॐ यया रूपाणि बहुधा वदन्ति ... हविः स्वाहा ॥ वाचे देव्या इदम् ॥६॥ ॐ चक्षुर्देवानां ... विचक्षण॒ꣳस्वाहा ॥ चक्षुष इदम् ॥७॥ ॐ आयुरिन्नः ... मृत॒ꣳस्वाहा ॥ चक्षुष इदम् ॥८॥ ॐ श्रोत्रेण भद्र ... आशृणोमि स्वाहा ॥ श्रोत्रायेदम् ॥९॥ ॐ येन प्राच्या ... बभूव स्वाहा ॥ श्रोत्रायेदम् ॥१०॥ इति दशभिर्हुत्वा, चौलपक्वहोमं कुर्यात् ॥ व्याहृतिमिन्दाहुतीर्हुत्वा, स्रुवेण दर्व्यामुपस्तीर्य, अपरार्धादवदाय पूर्वार्धादवद्यति अभिघारयति प्रत्यनक्ति, पुरस्तात् स्रुवाहुतिं हुत्वा ॥ ॐ ये केशिनः प्रथमाः सत्रमासत येभिराभृतं यदिदं विरोचते ॥ तेभ्यो जुहोमि बहुधा घृतेन रायस्पोषेणेमं वर्चसा स॒ꣳसृजोथों३ नर्ते ब्रह्मणस्तपसो विमोको द्विनाम्नी दीक्षा वशिनी ह्युग्रा ॥ प्रकेशाः सुवते काण्डिनो भवन्ति तेषां ब्रह्मेदीशे वपनस्य नान्यः स्वाहा ॥ केशिभ्य इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, स्विष्टकृतमुत्तरार्धात्सकृदवदाय द्विरभिघार्य, न प्रत्यज्य अन्तःपरिधौ निधाय, पश्चावत्तिनां तु त्रिरभिघारणं

अथाज्याहुतीरुपजुहोति ॥ ॐ आरोह प्रोष्ठं विषहस्व शत्रून् ॥ अवास्राग्दीक्षा वशिनीह्युग्रा ॥ देहि दक्षिणां प्रतिरस्वायुः ॥ अथामुच्यस्व वरुणस्य पाशात्स्वाहा ॥ वशिन्या उग्राया इदम् ॥१॥ ॐ येनावपत्सविता क्षुरेण ॥ सोमस्य राज्ञो वरुणस्य विद्वान् ॥ तेन ब्रह्माणो वपतेदमस्योर्जेमम् ॥ रय्या वर्चसा सꣳसृजाथ स्वाहा ॥ सवित्रे सोमाय राज्ञे वरुणायेदम् ॥२॥ ॐ मा ते केशाननुगाद्वर्च एतत् ॥ तथा धाता करोतु ते ॥ तुभ्यमिन्द्रो बृहस्पतिः ॥ सविता वर्च आदधात्स्वाहा ॥ धात्र इन्द्राय बृहस्पतये सवित्र इदम् ॥३॥ ॐ तेभ्यो निधानं बहुधा व्यैच्छन् ॥ अन्तरा द्यावापृथिवी अपः सुवः ॥ दर्भस्तम्बे वीर्यकृते निधाय ॥ पौꣳस्येनेमं वर्चसा सꣳसृजाथ स्वाहा ॥ द्यावापृथिवीभ्यामिदम् ॥४॥ ॐ बलं ते बाहुवोः सविता दधातु ॥ सोमस्त्वानक्तु पयसा घृतेन ॥ स्त्रीषु रूपमश्विनैतं निधत्तम् ॥ पौꣳस्येनेमं वर्चसा सꣳसृजाथ स्वाहा ॥ सवित्रे सोमायाश्विभ्यामिदम् ॥५॥ ॐ यत्सीमन्तं कङ्कतस्ते लिलेख ॥ यद्वा क्षुरः परिववर्ज वपꣳस्ते ॥ स्त्रीषु रूपमश्विनैतं निधत्तम् ॥ पौꣳस्येनेमꣳवर्चसा सꣳसृजाथो वीर्येण स्वाहा ॥ अश्विभ्यामिदम् ॥६॥ इति षड्भिर्हुत्वा, व्याहृतीर्हुत्वा, पुरस्तात्स्रुबाहुतिं हुत्वा ॥ ॐ हव्यवाह ... हुवेमों३स्विष्टमग्ने ... आयुः स्वाहा ॥ अग्नये स्विष्टकृत इदम् ॥ अथ मेक्षणप्रहरणाद्युत्तरपरिषेकं विना अन्यत्समस्तं कृत्वा, गर्भाधानाद्युपरिष्टात्तन्त्राणि कुर्यात् ॥ तत्र सीमन्तपर्यन्तमतीतानां मन्त्रावृत्तिरेव ॥ यथा ॥ ॐ तत्सवितुर्वृणीमहे ॥ वयं देवस्य भोजनम् ॥ श्रेष्ठꣳसर्वधातमम् ॥ तुरं भगस्य धीमहि ॥ ॐ तत्सवितुः० ॥ ॐ यत इन्द्र भयामहे० ॥ ॐ स्वस्तिदा० ॥ इति जपेत् ॥ इति गर्भाधानतन्त्रम् ॥ छ ॥ अथ पुंसवनम् ॥ ॐ अस्मे देवासो वपुषे चिकित्सत यमाशिरा दम्पती वाममश्नुतः ॥ पुमान्पुत्रो जायते विन्दते वस्वथ विश्वे अरपा

एधते ग्रहः ॥१॥ आशीर्दाया दम्पती वाममश्नुतामरिष्टो रायः सचता ँ समोकसा ॥ य आसिचत्सन्दुग्धं कुम्भ्या सहेष्टेन यामन्नमतिं जहातु सः ॥२॥ सर्पिर्ग्रीवी पीवर्यस्य जाया पीवानः पुत्रा अकृशासो अस्य ॥ सह जानिर्य सुमखस्य मान इन्द्रायाशिर ँ सह कुम्भ्यादात् ॥३॥ आशीर्म ऊर्जमुत सुप्रजास्त्वमिष दधातु द्रविण ँ सवर्चसम् ॥ सञ्जयन्क्षेत्राणि सहसाहमिन्द्र कृण्वानो अन्या ँ अधरान्त्सपत्नान् ॥४॥ इति पुंसवनतन्त्रम् ॥ छ ॥ अथ सीमन्ततन्त्रम् ॥ 'ॐ राकामहम्०, ॐ यास्ते राके०' इति द्वे ॥ 'ॐ यवोऽसि यवयास्मद्द्वेषो यवयारातीः ॥ सोम एव नो राजेत्याहुर्ब्राह्मणीः प्रजा विवृत्तचक्रा आसीनास्तीरेण गङ्गे तव, सीते तव, कावेरि तव' इत्यादि ॥ इति सीमन्ततन्त्रम् ॥ छ ॥ अथ विष्णुबलितन्त्रम् ॥ गुडपायस ँ घृतमिश्रमिति हविः विष्णवे निवेद्य, प्रदक्षिणनमस्कारान्तं कृत्वा, अथान्नेन 'ॐ केशवाय स्वाहा, ॐ नारायणाय०, ॐ माधवाय०, ॐ गोविन्दाय०, ॐ विष्णवे०, ॐ मधुसूदनाय०, ॐ त्रिविक्रमाय०, ॐ वामनाय०, ॐ श्रीधराय०, ॐ हृषीकेशाय०, ॐ पद्मनाभाय०, ॐ दामोदराय स्वाहा' इति द्वादशनामभिर्बलिं दत्वा 'केशवं तर्पयामि, नारायणमित्यादिदामोदरान्तं तर्पयामि' इति द्वादशनामभिस्तर्पयित्वा 'ॐ त्रीणि पदा विचक्रमे०, ॐ इदं विष्णुर्विचक्रमे०' इत्यादिस्तुतिभिः स्तुत्वा 'ॐ भूः पुरुषमुद्वासयामि, ॐ भूवः पुरुषमुद्वासयामि, ओ ँ सुवः पुरुषमुद्वासयामि, ॐ भूर्भुवःसुवः पुरुषमुद्वासयामि' इत्युद्वासयेत् ॥ इति विष्णुबलितन्त्रम् ॥ छ ॥ अथ जातकर्मतन्त्रम् ॥ अनोयुगं रथयुगं वा स्नाप्य, वस्त्रेणाच्छाद्य, तदग्नेः पूर्वभागे संस्थाप्य, तस्याग्रे अश्वत्थपर्णेषु हुतशेषं निदधाति 'ॐ नम आव्याधिनीभ्यो विविध्यन्तीभ्यश्च वो नमः' ब्रह्मजज्ञानम्०, व्याहृतीश्च जपेत् ॥ इति जातकर्मतन्त्रम् ॥ छ ॥ अथ

नामकरणतन्त्रम् ॥ अथाग्रेणाग्निं अश्वत्थपर्णेषु हुतशेषं निदधाति 'ॐ भूर्भुवःसुवः' इति ॥ अथ कर्ता प्राणानायम्य, देशकालौ सङ्कीर्त्य 'मम कुमारस्य आयुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं व्यवहारसिद्ध्यर्थं नामाभिधास्यावहे' इति पितरौ सङ्कल्पयेताम् ॥ अथ सुवर्णादिपात्रे तण्डुलमापूर्य, हिरण्यशकलेन हरिद्राखण्डेन वा कुलदेवतानाम-मासनाम-नक्षत्रनाम-व्यावहारिकनामानीति क्रमेण नामचतुष्टयं विलिख्य, कुलदेवतानाम 'गणपतिभक्तः', मासनाम 'कृष्णः पुण्डरीकाक्षः' इति द्वादशनामानि चैत्रादि गणयित्वा तत्तन्मासनामानि विलिख्य, नक्षत्रनाम 'आश्विनः आपभरणः कार्तिकः, रौहिणः, मार्गशीर्ष, आर्द्रकः, पुनर्वसुः, तिष्यः, आश्लेषः, माघः, पूर्वाफल्गुनः, उत्तराफल्गुनः, हस्तः, चैत्रः, स्वातिः, विशाखः, अनूराधः, ज्यैष्ठः, मूलकः, पूर्वाषाढः, उत्तराषाढः, श्रावणः, श्रविष्ठः, शातभिषजः, पूर्वाप्रौष्ठपदः, उत्तराप्रौष्ठपदः, रैवतः' इति तत्तन्नक्षत्रनामानि विलिख्य, व्यावहारिकनाम 'शिवशर्मा' इति विलिख्य 'कुलदेवतानाम-मासनाम-नक्षत्रनाम-व्यावहारिकनामदेवताभ्यो नमः ध्यानं समर्पयामि' इत्यादि षोडशोपचारान् कृत्वा, दक्षिणार्थं सुवर्णं दत्वा 'ॐ यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ॥ ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः' इति पुष्पाञ्जलिं दत्वा, ब्राह्मणान् सम्पूज्य 'अस्य नामकरणकर्मणः पुण्याहं भवन्तो ब्रुवन्तु ॥ अस्मै नामकरणकर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥ अस्य नामकरणकर्मणः ऋद्धिं भवन्तो ब्रुवन्तु' ॥ एवं त्रिस्त्रिर्वाचयित्वा 'शिवं कर्मास्तु ॥ प्रजापतिः प्रीयताम्' इति वाचयित्वा ॥ ततः कर्ता कुलदेवतानाम्ना गणपतिभक्ताय स्वस्ति भवन्तो ब्रुवन्तु ॥ गणपतिभक्ताय स्वस्तीति प्रतिवचनम् ॥ मासनाम्ना कृष्णाय स्वस्ति भवन्तो ब्रुवन्तु ॥ कृष्णाय स्वस्तीति प्रतिवचनम् ॥ एवं अनन्तादि पुण्डरीकाक्षान्ताय स्वस्ति भवन्तो ब्रुवन्तु ॥ नक्षत्रनाम्ना आश्विनाय, आपभरणाय, कार्तिकाय, पुनर्वसवे, स्वातये, रैवताय ॥ शेषमूह्यम् ॥ व्यावहारिकाम्ना शिवशर्मणे स्वस्ति भवन्तो ब्रुवन्तु ॥ शिवशर्मणेऽस्त्वस्ति इति प्रतिवचनम् ॥ अथ मातापितरौ कुमारस्य दक्षकर्णे नामानि त्रिस्त्रिः कथयेताम् ॥ कुलदेवतानाम्ना

त्वं गणपतिभक्तोऽसि ॥ मासनाम्ना कृष्णोऽसि, चक्रयसि, हरिरसि ॥ शेषमूह्यम् ॥ नक्षत्रनाम्ना त्वमाश्विनोऽसि, पुनर्वसुरसि, स्वातिरसि, रैवतोऽसि ॥ शेषमूह्यम् ॥ व्यावहारिकनाम्ना त्वं शिवशर्माऽसि ॥ एवं त्रिस्त्रिर्वाचयित्वा, ततो ब्राह्मणहस्ते अक्षतान् दत्वा, स्वयं चोत्थाय कृताञ्जलिर्भूत्वा ॥ कुलदेवतानाम्ना अयं गणपतिभक्तो भवतः सर्वान् ब्राह्मणानभिवादयते ॥ आयुष्मान् भवतु गणपतिभक्तः इति प्रतिवचनम् ॥ मासनाम्ना कृष्णो भवतः सर्वान् ब्राह्मणानभिवादयते ॥ आयुष्मान् भवतु कृष्णः इति प्रतिवचनम् ॥ एवं अनन्तो भवत इत्यादि यथा सम्भवमूह्यम् ॥ नक्षत्रनाम्ना आश्विनो भवतः सर्वान् ब्राह्मणानभिवादयते ॥ आयुष्मान् भवत्वाश्विनः इति प्रतिवचनम् ॥ एवं आपभरणो भवतः, पुनर्वसुर्भवतः, स्वातिर्भवतः, रैवतो भवतः इत्यादि यथासम्भवमूह्यम् ॥ व्यावहारिकनाम्ना शिवशर्मा भवतः सर्वान् ब्राह्मणानभिवादयते ॥ आयुष्मान् भवतु शिवशर्मा इति प्रतिवचनम् ॥ नामकरणमुहूर्तः सुमुरूर्तोऽस्त्विवति भवन्तो ब्रुवन्तु ॥ सुमुहूर्तमस्तिति प्रतिवचनम् ॥ कृष्णोऽनन्त इति चैत्रादिक्रमेण पुंसाम् ॥ स्त्रीणां तु मार्गशीर्षादिकमेण ॥ 'लक्ष्मीः श्रीः कमला भद्रा सीता सत्या च रुक्मिणी ॥ माधवी चैत्रिका भूमिः तुलसी जाह्नवी तथा' इति स्त्रीणां द्वादशमासनामानि ॥ इति नामकरणतन्त्रम् ॥ छ ॥ अथोपनिष्क्रमणतन्त्रम् ॥ अथाग्रेणाग्निं अश्वत्थपर्णेषु हुतशेषं निदधाति 'ॐ भूर्भुवःसुवः' इति ॥ अथ मङ्गलघोषपुरस्सरं गृहाद्बहिर्देवतायतनानि गत्वा, तत्र चन्द्रार्कदिक्पालान् अभ्यर्च्य प्रार्थयेत् ॥ 'चन्द्रार्कयोर्दिगीशानां दिशां च गगनस्य च ॥ निक्षेपार्थमहं दद्मि ते मे रक्षन्तु सर्वदा ॥ अप्रमत्तं प्रमत्तं वा दिवारात्रमथापि वा ॥ रक्षन्तु सततं सर्वे देवाश्शक्रपुरोगमाः' इति प्रार्थ्य, त्रिवृदन्नेन ब्राह्मणान् सम्पूज्य, आशिषो वाचयित्वा ॥ त्रिवृदन्नलक्षणं तु 'ओदनस्याप्यपूपानां सक्तूनां सक्तुमिश्रितस्य च' इति ॥ अन्यच्च 'भक्ष्यं भोज्यं च पेयं चेत्येतत्समुदितं त्रिवृत्' इति द्विधा त्रिवृदन्नलक्षणमुक्तम् ॥ अथोपनिष्क्रमणकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा 'शिवं कर्मास्तु,

चित्रियाणि प्रीयन्ताम्' इत्युक्त्वा, देवताप्रदक्षिणनमस्कारान् शिशोः कारयित्वा, गृहं गत्वा, ब्राह्मणेभ्यो दक्षिणां दत्वा आशिषो वाचयेत्।। अथवा स्वगृहदेवतासमीपे सर्वं कारयित्वा, अस्योपनिष्क्रमणकर्मणः सुमुहूर्तमस्त्विवति वाचयित्वा, ब्राह्मणान् प्रणमेत्।। इत्युपनिष्क्रमणतन्त्रम्।। छ।। अथान्नप्राशनतन्त्रम्।। पूर्ववत् व्याहृत्या अश्वत्थपर्णेषु हुतशेषं निधाय, कुमारं मातुरुत्सङ्ग उपवेश्य, सुवर्णादिपात्रे समस्तभक्ष्यभोज्यादिसमेतं शाल्यन्नं निधाय, दधिमधुघृतजलैः समुदायुत्य, हिरण्येन कुमारं प्राशयति।। 'ॐ या जाता ओषधयो देवेभ्यस्त्रियुगं पुरा।। मन्दामि बभ्रूणामहꣳशतं धामानि सप्त च।। ॐ भूर्भुवःसुवरपां चौषधीनाꣳरसमन्नं प्राशयामि।। शिवास्ता आप ओषधयः सन्त्वनमीवास्ता आप ओषधयः सन्तु।।१।। ॐ शतं वो अम्भ धामानि सहस्रमुत वो रुहः।। अथा शतक्रत्वो यूयमिमं मे अगदं कृत।। भूर्भुवःसुवरपाम्०।।२।। ॐ पुष्पावतीः प्रसूवतीः फलिनीरफला उत।। अश्वा इव सजित्वरीर्वीरुधः पारयिष्णवः।। भूर्भुवःसुवरपाम्०।।३।। ॐ ओषधीरिति मातरस्तद्वो देवीरुप ब्रुवे।। रपाꣳसि विघ्नतीरितरपश्चातयमानाः।। भूर्भुवःसुवरपाम्०।।४।। ॐ अश्वत्थेवो निषदनं पर्णे वो वसतिः कृता।। गोभाज इत्किलासथ यत्सनवथ पुरुषम्।। भूर्भुवःसुवरपाम्०।।५।। ॐ यदहं वाजयन्निमा ओषधीर्हस्त आदधे।। आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा।। भूर्भुवःसुवरपाम्०।।६।।' इति षड्भिः प्राशयित्वा, मुखं प्रक्षाल्य, तूष्णीमाचमय्य 'अस्यान्नप्राशनकर्मणः सुमुहूर्तमस्त्विवति भवन्तो ब्रुवन्तु।। सुमुहूर्तमस्तु' इति वाचयित्वा, आशिषो वाचयित्वा, समापयेत्।। इत्यन्नप्राशनतन्त्रम्।। छ।। अथ कर्णवेधनतन्त्रम्।। अथाग्रेणाग्निं वेणुपर्णेषु हुतशेषं निदधाति 'ॐ समुद्राय वयुनायसिन्धूनां पतये नमः।। नदीनाꣳसर्वासां पित्रे जुहुता विश्वकर्मणे विश्वाहा मर्त्यꣳहविः' इति।। अथ ब्राह्मणान् सम्पूज्य, आशिषो वाचयित्वा, मम कुमारस्य करिष्यमाणकर्णवेधनकर्मणः पुण्याहं स्वस्ति

दक्षिणं कर्णं विद्ध्यति 'ॐ गायत्री त्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्या सह ॥ बृहत्युष्णिहा ककुत्सूचीभिः शिम्यन्तु त्वा' इति ॥ अथाप उपस्पृश्य, अथ वामकर्णं 'ॐ द्विपदा या चतुष्पदा त्रिपदा या च षट्पदा ॥ सच्छन्दा या च विच्छन्दाः सूचीभिः शिम्यन्तु त्वा' इति विध्वा, अथाप उपस्पृश्य, सक्तसूत्रेण शणसूत्रेण वा बध्नाति 'ॐ वरुणस्य स्कम्भनमसि' इति ॥ परेऽहनि विसर्जयति 'ॐ वरुणस्य स्कम्भसर्जनमसि' इति ॥ अथाप उपस्पृश्य, कर्णवेधनमुहूर्तः सुमुहूर्तोऽस्त्विवति वाचयित्वा, अशिषो वाचयेत् ॥ इति कर्णवेधनतन्त्रम् ॥ छ ॥ अथ चौलतन्त्रम् ॥ अथाग्रेणाग्निमुदुम्बरपर्णेषु हुतशेषं निदधाति 'ॐ नमो हिरण्यवाहवे सेनान्ये दिशां च पतये नमः' इति ॥ अथाग्नेः पश्चात्स्वयं प्राङ्मुख उपविश्य, कुमारं प्रत्यङ्मुखमुपरवेश्य, उष्णोदके शीतजलमानयति 'ॐ उष्णेन वायवुदकेनेह्यदितिः केशान्वप तु' इति ॥ ताभिरस्य शिर उनत्ति (आर्द्री करोतीत्यर्थः) 'ॐ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चसे' इति ॥ तत ऊर्ध्वाग्रान्दर्भाञ्छिरसि निदधाति 'ॐ ओषधे त्रायस्वैनम्' इति ॥ तान्दर्भान्केशैः सह वामहस्ते गृहीत्वा, दक्षिणेन क्षुरं गृहीत्वा, तदभिमन्त्रयते 'ॐ ज्योक्च सूर्यं दृशे' इति ॥ अथैनं स्वधितिं तिर्यञ्चं वामहस्तगृहीतेषु सदर्भकेशेषु निदधाति 'ॐ स्वधिते मैनꣳहिꣳसीः' इति ॥ अथ दर्भैः सह तान्केशाञ्छिनत्ति 'ॐ येनावपत्सविता क्षुरेण इति ॥ अथाप उपस्पृश्य, अथ प्रवपतः केशाननुमन्त्रयते 'ॐ मा ते केशाननुगाद्वर्च एतत् ॥ तथा धाता करोतु ते ॥ तुभ्यमिन्द्रो बृहस्पतिः ॥ सविता वर्च आदधात्' इति ॥ अथ नापितेनोप्तान् सर्वान्केशानेकीकृत्य दर्भस्तम्बे निदधाति 'ॐ तेभ्यो निधानं बहुधा व्यैच्छन्'

इति ॥ अथैनमुष्णोदकेनाप्लावयति 'ॐ बलं ते बाहुवोः सविता दधातु' इति ॥ अथैकशिखस्त्रिशिखः पञ्चशिखो वा यथाकुलाचारं शिखां विन्यस्य, स्वस्वगोत्रे यावन्तःप्रवरऋषयः तावत्यः शिखा वा (अष्टोत्तरशताधिकद्विसहस्रसङ्ख्याककेशाः शिखाप्रमाणमितिशास्त्रम्) ॥ अथ मङ्गलघोषैः सह उष्णोदकेन स्नापयित्वा, आच्छाद्यालङ्कृत्य, ब्राह्मणान् फलताम्बूलादिना सन्तोष्य, अस्य चौलकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, केशिनः प्रीयन्तामिति वाचयित्वा, 'अस्य चौलकर्मणः सुमुहूर्तमस्तित्वति भवन्तो ब्रुवन्तु' इति वाचयित्वा, जुषस्वनः समिधमित्याद्युत्तरपरिषेकादिकं प्रणीताविमोचनं ब्रह्मोद्वासनं च कृत्वा, 'कृतानां गर्भाधानादिकर्मणां साङ्गतासिद्ध्यर्थं नानागोत्रेभ्यो ब्राह्मणेभ्यो यथाशक्तिदक्षिणां दातुमहमुत्सृजे ॥ यथाशक्ति ब्राह्मणान् भोजयिष्ये' इत्युक्त्वा, 'यस्य स्मृत्या च नामोक्त्या तपो होमक्रियादिषु ॥ न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्' इत्युक्त्वा ॥ एभिः गर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्मभिः श्रीपरमेश्वरः प्रीयताम् ॥ एवमृतुसंवेशनादि वा गर्भाधानादि वा जातकर्मादि वा अतीतानुसारेण समानतन्त्रेण कुर्यात् ॥ इति प्रयोगमालायां गर्भाधानादिसमानतन्त्रप्रयोगः ॥ छ ॥

अथ क्रमप्राप्ताक्षरप्रारम्भविधिरभिधीयते ॥ जन्मतः पञ्चमे वर्षे उत्तरायणे कुम्भमासं वर्जयित्वा शुक्लपक्षे द्वितीया-तृतीया-पञ्चमी-सप्तमी-दशम्येकादशी-त्रयोदशीषु, गुरुशुक्रवारौ श्रेष्ठौ, रविवारे पूर्वाह्णे सोमवारेऽपराहेण च श्रेष्ठः, बुधवारो मध्यः, अश्विन्यार्द्रापुनर्वसुहस्तचित्रास्वात्यनूराधाश्रवणरेवतीषु नवतारासु, स्थिरराशयः श्रेष्ठाः, उभयराशयो मध्यमाः, अष्टमे सर्वग्रहवर्जिते पञ्चमे पापवर्जिते अक्षरप्रारम्भं कुर्यात् ॥ तथा च श्रीधरीये 'उदगते भास्वति पञ्चमेऽब्दे प्राप्तेऽक्षरस्वीकरणं शिशूनाम् ॥ सरस्वती विघ्नविनायकं च गुडोदनाद्यैरभिपूज्य कुर्यात्' ॥ नृसिंहः 'अक्षरस्वीकृतिः प्रोक्ता प्राप्ते पञ्चमहायने ॥ उत्तरायणगे सूर्ये कुम्भमासविवर्जिते' ॥ श्रीधरीये 'हस्तादित्यसमीरमित्रपुरुजित्पौष्णाश्विचित्राच्युतेष्वाराक्यंशदिनोदयादिरहिते राशौ स्थिरे चोभये ॥ पक्षे पर्वनिशाकरे प्रतिपदं रिक्तां विहायाष्टमीं षष्ठीमष्टमशुद्धभाजि भवने, प्रोक्ताऽक्षरस्वीकृतिः' ॥ मार्कण्डेयः 'वारे दिनेशभृगुपुत्रबृहस्पतीनां विद्वानसौ भवति यो हि विमूढबुद्धिः ॥ चन्द्रे च चन्द्रतनये च कृशं च सर्वं विघ्नो भवेदवनिजे रविजे विनाशः' ॥ वसिष्ठः 'दिवसांशोदया वर्ज्या यत्नेन कुजसौरयोः ॥ श्रेष्ठाः सितज्ञजीवानां मध्यमाश्चन्द्रसूर्ययोः ॥ रविवारे च पूर्वाह्णे विद्यारम्भो विशिष्यते ॥ चन्द्रवारेऽपराह्णे च विद्यागुर्वी विधीयते ॥ रात्रौ च वर्जयेन्नित्यं सन्ध्ययोश्च विशेषतः' इति ॥ छ ॥

अथ प्रयोगः ॥ कर्ता शुचौ समे देशे गोमयेनोपलिप्य सैकतं स्थण्डिलं कृत्वा, पालाशदण्डेन मृदं खात्वा, स्थण्डिलोपरि निधाय, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'मम कुमारस्य समस्तविद्याप्राप्त्यर्थं अक्षरप्रारम्भं

करिष्ये ॥ तदङ्गत्वेन निर्विघ्नतासिद्ध्यर्थं गणपतिपूजां करिष्ये' इति संकल्प्य, गणपतिं गुरुं च सम्पूज्य, स्थण्डिलमध्ये सरस्वतीं पूजयेत् ॥ 'ॐ भुवनमातः सर्ववाङ्मयरूपे आगच्छागच्छ' इति मन्त्रेणावाह्य, प्रणवेन अर्ध्यपाद्याचमनगन्धपुष्पधूपदीपांश्च दत्वा, पायसं गुडोदनं च निवेद्य, प्रदक्षिणनमस्कारान् कृत्वा, गुरुं वस्त्राभरणादिना सन्तोष्य, सरस्वतीविघ्नेशाचार्यांन्त्रिः प्रदक्षिणं कृत्वा, आवाहनक्रमेण देवतामुद्वास्य, गुरुं प्राङ्मुखं उपविश्य, कुमारं प्रत्यङ्मुखमुपवेश्य, बिन्दुरहितप्रणवेन सह 'ॐ नमः शिवाय' इति षडक्षरमुपदिश्य, अकारादिक्षकारान्तं पञ्चाशद्वर्णानुपदिश्य (वाचयित्वेर्थः), तथैव लेखयित्वा, ततः कुमारं प्राङ्मुखमुपवेश्य, लिखितं त्रिर्वाचयित्वा, लड्डुकादिभिर्ब्राह्मणान् सन्तोषयेत् ॥ इत्यक्षरप्रारम्भप्रयोगविधिः समाप्तः ॥ छ ॥

अथोपनयनम् ॥ अथाहुतो गर्भाष्टमेषु ब्राह्मणमुपनयीतेति सूत्रम् ॥ वसन्ते ब्राह्मणमुपनयीतेति च ॥ सिङ्गाभट्टीये 'गर्भात् आरभ्य षष्ठे सप्तमे अष्टमेष्वेवावतिष्ठते कुमारस्य व्रतसामर्थ्यात्' इति ॥ कात्यायनस्तु 'जन्मादि पञ्चमाब्दादि दशाब्दान्तं यथाक्रमम् ॥ ब्रह्मवर्चसमायुष्यं तेजश्चान्नाद्यमेव च ॥ श्रियं पशून्नीयमानः कुर्याद्विप्रः सुतं द्विजम्' इति ॥ निर्णयतिन्धौ आश्वलायनः 'गर्भाष्टमेऽष्टमे वाब्दे पञ्चमे सप्तमेऽपि वा ॥ द्विजत्वं प्रान्पुयाद्विप्रो वर्षे त्वेकादशे नृपः' इति ॥ मनुः 'ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे ॥ राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोऽष्टमे' ॥ विष्णुः 'षष्ठेतु धनकामस्य विद्याकामस्य सप्तमे ॥ अष्टमे सर्वकामस्य नवमे कान्तिमिच्छतः' ॥ आपस्तम्बः 'गर्भाष्टमेषु ब्राह्मणमुपनयीत' इति ॥ गर्भाष्टमेष्वित्यत्र बहुवचनं गर्भषष्ठसप्तमयोः प्राप्त्यर्थमिति सुदर्शनभाष्ये व्याख्यातम् ॥ अथ काम्यानि 'सप्तमे ब्रह्मवर्चसकाममष्टम आयुष्कामं नवमे तेजस्कामं दशमेऽन्नाद्यकाममेकादश इन्द्रियकामं द्वादशे पशुकामं त्रयोदशे मेधाकामं चतुर्दशे पुष्टिकामं पञ्चदशेऽभ्रातृव्यवन्तꣳषोडशे सर्वकामं आषोडशाद्ब्राह्मणस्य नात्ययः' इति गृह्यसूत्रम् ॥ अत एव कालातिक्रमे दोष उक्तो ज्योतिर्निबन्धे 'अग्रजा बाहुजा वैश्याः स्वावधेरूर्ध्वमब्दतः ॥ अकृतोपनयाः सर्वे वृषला इव ते स्मृताः' इति ॥ हेमाद्रौ 'माघादिषु च मासेषु मौञ्जी पञ्चसु शस्यते' इति ॥ वराहः 'न कदाचिद्दशर्क्षेषु बानोरार्द्राप्रवेशनात् ॥ विवाहो देवतानां च प्रतिष्ठा चोपनायनम्' इति ॥ अथ जन्ममासादिनिषेधः 'न जन्मधिष्ण्ये न च जन्ममासे न जन्मकालीनदिने विदध्यात् ॥ ज्येष्ठे न मासि प्रथमस्य सूनोस्तथा सुतायां अपि मङ्गलानि ॥ जातं दिनं दूषयते वसिष्ठो ह्यष्टौ च गर्गौ नियतं दशाऽत्रिः ॥ जातस्य पक्षं किल भागुरिश्च शेषाः प्रशस्ताः खलु जन्ममासि' ॥ राजमार्ताण्डः 'जन्ममासे तिथौ भे च विपरीतदले सति ॥ कार्यं मङ्गलमित्याहुर्गर्गभार्गवशौनकाः ॥ जन्ममासनिषेधेऽपि दिनानि दश वर्जयेत् ॥ आरभ्य जन्मदिवसाच्छुभाः स्युस्तिथयोऽपरे' ॥ सङ्ग्रहे 'अन्नप्राशनमुद्वाहश्चौलकर्मौपनायनम् ॥ जन्ममासेषु वर्ज्यं स्यात्कलिङ्गमगधे तथा ॥ गृहप्रवेशसीमन्तपट्टबन्धव्रतानि च ॥ जन्ममासेषु वर्ज्यं स्यान्नर्मदातट उत्तरे ॥ नर्मदादक्षिणे देशे जन्ममासः शुभप्रदः ॥ अन्यदेशे न शुभदं बहूनां सम्मतंत्विदम्' ॥ निर्णयसिन्धौ 'शुद्धिर्नैव गुरोर्यस्य वर्षे प्राप्तेऽष्टमे यदि ॥ चैत्रे मीनगते भानौ तस्योपनयनं शुभम् ॥

जन्मभादष्टमे सिंहे नीचे वा शुत्रभे गुरौ ।। मौञ्जीबन्धः शुभः प्रोक्तः चैत्रे मीनगते रवौ' इति ।। वसिष्ठः 'नैमित्तिकमनध्यायं कृष्णे च प्रतिपद्दिनम् ।। मेखलाबन्धने शस्तं चौले वेदव्रतेष्वपि ।। कृष्णपक्षे चतुर्थी च सप्तम्यादि दिनत्रयम् ।। त्रयोदशी चतुष्कं च अष्टावेते गलग्रहाः' इति ।। नारदः 'विनर्तुना वसन्तेन कृष्णपक्षे गलग्रहे ।। अपराह्णे चोपनीतः पुनस्संस्कारमर्हति' ।। व्यासः 'या चैत्रवैशाखसितातृतीया माघस्य स[1]प्तम्यथ फाल्गुनस्य ।। कृष्णे तृतीयोपनये प्रशस्ताः प्रोक्ता भरद्वाजमुनीन्द्रमुख्यैः' ।। पारिजाते गर्गः=ज्येष्ठमासे विशेषेण सर्वज्येष्ठस्य चैव हि ।। उपनीतस्य पुत्रस्य जडत्वं मृत्युरेव च' ।। कालविधाने 'शुक्ले पक्षे निर्मले शीतभानौ शुक्रे जीवे चाम्बरे दृश्यमाने ।। शाखाधीशे शक्तियुक्तेऽनुकूले ऋक्षे राशौ मौञ्जिबन्धः शिशोः स्यात् ।। द्वितीया पञ्चमी षष्ठी सप्तमी दशमी तथा ।। त्रयोदशी तृतीया च शुक्ले श्रेष्ठाः प्रचोदिताः ।। द्वादश्येकादशी चैव मध्यमे च तिथी इमे ।। मध्यमे च प्रशंसन्ति चन्द्रे च बलसंयुते ।। कृष्णे चैव प्रशस्ताः स्युस्तिथय[2]श्चोपनायने ।। गुरुशुक्रबुधानां तु वाराः श्रेष्ठतमाः स्मृताः ।। मध्यमः सोमवारस्तु सूर्यवारश्च मध्यमः ।। वारौ मन्दारयोर्वर्ज्यौ कृष्णे वर्ज्यो निशापतेः ।। अस्तं गतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनि' ।। गुरुः 'त्रिषूत्तरेषु रोहिण्यां हस्ते मैत्रे च वासवे ।। त्वाष्ट्रे सौम्यपुनर्वस्वोः प्रशस्तं चोपनायनम् ।। वारुणे वैष्णवे पुष्ये वायव्ये प्रौष्ठपद्यपि ।। आश्विने षट्सु भेषूक्तं मध्यमं चैव पौष्णभम्' ।। माधवीये 'मूको विद्वान् बोधवान् वेदवादी शिल्पी धीमान् लब्धवाणिज्यवृत्तिः ।। पापी पूज्यः शूद्रगो राजदूतः शास्त्रार्थज्ञः स्याच्च मेषादिलग्ने' ।। श्रीधरीये 'असत्फलप्रदे राशावपि लग्ने शुभेक्षिते ।। शुभयुक्तेऽथवा तेषां शुभमेव फलं विदुः' ।। इत्युपनयनकालनिर्णयः ।। छ ।। अथ कर्तृनिर्णयः ।। सिङ्गाभट्टीये 'उपनयादिस्नानान्तकर्मस्वभ्युदयक्रियाम् ।। पिता कुर्यात्तदूर्ध्वं तु परिणेता यथाविधि ।। नान्दीश्राद्धं पिता कुर्यात्पुत्रीपुत्रविवाहयोः ।। उत्तरेषु विवाहेषु स्वयं कुर्यात्तु नान्दिकम्' ।। अथाऽविद्यमानपितृकस्य देवतानियम उक्तः ।। स्मृतौ 'असगोत्रः सगोत्रो वा य आचार्य उपानयेत् ।। तदोपनेयपित्रादीनुद्दिश्याऽभ्युदयं चरेत् ।। कन्यकाया अयं मार्गो मुनिभिः परिकीर्तितः' ।। अन्ये तु 'उपनीतौ तु पित्रादेरभावेऽन्यं निवेदयेत् ।। आचार्यपितरस्तस्य वृद्धिश्राद्धे तु देवताः' ।। 'पितैवोपनयेत्पुत्रं तदभावे पितुः पिता ।। तदभावे पितृभ्राता तदभावेऽपि सोदरः' ।। प्रयोगरत्ने वृद्धमनुः 'पिता पितामहो भ्राता ज्ञातयो गौत्रजाऽग्रजाः ।। उपानयेऽधिकारी स्यात्पूर्वाभावे परःपरः' इति ।। इति कर्तृनिर्णयः ।।छ ।।

अथोपनयनप्रयोगः ।। जन्मतः पञ्चमे षष्ठे सप्तमेऽष्टमे वा वर्षे उपनयनकालः ।। तत्र गर्भाष्टमो मुख्यः, स्वराशिचन्द्रराश्यपेक्षया द्वितीय-पञ्चम-सप्तम-नवमैकादशेषु वा गुरौ विद्यमाने गुरुशुकास्तरहिते उत्तरायणे जन्ममासं वर्जयित्वा, जन्मपक्षं वा द्वितीया-तृतीया-पञ्चमी-शुक्लषष्ठी-सप्तमी-दशमी-शुक्लैकादशी-द्वादशी-त्रयोदशीषु चन्द्रे बलयुते कृष्णपक्षे वा जन्मराशि-जन्मलग्न-तत्काललग्न-चन्द्रराशीनां चाष्टमे शुद्धे भानोरार्द्राप्रवेशानन्तरं वर्जयित्वा, अनध्यायरहिते ।। चैत्र-वैशाखयोः शुक्लतृतीया माघशुक्लसप्तमी इत्यनध्याया अपि ग्राह्याः, अन्या वर्ज्याः, फाल्गुनकृष्णतृतीयाऽतिश्रेष्ठा, आदित्य-चन्द्र-बुध-गुरु-शुक्रवारेषु रोहिणी-मृगशिरः-पुनर्वसूत्तरात्रयानुराधा-धनिष्ठा इति दशताराः श्रेष्ठाः, अश्विनी-पुष्य-स्वाति-श्रवण-शततारा-रेवत्या इति षट् तारा मध्यमाः, वृषभ-मिथुन-कर्कटक-

---

[1] सप्तमीति = सितेत्यनुषज्यते शुक्लसप्तमीत्यर्थः ।।

कन्याराशयः श्रेष्ठाः, कुम्भ-सिंहौ मध्यमौ, तावेव शुभयोग-शुभदृष्टियुक्तौ चेच्छ्रेष्ठौ, इत्युक्तकाले उपनयनं कुर्यात् ॥ उपनीत्या सह चौलकरणपक्षे चौलाङ्गक्षौरं तन्त्रेण कृत्वा, उपनयनाङ्गक्षौरमेव कुर्यात् ॥ कर्ता उपनयनात्पूर्वेद्युः प्रातः स्नानादिनित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, भद्रासने स्वयं प्राङ्मुख उपविश्य पत्नीकुमारौ स्वदक्षिणत उपवेश्य, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य, मम कुमारस्य श्वः करिष्यमाणोपनयनाङ्गतयाविहितं नान्दीसमाराधनं हिरण्येन करिष्ये इति सङ्कल्प्य ॥ तदादौ निर्विन्घतासिद्ध्यर्थं गणपतिपूजां स्वस्तिपुण्याहवाचनं करिष्ये इत्युक्त्वा, सुमुखश्चेत्यादिना गणपतिं सम्पूज्य, पुण्याहं वाचयित्वा, नान्दीमुखाः पितरः प्रीयन्तामिति वाचयित्वा, प्रोक्षणान्तं कृत्वा, नान्दीश्राद्धं कृत्वा, तस्यामेव रात्रौ प्रदोषान्ते उदकशान्ति-प्रतिसरबन्धौ च कुर्यात् ॥ अथ यदि पितृभ्रातृ-व्यतिरिक्तो नान्दीश्राद्धकर्ता तदा, अस्य कुमारस्य मातृपितामहीप्रपितामह्यः, अस्य कुमारस्य पितृपितामहप्रपितामहाः, अस्य कुमारस्य मातामहमातुःपितामहमातुःप्रपितामहाः नान्दीमुखा इत्यादि ॥ तस्यामेव रात्रौ कर्ता प्राणानायम्य, 'मम कुमारस्य सर्वाऽमङ्गलनिरसनार्थं समस्तमाङ्गल्यप्राप्त्यर्थं श्वः करिष्यमाणोपनयनाङ्गतया विहितावुदकशान्ति-प्रतिसरबन्धौ समानतन्त्रेण करिष्ये' इति सङ्कल्प्य तत्कृत्वा, अथापरेद्युः कर्ता सपत्नीकः संस्कार्येण सह प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, देहशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि च कृत्वा, पूर्वेद्युरसम्भवे सद्यो वा नान्द्युदकशान्तिप्रतिसरबन्धस्नानपवनादिकं कृत्वा, पुण्याहं वाचयेत् ॥ कर्ता प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य उपनयनाख्यं कर्म कर्तुं तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजनं पुण्याहवाचनं च करिष्ये' इति सङ्कल्प्य, 'अस्योपनयनकर्मणः पुण्याहं - अस्मै उपनयनकर्मणे स्वस्ति - अस्योपनयनकर्मणः ऋद्धिं - भवन्तो ब्रुवन्तु' एवं त्रिस्त्रिः वाचयित्वा 'शिवं कर्मास्तु मेधाकरेन्द्रः प्रीयताम्' इति वाचयित्वा, प्रोक्षणान्तं कृत्वा, उपनयनप्रधानसङ्कल्पं

कुर्यात् ।। कर्ता आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य, 'मम कुमारस्य द्विजत्वसिद्ध्या वेदाध्ययनाधिकारसिद्ध्यर्थं उपनयनाख्यं कर्म करिष्ये' इति सङ्कल्प्य, पुनः कर्ता 'मम गायत्रीप्रदानयोग्यतासिद्ध्यर्थं सहस्रसङ्ख्याकगायत्रीजपं करिष्ये' इति सङ्कल्प्य, पूर्वेद्युः सद्यो वा तत्कृत्वा, कुमारं ब्रह्मचारिभिः सुवासिनीभिश्च सह भोजयित्वा, तस्य चौलवत्तूष्णीं केशानोप्येतीति सूत्रात् ।। तूष्णीमुष्णास्वप्सु शीता आनीय ताभिः तूष्णीं प्रत्यङ्मुखमुपविष्टस्य शिशोः शिर उनत्ति ।। तूष्णीमूर्ध्वाग्रं बर्हिरनुच्छ्रित्य, तूष्णीं क्षुरं गृहीत्वा, तूष्णीमादित्यं दर्शयित्वा, तूष्णीं दर्भैः सह केशाश्छित्वा, प्रवपतः केशान् तूष्णीमुपस्पृश्य, अथ नापितेनोप्तान् केशान् तूष्णीमेव दर्भस्तम्बे निदध्यात् ।। इति सर्वं तूष्णीं कृत्वा, स्नापयित्वा, अथ मण्डपवेदिकामध्ये तण्डुलराशौ दर्भेषु शुचिवाससं बद्धशिखं कुमारं प्राङ्मुखमुपवेश्य, तूष्णीं द्विराजमय्य, स्वयमाचमनप्राणायामौ कृत्वा मम कुमारस्य द्विजत्वसिद्धि द्वारा वेदाध्ययनाधिकारसिद्ध्यर्थं सूत्रप्रदानं करिष्ये इति संकल्प्य गणपतिं संपूज्य, पुनः - 'मम कुमारस्य कामचारकामवादकामभक्षणदोषपरिहारद्वारा श्रीपरमेश्वरप्रीत्यर्थं कृच्छ्रत्रयं करिष्ये' अशक्तश्चेत्तत्प्रत्यान्मायरूपेण करिष्य इति सङ्कल्प्य, तत्प्रत्यान्मायगोत्रयं तन्मूल्यं वा ब्रह्मणाय दत्वा 'मम कुमारस्योपनयनाङ्गतया विहितं श्रद्धामेधाप्रज्ञासिद्ध्यर्थं फलताम्बूलगोपीचन्दनयज्ञोपवीतदानानि करिष्ये' इति सङ्कल्प्य, फलताम्बूलगोपीचन्दन-यज्ञोपवीतानि च ब्राह्मणेभ्यो ब्रह्मचारिभ्यश्च दत्वा, तत आचार्यः 'ओङ्कारोऽग्निश्च नागश्च सोमः पितृप्रजापती ।। वायुः सूर्यो विश्वेदेवा इत्येते तन्तुदेवताः' इत्युपवीतं तत्तद्देवतात्मकं ध्यात्वा, ता आवाह्य, षोडशोपचारान् कृत्वा, आपोहिष्ठेति तिसृभिः प्रोक्ष्य, गायत्र्या अभिमन्त्र्य, उद्वयंतमसस्परीत्यादित्यं दर्शयित्वा, स्योनापृथिवीति भूमौ निधायं, देवस्यत्वेत्यादाय स्वदक्षिणभागस्थितं कुमारं यज्ञोपवीतं प्रतिमुञ्चन्वाचयति 'ॐ यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् ।। आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः' इति धारयेत् ।। उपविश्यैव यज्ञोपवीतधारणम् ।। तदुक्तं सङ्ग्रहे 'तिलकं ब्रह्मसूत्रं च पाद्यमाचमनीयकम् ।। तिष्ठन्नपि यदा कुर्यात्सद्यः शूद्रो भवेद्द्विजः इति ।। अथ कुमारं द्विराचमय्य, दक्षिणे हस्ते गृहीत्वा, मङ्गलघोषपुरस्सरं

स्वस्तिपन्थामनुचरेमेत्युपनयनवेदिकामानयति ॥ ततः आचार्यो माणवकमग्नेः पश्चादात्मनो दक्षिणत उपवेश्य, द्विराचम्य देवयजनोल्लेखनप्रभृति लौकिकाग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम कुमारस्य द्विजत्वसिद्धिद्वारा वेदाध्ययनाधिकारसिद्ध्यर्थमुपनयनहोमं करिष्ये' ॥ यमलयोस्तु स्थण्डिलादि सर्वं पृथगेव कुर्यात्, न त्वेकतन्त्रेण ॥ 'उपनयनहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ जातवेदो नामाग्निः मेधाकरेन्द्रो देवता चरुर्हविरग्निः स्विष्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि, एवं साङ्गेन कर्मणा सद्यो यक्ष्ये, तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य, अन्वाधानं कृत्वा, प्राकृतपात्राण्यासाद्य ॥ अश्मानं दण्डमजिनं वस्त्रं मौञ्जी समिद्दलम् ॥ व्रतार्थं समिधश्चेति सादयेत्सहपात्रकैः ॥ एतत्सर्वं सकृदेवासाद्य, आप्रणीताभ्यः कृत्वा ॥ ॐ देवस्य त्वा ... हस्ताभ्यां मेधाकरेन्द्राय जुष्टं निर्वपामीति त्रिर्निरूप्य तूष्णीं चतुर्थम् ॥ ॐ देवस्य त्वा ... हस्ताभ्यां मेधाकरेन्द्राय वो जुष्टं प्रोक्ष्यामीति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य, आज्यसंस्काराद्यग्निमुखान्तं कृत्वा, पालाशीꣳसमिधमाज्येनाङ्क्त्वा अभ्याधापयन् वाचयति ॥ ॐ आयुर्दा देवजरसं गृणानो घृतप्रतीको घृतपृष्ठो अग्ने ॥ घृतं पिबन्नमृतं चारु गव्यं पितेव पुत्रं जरसे नयेमꣳस्वाहा ॥ आयुर्दाऽग्नय इदम् ॥ अथैनमुत्थाप्य, अग्न्याचार्ययोर्मध्ये नीत्वा, अग्नेरुत्तरतः स्थितमश्मानमास्थापयति 'ॐ आतिष्ठेममश्मानमश्मेव त्वꣳस्थिरो भव ॥ अभितिष्ठ पृतयतः सहस्व पृतनायतः' इति ॥ यथागतं पुनरानीय अथाहतं वास उदक्परिधापयन् वाचयति ॥ तल्लक्षणं प्रचेतसोक्तम् 'ईषद्धौतं नवं श्वेतं सदशं यन्न धारितम् ॥ अहतं तद्विजानीयात्सर्वकर्मसु पावनम्' इति ॥ अन्यच्च 'सदशं नवमाधौतं वासः सृष्टं स्वयम्भुवा ॥ शस्त माङ्गलिके धृत्वा तावत्कालं न सर्वदा' इति ॥ ॐ या अकृन्तन्नवयन्या अतन्वत याश्च देवीरन्तानभितो ददन्त ॥ तास्त्वा देवीर्जरसा

संव्ययन्त्वायुष्मानिदं परिधत्स्व वासः' इति ॥ परिहितमनुमन्त्रयते 'ॐपरिधत धत्त वाससैनꣳशतायुषं कृणुत दीर्घमायुः ॥ बृहस्पतिः प्रायच्छद्वास एतत्सोमाय राज्ञे परिधातवाउ ॥ जरां गच्छासि परिधत्स्व वासो भवाकृष्टीनामभिशस्ति पावा ॥ शतं च जीव शरदः सुवर्चा रायश्च पोषमुप संव्ययस्व ॥ परीदं वासो अधिधाः स्वस्तये भूरापीनामभिशस्ति पावा ॥ शतं च जीव शरदः पुरूचीर्वसूनि चार्यो विभजासि जीवन्' इति ॥ अथैनं मौञ्जीं मेखलां त्रिवृत्तां त्रिःप्रदक्षिणं परिव्ययन् वाचयति 'ॐ इयं दुरुक्तात्परिबाधमाना शर्म वरूथं पुनती न आगात् ॥ प्राणापानाभ्यां बलमाभरन्ती प्रिया देवानाꣳसुभगा मेखलेयम्' इति ॥ परिवीतमनुमन्त्रयते 'ॐ ऋतस्य गोप्त्री तपसः परस्पी घ्नती रक्षस्सहमाना अरातीः ॥ सा नः समन्तमनुपरेहि भद्रया भर्तारस्ते मेखले मारिषाम' इति ॥ अथ नाभिदेशे ग्रन्थिं करोति 'ॐ प्राणानां ग्रन्थिरसि समाविस्रस' इति ॥ अथास्मा अजिनं त्र्यङ्गुलविस्तारं चर्मत्रितयसहितं चतुश्छिद्रयुक्तं दृढसूत्रं दक्षिणावृत्तलोमकं यज्ञोपवीतवत्प्रतिमुञ्चन् वाचयति 'ॐ मित्रस्य चक्षुर्धरुणं बलीयस्तेजो यशस्वि स्थविरꣳसमिद्धम् ॥ अनाहनस्यं वसनं जरिष्णु परीदं वाज्यजिनं दधेहम्' इति ॥ अथास्मै पालशदण्डं शिरस्सम्मितमव्रणं सत्वचं मृदुदण्डं सम्प्रयच्छति ॥ 'ॐ सोमोऽसि सोमपं मा करु' इति पालाशम् ॥ बैल्वदण्डं चेत् 'ॐ ब्रह्मवर्चसमसि ब्रह्मवर्चसायत्वा' इति ॥ दण्डप्रमाणमाह व्यासः 'शिरोललाटनासाग्रप्रमाणं वर्णतः क्रमात् ॥ याज्ञिकस्य च वृक्षस्य दण्डा अर्हन्ति धर्मतः' ॥ उक्तदण्डाभावे मनुः 'एतेषामप्यभावे तु सर्वेषां सर्वयाज्ञियाः' इति ॥ गौतमोऽपि 'याज्ञियो वा सर्वेषाम्' इति ॥ वार्क्ष्यमिति बोधायनसूत्रम् ॥ 'ॐ अहं वृक्षस्प रेरिवा ॥ कीर्तिः पृष्ठं गिरेरिव ॥ ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि ॥

इति गुरुं प्रत्याह ॥ अथैनं दक्षिणे हस्ते गृह्णाति 'ॐ यस्मिन्भूतं च भव्यं च ॥ सर्वे लोकाः समाहिताः ॥ तेन गृह्णामि त्वामहं मह्यं गृह्णामि त्वामहं ॥ प्रजापतिना त्वा मह्यं गृह्णामि नारायणशर्मन्' इति ॥ अथैन देवताभ्यः परिददाति 'ॐ देवेभ्यस्त्वा परिददामि ॥ विश्वेदेवेभ्यस्त्वा परिददामि ॥ विश्वेभ्यस्त्वा देवेभ्यः परिददामि ॥ सर्वेभ्यस्त्वा देवेभ्यः परिददामि ॥ सर्वाभ्यस्त्वा देवताभ्यः परिददामि नारायणशर्मन्' ॥ अथैन ज्योतिर्विदुक्ते सुलग्ने कृपादृष्ट्याऽनुगृहीतं आत्मनोऽङ्क सम्मुखमानयति 'देवस्य त्वा ... हस्ताभ्यामुपनये नारायणशर्मन्' इति ॥ अथ किञ्चित्कालं समदृष्ट्या सम्यङ्निरीक्षेत (उप = समीपे नयनमुपनयनं इत्युपनयशब्दार्थः) ॥ अथ कुमारः स्वयमेव पक्वाज्जुहोति ॥ ॐ यश्च्छन्दसामृषभो विश्वरूपश्च्छन्दोभ्योऽध्यमृतात्सम्बभूव ॥ समेन्द्रो मेधया स्पृणोत्वमृतस्य देव धारणोभूयासों३यश्च्छन्दसा ... धारणो भूयासꣳस्वाहा ॥ मेधाकरेन्द्रायेदम् ॥ उपरिष्टात् स्रुवाहुतिं हुत्वा, पुनर्दर्व्यामुपस्तीर्य स्विष्टकृतमुत्तरार्धात्सकृदवदाय, द्विरभिघार्यान्तःपरिधौ निधाय, पश्चावत्तिनां त्रिरभिघारणम् ॥ अथ आज्याहुतीरुपजुहोति ॥ ॐ क्षेत्रियै त्वा निर्ऋत्यै त्वा ॥ द्रुहो मुञ्चामि वरुणस्य पाशात् ॥ अनागसं ब्रह्मणे त्वा करोमि ॥ शिवे ते द्यावापृथिवी उभे इमे स्वाहा ॥ ब्रह्मणे द्यावापृथिवीभ्यामिदम् ॥१॥ ॐ शं ते अग्निस्सहाद्भिरस्तु ॥ शं द्यावापृथिवी सहौषधीभिः ॥ शमन्तरिक्षꣳसह वातेन ते ॥ शं ते चतस्रः प्रदिशो भवन्तु स्वाहा ॥ अग्नये द्यावापृथिवीभ्यामन्तरिक्षाय दिग्भ्य इदम् ॥२॥ ॐ या दैवीश्चतस्रः प्रदिशः ॥ वातपत्नीरभिसूर्यो विचष्टे ॥ तासां त्वा जरस आदधामि ॥ प्रयक्ष्म

एतु निर्ऋतिं पराचैः स्वाहा ॥ दिग्भ्यो वातपत्नीभ्य इदम् ॥३॥ ॐ अमोचि यक्ष्माद्दुरितादवर्त्यै ॥ द्रुहः पाशान्निर्ऋत्यै चोदमोचि ॥ अहा अवर्तिमविदत्स्योनम् ॥ अप्यभूद्भद्रे सुकृतस्य लोके स्वाहा ॥ निर्ऋत्या इदम् ॥४॥ ॐ सूर्यमृतं तमसो ग्राह्या यत् ॥ देवा अमुञ्चन्नसृजन्व्येनसः ॥ एवमहमिमं क्षेत्रियाज्जामि श॒ꣳसात् ॥ द्रुहो मुञ्चामि वरुणस्य पाशात्स्वाहा ॥ देवेभ्य इदम् ॥५॥ ॐ बृहस्पते युवमिन्द्रश्च वस्वः ॥ दिव्यस्येशाथे उत पार्थिवस्य ॥ धत्तꣳ रयिꣳस्तुवते कीरयेचित् ॥ यूयं पात स्वस्तिभिः सदानः स्वाहा ॥ बृहस्पतय इन्द्रायेदम् ॥६॥ अथ ब्रह्मसूक्तम् ॥ ॐ ब्रह्म जज्ञानं प्रथमं पुरस्तात् ॥ विसीमतः सुरुचो वेन आवः ॥ सबुध्निया उपमा अस्य विष्ठाः ॥ सतश्च योनिमसतश्च विवः स्वाहा ॥ ब्रह्मण इदम् ॥१॥ ॐ पिता विराजामृषभो रयीणाम् ॥ अन्तरिक्षं विश्वरूप आविवेश ॥ तमर्कैरभ्यर्चन्ति वत्सम् ॥ ब्रह्म सन्तं ब्रह्मणा वर्धयन्तः स्वाहा ॥ ब्रह्मण इदम् ॥२॥ ॐ ब्रह्म देवानजनयत् ॥ ब्रह्म विश्वमिदं जगत् ॥ ब्रह्मणः क्षत्रं निर्मितम् ॥ ब्रह्म ब्राह्मण आत्मना स्वाहा ॥ ब्रह्मण इदम् ॥३॥ ॐ अन्तरस्मिन्निमे लोकाः ॥ अन्तर्विश्वमिदं जगत् ॥ ब्रह्मैव भूतानां ज्येष्ठम् ॥ तेन कोऽर्हति स्पर्धितस्वाहा ॥ ब्रह्मण इदम् ॥४॥ ॐ ब्रह्मन् देवास्त्रयस्त्रिꣳशत् ॥ ब्रह्मन्निन्द्रप्रजापती ॥ ब्रह्मन् ह विश्वा भूतानि ॥ नावीवान्तस्समाहिताः स्वाहा ॥ ब्रह्मण इदम् ॥५॥ ॐ चतस्र आशाः प्रचरन्त्वग्नयः ॥ इमन्नो यज्ञन्नयतु प्रजानन् ॥ घृतं पिन्वन्नजरꣳ सुवीरम् ॥ ब्रह्म समिद्भवत्याहुतीनाꣳ स्वाहा ॥ घृतं पिन्वतेऽग्नयेऽजराय ब्रह्मण इदम् ॥६॥ अथ स्विष्टकृदादिपरिधिप्रहरणान्तं कृत्वाऽग्रेणाग्निं पालाशपर्णेषु हुतशेषं निदधाति ॥ 'ॐ नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ॥ अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन्नमः' इति बलिं दत्वा,

विहितं सावित्रीव्रतोपक्रमहोमं करिष्ये, सावित्रीव्रतोपक्रमहोमः कर्म अपूर्वं तन्त्रं समुद्भवो नामाग्निः अग्निवाय्वादित्यव्रतपतयो देवताः आज्याक्तपालाशसमिधो हविः सद्यो यक्ष्ये ॥ तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य, अन्वाधानादिकं कृत्वा, स्रुक्स्रुवमाज्यस्थालीं प्रोक्षणीं चतस्रस्समिधः इति आसाद्य, आज्यसंस्कारान्तं कृत्वा, परिषिच्य अलङ्कृत्य, व्याहृतीर्हुत्वा, आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्राः अप्रतिशुष्काग्रा घृताऽन्वक्ता अभ्याधापयन् वाचयति ॥ याज्ञीयवृक्षसमिधो वा ॥ ॐ अग्ने व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳस्वाहा ॥ अग्नये व्रतपतय इदम् ॥ ॐ वायो व्रतपते सावित्रं व्रतं० ॥ वायवे व्रतपतय इदम् ॥ ॐ आदित्य व्रतपते सावित्रं व्रतं० ॥ आदित्याय व्रतपतय इदम् ॥ ॐ व्रतानां व्रतपते सावित्रं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यताꣳस्वाहा ॥ व्रतानां व्रतपतय इदम् ॥ व्याहृतीर्हुत्वा, उत्तरपरिषेकादिकं कुर्यात् ॥ अथाग्नेः पश्चाद्दर्भेषु उदगग्रं कूर्चं निधाय, तस्मिन्प्राङ्मुख आचार्य उपविशति 'ॐराष्ट्रभृदस्याचार्या सन्दीमात्वद्योषम्' इति ॥ तस्याग्रे कुमारो दर्भेषु प्रत्यङ्मुख उपविश्य, स्वदक्षिणेन हस्तेन गुरोर्दक्षिणं पादं वामेन वामपादमन्वारभ्य जानुभ्यामवनीं गत्वा 'सावित्रीं भो अनुब्रूहि' इति गुरुं सम्प्रार्थ्य, अथ गुरुः ओमित्युक्त्वा गायत्रीमुपदिशति ॥ यथा = गायत्री व्याहृतीश्च त्रेधा विभज्य, प्रथमं तिस्रो व्याहृतीस्त्रयाणां पादानामादौ कृत्वा, ततः द्वयोरर्धर्चयोरादौ द्वे व्याहृती, ततः कृत्स्नायामादौ तृतीयां व्याहृतिं संयोज्य, सर्वास्ता व्याहृतयः प्रणवपूर्वकाः यथा 'ॐ भूः तत्सवितुर्वरेण्यम् ॥ ॐ भुवः भर्गो देवस्य धीमहि ॥ ओꣳसुवः धियो यो नः प्रचोदयात् ॥ ॐ भूः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ ॐ भुवः धियो यो नः प्रचोदयात् ॥ ओꣳसुवः

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्' इति गायत्रीमुपदिश्य, अथ शिष्टाचारप्राप्तत्वाद[1]ष्टाक्षरीं पञ्चाक्षरीं चोपदिश्य, ततो वटुराचार्यस्योत्तरत उपविशति ॥ तत्र मनुः 'यावद्ब्रह्मोपदेशः स्यात्तावद्दक्षिणतो वटुः ॥ औपनायनिके शेषे कर्मण्युत्तरतो वटुः' इति ॥ अथ कुमारः पक्वदुपादाय प्राश्नाति ॥ वटुहस्तमभिघार्य, पक्वशेषमन्नं निधाय, अभिघार्य 'ॐ शरीरं मे विचर्षणम् ॥ जिह्वा मे मधुमत्तमा ॥ कर्णाभ्यां भूरि विश्रुवम् ॥ ब्रह्मणः कोशोसि मेधया पिहितः ॥ श्रुतं मे गोपाय' इति प्राश्य, अप उपस्पृश्य, अप आचम्य, आदित्यमुपतिष्ठते 'ॐ उद्वयन्तमसस्परि पश्यन्तो ज्योतिरुत्तरम् ॥ देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमम्' इति ॥ अथैनꣳसꣳशास्ति ॥ 'ब्रह्मचार्यसि' इति गुरुराह ॥ 'अस्मि' इति प्रतिवचनम् ॥ 'आपोऽशान' इति गुरुः ॥ अस्यार्थः प्रायश्चित्तार्थमापोशनं आचमनं, भोजनस्यादावन्ते चोपस्तरणपिधानार्थमिति ॥ 'अश्नामि' इति प्रतिवचनम् ॥ 'कर्म कुरु' इति गुरुः ॥ गुरुशुश्रूषादिकमित्यर्थः ॥ 'करिष्यामि' इति प्रतिवचनम् ॥ 'मा दिवा सुषुप्थाः' इति गुरुः ॥ दिवानिद्रां माकार्षीरित्यर्थः ॥ 'न स्वप्स्यामि' इति प्रतिवचनम् ॥ 'समिध आधेहि' इति गुरुः ॥ अग्नावित्यर्थः ॥ 'आधास्यामि' इति प्रतिवचनम् ॥ 'भैक्ष्याचर्य चर' इति गुरुः ॥ भिक्षान्नमाहृत्य भोजनं कुरुष्वेत्यर्थः ॥ 'चरिष्यामि' इति प्रतिवचनम् ॥ 'सदा अरण्यात्समिध आहर' इति गुरुः ॥ अग्निकार्यार्थमित्यर्थः ॥ 'आहरिष्यामि' इति प्रतिवचनम् ॥ 'उदकुम्भं चाहर' इति गुरुः ॥ गुरुगृहं प्रतीत्यर्थः ॥ 'आहरिष्यामि' इति प्रतिवचनम् ॥ 'आचार्याधीनो वेदमधीष्व' इति गुरुः ॥ 'अध्येष्ये' इति प्रतिवचनम् ॥ अथास्मै गुरुस्तण्डुलपूर्णपात्रं प्रयच्छन्नाह 'मातरमेवाग्रे भिक्षस्व' इति ॥ ततो वटुर्मातरमेवाग्रे भिक्षते ॥ '[2]भवति भिक्षां देहि' इति मातरं भिक्षयित्वा, अथान्या अपि भिक्षयित्वा, सर्वं समाहृत्य, आचार्याय प्रयच्छति 'भैक्षमिदम्' इति ॥ 'तत् सुभैक्षम्' इत्याचार्यः प्रतिगृह्य, अथोत्तरेण अग्निं द्वे स्त्रीप्रतिकृती कृत्वा, गन्धैर्माल्येन चालङ्कृत्य, 'ममोपनयनाङ्गतया

[1] अत्र अष्टाक्षरी पञ्चाक्षरी शब्दाभ्यां क्रमेण नारायणाष्टाक्षरी शैवपञ्चाक्षरी च गृह्येते प्रसिद्धत्वात् ॥

विहितां श्रद्धामेधापूजां करिष्ये' इति सङ्कल्प्य 'ॐ भूः श्रद्धामावाहयामि ॥ ॐ भुवः श्रद्धामावाहयामि ॥ ओ॒ँसुवः श्रद्धामावाहयामि ॥ ॐ भूर्भुवःसुवः श्रद्धामावाहयामि ॥ ॐ भूः मेधामावाहयामि ॥ ॐ भुवः मेधामावाहयामि ॥ ओ॒ँसुवः मेधामावाहयामि ॥ ॐ भूर्भुवःसुवः मेधामावाहयामि' इत्यावाह्य 'श्रद्धायै नमः, मेधायै नमः' इति षोडशोपचारान् कृत्वा, ब्राह्मणान् सम्पूज्य, अस्य श्रद्धामेधापूजाकर्मणः पुण्याहं-स्वस्ति-ऋद्धिमिति वाचयित्वा, श्रद्धमेधे प्रीयेतामिति वाचयित्वा, अनेन श्रद्धामेधापूजाकर्मणा श्रीपरमेश्वरः प्रीयतामित्युक्त्वा, 'कृतस्य कर्मणः साङ्गतासिद्ध्यर्थं नानागोत्रेभ्यो यथाशक्तिदक्षिणाः प्रतिपादयामि ॥ यथाशक्तिब्रह्माणान् भोजयिष्ये' इत्युक्त्वा, यस्यस्मृत्येत्युक्त्वा, 'अनेनोपनयनहोमकर्मणा श्रीपरमेश्वरः प्रीयताम्' इतीश्वरार्पणं कुर्यात् ॥ छ ॥

अतःपरं यत्कर्तव्यं तदुच्यते ॥ कारिकायाम् 'यावद्ब्रह्मोपदेशः स्यात्तावत्सन्ध्यादिकं न च ॥ ततो माध्याह्नसन्ध्यादि सर्वं कर्म समाचरेत् ॥ स्नानं च भोजनं तद्वत्सन्ध्योपासनमेव च ॥ ब्रह्मयज्ञश्च नित्यानि सामान्यस्यापि तानि तु' उपासनमिति ॥ उपासनमग्निकार्यमित्यर्थः ॥ सिङ्गाभट्टीये 'अथोपनयनात्कर्म कुर्यादारभ्य यत्नतः ॥ स्नानं, कालद्वये सन्ध्यामग्निकार्यं च नैत्यकम् ॥ ब्रह्मयज्ञं तर्पणं च देवर्षिपितृणां तथा ॥ देवार्चनं जपं भिक्षां प्रत्यहं ब्रह्मचारिणः ॥ सेवां च गुरुवृद्धानां यज्ञसूत्रादिधारणम् ॥' इति ॥ अनेन गायत्र्युपदेशानन्तरं ब्रह्मयज्ञं माध्याह्निकं व्रतमध्ये प्रतिदिनं स्नानमपि कर्तव्यमित्युक्तम् ॥ छ ॥ (त्रिकालसन्ध्यावन्दनादिकं मध्यमसंपुटेद्रष्टव्यम्)

अथाग्निकार्यम् ॥ अथ सायं सन्ध्यां विधाय, आचमनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य, 'मम समस्तपापक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं सायमग्निकार्यं करिष्ये' इति सङ्कल्प्य, 'ॐ जुषस्वनः … ततनः सूर्यस्य०, ॐ अदितेनुमन्यस्व०' इत्यादिभिः परिषिच्य ॥ अग्निं प्रज्वलितं वन्दे … विश्वतोमुखम् ॥ अथ चतस्रः समिधोऽभ्यादधाति ॥ ॐ भूः स्वाहा ॥ अग्नय इदम् ॥ ॐ भुवः स्वाहा ॥ वायव इदम् ॥ ओ॒ँसुवः स्वाहा ॥ सूर्यायेदम् ॥ ॐ भूर्भुवःसुवः स्वाहा ॥ प्रजापतय इदम् ॥ इति हुत्वा, पुनर्जुषस्वन इत्यादि अदितेन्वम॒ँस्था इत्यादिभिः परिषिच्य 'यत्ते अग्ने तेज' इति तिसृभिः 'मयि मेधां मयि प्रजाम्' इति तिसृभिः चोपस्थाय अथोपविश्य, 'ॐ मानस्तोके … विधेमते' इत्युपस्थाय

हुतभस्म गृहीत्वा ॥ 'ओजोऽसि' इति ललाटे ॥ 'सहोऽसि' इति कण्ठे ॥ 'बलमसि' इति दक्षिणबाहुमूले ॥ 'भ्राजोऽसि' इति कण्ठपृष्ठे ॥ 'देवानां धाम नामासि' इति नाभौ ॥ 'विश्वमसि विश्वायुः' इति हृदये ॥ 'सर्वमसि सर्वायुः' इति मूर्ध्नि ॥ इत्युपस्पृश्य, 'श्रद्धां मेधां यशः प्रज्ञां विद्यां बुद्धिं श्रियं बलम् ॥ आयुष्यं तेज आरोग्यं देहि मे हव्यवाहन' इत्याशिषः प्रार्थयित्वा, गोत्रप्रवरमुक्त्वा, 'अमुकगोत्रः अहमस्मि अहं भो अभिवादये' इत्यग्निं अभिवाद्य, अथ गुरुनभिवादयते, मातरं पितरं मातुलमाचार्यानन्यांश्च त्रिवर्षपूर्वानभिवाद्य, 'अनेन सायमग्निकार्यकर्मणा श्रीपरमेश्वरः प्रीयताम्' ॥ एवमेव प्रातःकाले 'प्रातरग्निकार्यं करिष्ये' इति सङ्कल्प्य प्रातरग्निकार्यं कुर्यात् ॥ इत्यग्निकार्यविधिः ॥ छ ॥

एवं त्रिरात्रं सावित्रव्रतं चरित्वा, अथ चतुर्थेऽह्नि प्रातः सन्ध्याद्यग्निकार्यं कृत्वा, तमग्निमादाय पालाशमूलं गत्वा, तं प्रदक्षिणं परिसमूह्य आसनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य, 'ममोपनयनाङ्गतया विहितां सुश्रवःपूजां करिष्ये' ॥ ॐ सुश्रवः सुश्रवसं मा कुरु ॥ यथा त्वꣳ सुश्रवः सुश्रवा अस्येवमहꣳ सुश्रवः सुश्रवो भूयासम् ॥ यथा त्वꣳ सुश्रवः सुश्रवो देवानां निधिगोपोऽस्यैवमहं ब्राह्मणानां ब्रह्मणो निधिगोपो भूयासम् ॥ इति परिसमूह्य अभ्यर्च्य तस्याग्रेणोत्तरेण वा अग्निं प्रतिष्ठाप्य, प्राणानायम्य 'ममोपनयनाङ्गतया विहितं सावित्रीव्रतविसर्जनहोमं करिष्ये ॥ व्रतविसर्जनहोमः कर्म, अपूर्वं तन्त्रं, अग्निवाय्वादित्यव्रतपतयो देवता, आज्याक्तपालाशसमिधो हविः, सद्यो यक्ष्ये, तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य अन्वाधाय, प्रोक्षणीमाज्यस्थालीं स्रुक्स्रुवौ चतस्रः समिधश्च आसाद्य, आज्यसंस्कारान्तं कृत्वा, 'ममोपनयनव्रतमध्ये व्रतलोपप्रायश्चित्तार्थं अव्रत्यप्रायश्चित्तहोमं करिष्ये' ॥ यन्मआत्मनः पुनरग्निरिति द्वाभ्यां स्रुवाहुती हुत्वा, व्याहृतीर्हुत्वा, व्रतविसर्जनहोमं कुर्यात् ॥ पूर्वासादितपालाशसमिधोऽभ्याधापयन् वाचयति ॥ ॐ अग्ने व्रतपते सावित्रं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ अग्नये व्रतपतय इदम् ॥ ॐ वायो व्रतपते सावित्रं० ॥ वायवे व्रतपतय

इदम्॥ ॐ आदित्य व्रतपते सावित्रं० ॥ आदित्याय व्रतपतय इदम्॥ ॐ व्रतानां व्रतपते सावित्रं० ॥ व्रतानां व्रतपतय इदम्॥ व्याहृतीर्हुत्वा॥ पुनस्तथैव सुश्रवसमभ्यर्च्य षोडशोपचारान् कृत्वा, चरुलाजापूपान्निवेद्य 'अनेन पूजाकर्मणा सुश्रवाः प्रीयताम्' इति वाचयित्वा, दण्डमजिनं मेखलां वासश्च पुण्यवृक्षमूले विसृज्य, अप उपस्पृश्य, पूर्ववन्मन्त्रेणान्यान्यादाय, आचम्य, अथोत्सृष्टपूर्वधृतवस्त्रमाचार्य. आदत्ते॥ ॐ यस्य ते प्रथमवास्यꣳहरामस्तं त्वा विश्वे अनुमदन्तु देवाः॥ तं त्वा भ्रातरः सुहृदो वर्धमानमनुजायन्तां बहवःसुजातम्॥ इत्यादाय मिन्दाहुतीव्याहृतीर्हुत्वा, पूर्णाहुतिं हुत्वा, उत्तरपरिषेकादिकं कृत्वा, अनेन व्रतविसर्जनहोमकर्मणा श्रीपरमेश्वरः प्रीयतामित्युक्त्वा, अग्नि मात्मनि समारोपयति॥ ॐ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम्॥ अच्छा वसूनि कृण्वन्नस्मे नर्या पुरुणि॥ यज्ञो भूत्वा यज्ञमासीद स्वां योनिम्॥ जातवेदो भुव आजायमानः सक्षय एहि॥ इति दक्षिणपाणिं निष्टप्याऽऽत्मनि समारोपयेत्॥ पुनरग्निकार्यकाले 'ॐ उपावरोह जातवेदः पुनस्त्वम्॥ देवेभ्यो हव्यं वह नः प्रजानन्॥ आयुः प्रजाꣳरयिमस्मासु धेहि॥ अजस्रो दीदिहि नो दुरोणे॥ ॐ भूर्भुवःसुवरों अग्निं प्रतिष्ठापयामि' इत्यात्मनि समारोपितमग्निं लौकिकाग्नौ प्रतिष्ठाप्य, प्राणायामादिकं कृत्वा, प्रतिदिनं सायं-प्रातरग्निकार्यं कुर्यात्॥ इतःप्रभृति श्राद्धभोजनसूतकसङ्गम-मधुमांसानि च वर्जयेत्॥ इत्युपनयनविधिः॥ छ॥

अथ यदि चतुर्थदिनमध्येऽग्निरुद्वातश्चेत्तत्र प्रायश्चित्तम्॥ 'ॐ अपहता असुरा रक्षाꣳसि पिशाचा ये क्षियन्ति पृथिवीमनु॥ अन्यत्रैतो गच्छन्तु यत्रैषां गतं मनः' इति तत्सर्वं भस्म प्रोक्ष्य, 'अयन्तेयोनिर्क्रित्विय' इति क्षिप्रं भस्म

समिधि समारोप्य, स्थण्डिलोल्लेखनादिलौकिकाग्निं प्रतिष्ठाप्य, 'आजुह्वान-उद्बुध्यस्वाग्न' इति द्वाभ्यां समिधमग्नौ प्रक्षिप्य, प्राणानायम्य, देशकालौ सङ्कीर्त्य 'अस्य कुमारस्य उपनयनव्रतमध्येऽग्र्युद्वातप्रायश्चित्तहोमं करिष्ये, प्रयाश्चित्तहोमः कर्म अपूर्व तन्त्रं चित्तिर्नामाग्निः अग्र्यादयो देवता आज्यं हविः' इत्यादि सङ्कल्प्य, आज्यसंस्कारान्तं कृत्वा, व्याहृतीर्हुत्वा, अथ प्रायश्चित्ताहुतीर्जुहोति ॥ ॐ अयाश्चाग्नेः० ॥ अग्नये अयस इदम् ॥१॥ ॐ अग्निर्होता ॥ अश्विनाध्वर्यू ॥ त्वष्टाग्नीत् ॥ मित्र उपवक्ता ॥ सोमः सोमस्य पुरोगाः ॥ शुक्रश्शुक्रस्य पुरोगाः ॥ श्रातास्त इन्द्र सोमाः ॥ वातापेर्हवनः श्रुतः स्वाहा ॥ अग्नयेऽश्विभ्यां त्वष्ट्रे मित्राय सोमाय शुक्रायेन्द्रायेदम् ॥२॥ ॐ ब्राह्मण एकहोता ॥ स यज्ञः ॥ स मे ददातु प्रजां पशून्पुष्टिं यशः ॥ यज्ञश्च मे भूयात्स्वाहा ॥ ब्रह्मण इदम् ॥३॥ ॐ अग्निर्द्विहोता ॥ स भर्ता ॥ स मे ... भर्ता च मे भूयात्स्वाहा ॥ अग्नय इदम् ॥४॥ ॐ पृथिवी त्रिहोता ॥ स प्रतिष्ठा ॥ स मे ... प्रतिष्ठा च मे भूयात्स्वाहा ॥ पृथिव्या इदम् ॥५॥ ॐ अन्तरिक्षं चतुर्होता ॥ स विष्ठाः ॥ स मे ... विष्ठाश्च मे भूयात्स्वाहा ॥ अन्तरिक्षायेदम् ॥६॥ ॐ वायुः पञ्चहोता ॥ स प्राणः ॥ स मे ... प्राणश्च मे भूयात्स्वाहा ॥ वायव इदम् ॥७॥ ॐ चन्द्रमाः षड्ढोता ॥ स ऋतून्कल्पयाति ॥ स मे ... ऋतवश्च मे कल्पन्ताꣳस्वाहा ॥ चन्द्रमस इदम् ॥८॥ ॐ अन्नꣳसप्तहोता ॥ स प्राणस्य प्राणः ॥ स मे ... प्राणस्य च मे प्राणो भूयात्स्वाहा ॥ अन्नायेदम् ॥९॥ ॐ द्यौरष्टहोता ॥ सोऽनाधृष्यः ॥ स मे ... अनाधृष्यश्च भूयासꣳस्वाहा ॥ दिव इदम् ॥१०॥ ॐ आदित्यो नवहोता ॥ स तेजस्वी ॥ स मे ... तेजस्वी च भूयासꣳस्वाहा ॥ आदित्यायेदम् ॥११॥ ॐ प्रजापतिर्दशहोता ॥ स इदꣳसर्वम् ॥ स मे ददातु प्रजां पशून्पुष्टिं यशः ॥ सर्वं च मे भूयात्स्वाहा ॥ प्रजापतय इदम् ॥१२॥ मनोज्योतिः० मिन्दाहुती महाव्याहृतीर्व्याहृतीश्च हुत्वा, होमशेषं समापयेत् ॥ इत्यग्र्युद्वातप्रायश्चित्तम् ॥ इति वेङ्कटेशकृतौ

प्रयोगमालायामुपनयनप्रयोगः समाप्तः ।। छ ।।

अथ जडबधिराऽन्धमूकानां उपनयनप्रयोगो लिख्यते ।। नात्र वर्षाणां नियमः ।। देवनक्षत्रे नान्दीश्राद्धादिकं पूर्ववत्कृत्वा, स्नातं शुचिवाससं बद्धशिखं पूर्ववन्मण्डपवेदिकायामुपवेश्य, तूष्णीं यज्ञोपवीतं प्रतिमुच्य, तूष्णीमेव याज्ञियं दण्डं दत्वा, नामप्रश्नाद्युपनयनान्तं नामग्रहणं वर्जयेत् ।। मिन्दाहुती हुत्वा, आचार्य एव सावित्र्या पक्कं हुत्वा, क्षेत्रियैत्वा-ब्रह्मजज्ञानमिति द्वादशाज्याहुतीर्हुत्वा, वरदानान्ते याज्ञियेषु पर्णेषु हुतशेषं मन्त्रवन्निधाय, अथ कुमारः पक्कादुपादाय तूष्णीं प्राश्य, अथवा आचार्य एव सर्वान् मन्त्रान् वदेत् ।। एवमेव तूष्णीं उन्मत्तहीनाङ्गाधिकाङ्गव्यसनिव्याधितकुष्ठिदीर्घरोग्यपस्मारिणश्च यथाशक्ति किञ्चित्कार्यम् ।। अथ तेभ्यस्तृतीयेऽहनि तूष्णीं मधुपर्कं दत्वा, तमग्निमुत्सृजति ।। आयुर्दा अग्न इति पिता भ्राता वा आत्मानि समारोपयेदित्येके ।। इति जडाद्युपनयनविधिः ।। छ ।।

अथ पुनरुपनयनम् ।। तत्र कारणानि गृह्यसूत्रे 'अथोपनीतस्य अव्रत्यानि भवन्ति पितृज्येष्ठव्यतिरिक्तस्योच्छिष्टान्नभोजनं, न स्त्रिया सह भुञ्जीत, मधु-मांस-श्राद्ध-सूतक-शवान्न-अनिर्दशाहक्षीर-छत्राक-निर्यासभक्षणं गणान्न-गणिकान्नभक्षणं (गणान्नं = शूद्रान्नं इत्यर्थः) निषिद्धसिन्धु[1]-सौवीर-सौराष्ट्र-अङ्ग-वङ्ग-कलिङ्गादिदेशगमनं तीर्थयात्रां विना, प्रमादाद्रेतो विण्मूत्रभक्षणं सप्तरात्रसन्ध्यातिक्रमणं उन्मत्त इत्येतैर्दुष्टे पुनः संस्कारमर्हति' ।। तत्रैव 'सन्ध्यातिक्रमणं यस्य सप्तरात्रं गमिष्यति ।। उन्मत्तदोषयुक्तश्च पुनः संस्कारमर्हति ।। वपनं मेखलां दण्डं भैक्षाचर्यं च यस्त्यजेत् ।। पुनः संस्कारमाप्नोति विधिदृष्टेन कर्मणा' इति ।। अथ पुनः संस्कारकर्मणि वर्ज्यानि 'मेखलां दण्डमजिनं भैक्षाचर्यंव्रतानि च ।। निवर्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि' ।। पारिजाते विष्णुः 'वपन-दण्ड-मेखला-अजिन-भैक्षाचर्य-व्रतानि पुनस्संस्कारकर्मणि वर्ज्यानि' इति ।।छ ।।

अथ प्रयोगः ।। कर्ता प्रातस्नानादि नित्यकर्म कृत्वा, पुनरुपनयनाङ्गतयाविहितं नान्दीसमाराधनं हिरण्येन करिष्य इति सङ्कल्प्य, पुण्याहपूर्वकं तत्कृत्वा, पुनरुपनयनाङ्गपुण्याहं वाचयित्वा, अग्निर्व्रतपतिरग्निर्व्रतभृदग्निस्सप्तवांश्च प्रीयन्तामिति वाचयित्वा, अग्निं प्रतिष्ठाप्य, प्राणानायम्य, अव्रत्यदिप्रायश्चित्तनिमित्तमुक्त्वा, तत्प्रायश्चित्तार्थं पुनरुपनयनं करिष्य इति सङ्कल्प्य ।। पुनरुपनयनहोमः कर्म आघारवत् तन्त्रमित्यादि जातवेदोनामाग्निः अग्निर्व्रतपतिः-अग्निर्व्रतभृत्-अग्निस्सप्तवान्देवताः चरुर्हविः आज्यस्य मान्त्रवर्णिक्यो देवता इत्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, पालाशीं समिध-माज्येनाङ्क्त्वाऽभ्याधापयन् वाचयति ।। 'ॐ पुनस्त्वाऽऽदित्या रुद्रा वसवः' इत्येकां समिधं हुत्वा ।। आदित्येभ्यो रुद्रेभ्यो वसुभ्यो ब्रह्मभ्यो वसुनीथायेदम् ।। पुनरेतयैवाज्याहुतिं हुत्वा, अथाव्रत्यप्रायश्चित्तं जुहोति ।। यन्मआत्मनः०,

[1] ''सौराष्ट्रं सिन्धुसौवीरं अवन्ती दक्षिणावतम् ।। एतानि ब्राह्मणो गत्वा पुनस्संस्कारमर्हति'' इति गृह्यसूत्रोक्तः ।।

पुनरग्निः०' इति द्वाभ्यां हुत्वा, पक्वाज्जुहोति ॥ ॐ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यों३यद्वो वयं प्रमिनाम व्रतानि विदुषां देवा अविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाँऋतुभिः कल्पयाति स्वाहा ॥ अग्नये व्रतपतय इदम् ॥१॥ पुनरवदाय ॥ ॐ त्वमग्ने व्रतभृच्छुचिः ॥ देवाँआसादया इह ॥ अग्ने हव्याय वोढ्वों३व्रतानुबिभ्रद्व्रतपा अदाभ्यो यजानो देवाँअजरः सुवीरः ॥ दधद्रत्नानि सुविदानो अग्नेगोपाय नो जीवसे जातवेदः स्वाहा ॥ अग्नये व्रतभृत इदम् ॥२॥ पुनरवदाय ॥ ॐ सप्त ते अग्ने ... घृतेनों३जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे ॥ घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः स्वाहा ॥ अग्नेये सप्तवत इदम् ॥३॥ इति पक्वत्रयं हुत्वा, अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय, अथ आज्याहुतीरुपजुहोति ॥ ॐ येन देवाः पवित्रेण० ॥ देवेभ्यः पावमानीभ्य इदम् ॥१॥ ॐ प्राजापत्यम्० ॥ ब्रह्मण इदम् ॥२॥ ॐ इन्द्रः सुनीती सह० ॥ इन्द्राय सुनीत्यै सोमाय स्वस्त्यै वरुणाय समीच्यै यमाय राज्ञे प्रमृणाभ्यः जातवेदस ऊर्जयत्या इदम् ॥३॥ इति तिस्रः ॥ यद्देवादेवहेडनमिति सौत्रामणिपठितानुवाकस्य षड्भिरनुच्छन्दसम् ॥ यथा ॥ ॐ यद्देवा देव हेडनम् ॥ देवासश्चकृमा वयम् ॥ अग्निर्मा तस्मादेनसः ॥ विश्वान्मुञ्चत्वँहसः स्वाहा ॥ देवेभ्योऽग्नयेऽँहोमुच इदम् ॥१॥ ॐ यदि दिवा यदि नक्तम् ॥ एनाँसि चकृमा वयम् ॥ वायुर्मा तस्मादेनसः ॥ विश्वान्मुञ्चत्वँहसः स्वाहा ॥ वायवेऽहोमुच इदम् ॥२॥ ॐ यदि जाग्रद्यदि स्वप्ने ॥ एनाँसि चकृमा वयम् ॥ सूर्यो मा तस्मादेनसः ॥ विश्वान्मुञ्चत्वँहसः स्वाहा ॥ सूर्यायाँऽहोमुच इदम् ॥३॥ ॐ यद्ग्रामे यदरण्ये ॥ यत्सभायां यदिन्द्रिये ॥ यच्छूद्रे यदर्ये ॥ एनश्चकृमा वयँस्वाहा ॥ सूर्यायाँहोमुच इदम् ॥४॥ ॐ यदेकस्याधिधर्मणि ॥ तस्यावयजनमसि ॥ यदापो अघ्नियावरुणेति शपामहे ॥ ततो वरुण नो मञ्च

स्वाहा ॥ अद्भ्यो वरुणायेदम् ॥५॥ ॐ अवभृथनिचङ्कुण निचेरुरसि निचङ्कुण ॥ अवदेवैर्देवकृतमेनोऽयाट् ॥ अवमर्त्यैर्मर्त्यकृतम् ॥ उरोरानोदेवरिषस्पाहि स्वाहा ॥ देवेभ्य इदम् ॥६॥ इति षट् ॥ अथ नक्तं जातानुवाकम् ॥ ॐ नक्तं जातास्योषधे ॥ रामे कृष्णे असिक्निच ॥ इद॒ंरजनि रजय ॥ किलासं पलितं च यत्स्वाहा ॥ ओषधये रजन्या इदम् ॥१॥ ॐ किलासं च पलितं च ॥ निरितोनाशयापृषत् ॥ आन स्वो अश्नुतां वर्णः ॥ पराश्वेतानि पातय स्वाहा ॥ ओषधये रजन्या इदम् ॥२॥ ॐ असितं ते निलयनम् ॥ आस्थानमसितं तव ॥ असिक्नियस्योषधे ॥ निरितोनाशयापृषत्स्वाहा ॥ ओषधय इदम् ॥३॥ ॐ अस्थिजस्य किलासस्य ॥ तनूजस्य च यत्वचि ॥ कृत्यया कृतस्य ब्रह्मणा ॥ लक्ष्म श्वेतमनीनश॒ंस्वाहा ॥ ब्रह्मण इदम् ॥४॥ ॐ सरूपा नाम ते माता ॥ सरूपो नाम ते पिता ॥ सरूपाऽस्योषधे सा ॥ सरूपमिदं कृधि स्वाहा ॥ ओषधय इदम् ॥५॥ ॐ शुन॒ंहुवेम मघवानमिन्द्रम् ॥ अस्मिन् भरेऽनृतमंवाजसातौ ॥ शृण्वन्तमुग्रमूतये समत्सु स्वाहा ॥ मघवत इन्द्राय इदम् ॥६॥ ॐ घ्नन्तं वृत्राणि सञ्जितं धनानाम् ॥ धूनुथ द्यां पर्वतां दाशुषे वसु ॥ निवो वना जिहते या मनोभिया ॥ कोपयथ पृथिवीं पृश्निमातर॒ंस्वाहा ॥ पृथिव्या इदम् ॥७॥ ॐ युधेयदुग्राःपृषतीरयुग्ध्वम् ॥ प्रवेपयन्ति पर्वतान् ॥ विविञ्चन्ति वनस्पतीन् ॥ प्रोवारतमरुतो दुर्मदा इव स्वाहा ॥ मरुदभ्यः इदम् ॥८॥ ॐ देवासः सर्वया विशा ॥ पुरुत्राहि सदृङ्ङसि ॥ विशो विश्वा अनु प्रभुः स्वाहा ॥ देवेभ्य इदम् ॥९॥ ॐ समत्सु त्वा हवामहे ॥ समत्स्वग्निमवसे ॥ वाजयन्तो हवामहे ॥ वाजेषु

चित्रराधस्ँस्वाहा ॥ अग्नय इदम् ॥१०॥ ॐ सङ्गच्छध्वꣳसंवदध्वम् ॥ सं वो मनाꣳसि जानताम् ॥ देवा भागं यथापूर्वे ॥ सञ्जानाना उपासते स्वाहा ॥ देवेभ्य इदम् ॥११॥ ॐ समानो मन्त्रस्समितिस्समानी ॥ समानं मनस्सह चित्तमेषाम् ॥ समानं केतो अभिसꣳरभध्वम् ॥ संज्ञानेन वो हविषा यजामः स्वाहा ॥ समानायेदम् ॥१२॥ ॐ समानी व आकूतिः ॥ समाना हृदयानि वः ॥ समानमस्तु वो मनः ॥ यथा वः सुसहासति स्वाहा ॥ समानायेदम् ॥१३॥ ॐ संज्ञानन्नस्वैः ॥ संज्ञानमरणैः ॥ संज्ञानमश्विना युवम् ॥ इहास्मासु नियच्छतꣳस्वाहा ॥ अश्विभ्यामिदम् ॥१४॥ ॐ संज्ञानं मे बृहस्पतिः ॥ संज्ञानꣳसविता करत् ॥ संज्ञानमश्विना युवम् ॥ इह मह्यन्नियच्छतꣳस्वाहा ॥ अश्विभ्यामिदम् ॥१५॥ ॐ उपच्छायामिवघृणेः ॥ अगन्म शर्म ते वयम् ॥ अग्ने हिरण्यसन्दृशः स्वाहा ॥ अग्नय इदम् ॥१६॥ ॐ अदब्धेभिः सवितः पायुभिष्ट्वम् ॥ शिवेभिरद्य परिपाहि नो गयम् ॥ हिरण्यजिह्वः सुविताय नव्यसे ॥ रक्षा माकिर्नो अघशꣳस ईशत स्वाहा ॥ सवित्र इदम् ॥१७॥ ॐ मदे मदे हि नो ददुः ॥ यूथा गवामृजुक्रतुः ॥ सङ्गृभाय पुरू शता स्वाहा ॥ गोयूथेभ्य इदम् ॥१८॥ ॐ उभया हस्त्या वसु ॥ शिशीहि राय आभर ॥ शिप्रिन्वाजानां पते ॥ शचीवस्तवदꣳसना स्वाहा ॥ वाजानां पत्ये शिप्रिण इदम् ॥१९॥ ॐ आतून इन्द्र भाजय ॥ गोष्वश्वेषु शुभ्रषु ॥ सहस्रेषु तुवीमघ स्वाहा ॥ इन्द्राय इदम् ॥२०॥ ॐ यद्देवा देव हेडनम् ॥ देवासश्चकृमा वयम् ॥ आदित्यास्तस्मान्मा यूयम् ॥ ऋतस्यर्तेन मुञ्चत स्वाहा ॥ देवेभ्य आदित्येभ्य इदम् ॥२१॥ ॐ ऋतस्यर्तेनादित्याः ॥ यजत्रा मुञ्चतेह मा ॥ यज्ञैर्वो यज्ञवाहसः ॥ आशिक्षन्तो न शेकिम स्वाहा ॥ आदित्येभ्य इदम् ॥२२॥ ॐ मेदस्वता यजमानाः ॥ स्रुचाऽऽज्येन जुह्वतः ॥ अकामावो

विश्वेदेवाः ॥ शिक्षन्तो नोपशेकिम स्वाहा ॥ विश्वेभ्यो देवेभ्य इदम् ॥२३॥ ॐ यदि दिवा यदि नक्तम् ॥ एन एनस्योकरत् ॥ भूतं मा तस्माद्भव्यं च ॥ द्रुपदादिव मुञ्चतु स्वाहा ॥ एनोमुच इदम् ॥२४॥ ॐ द्रुपदादिवेन्मुमुचानः ॥ स्विन्नः स्तात्वीमलादिव ॥ पूतं पवित्रेणेवाज्यम् ॥ विश्वे मुञ्चन्तु मैनसः स्वाहा ॥ विश्वेभ्यो देवेभ्य इदम् ॥२५॥ ॐ उद्वयन्तमसस्परिपश्यन्तो ज्योतिरुत्तरम् ॥ देवं देवत्रा सूर्यमगन्मज्योतिरुत्तमꣳस्वाहा ॥ सूर्याय ज्योतिष इदम् ॥२६॥ 'ॐ यद्देवा देव हेडनम्०, ॐ देवा जीवनकाम्या०, ॐ ऋतेन द्यावापृथिवी०, ॐ सजातशꣳसा०, ॐ यद्वाचा०, ॐ यद्धस्ताभ्याम्०' इति षड्भिर्हुत्वा, स्विष्टकृदादिकं कुर्यात् ॥ इति पुनरुपनयनप्रयोगः ॥ छ ॥ अथ प्रकारान्तरम् ॥ नान्दीपुण्याहादिकं सर्वं पूर्ववत्कृत्वा, अग्निं प्रतिष्ठाप्य, 'अपूर्व तन्त्रं, अग्न्यादयो देवता, आज्यं हविः' इत्यादि सङ्कल्प्य, अन्वाधानाद्याज्यसंस्कारान्तं कृत्वा, पालाशीꣳसमिधमाज्येनाङ्क्त्वा, अभ्याधापयन् वाचयति 'ॐ पुनस्त्वादित्या' इति ॥ अथाव्रत्यप्रायश्चित्तं जुहोति ॥ 'ॐ यन्म आत्मनः०, ॐ पुनरग्निः०' इति द्वाभ्यां हुत्वा, अथ व्याहृतिचतुष्टयं 'पाहिनो अग्न एनस' इति पञ्च पुनर्व्याहृतिचतुष्टयमिति पाहित्रयोदशात्मकं प्रायश्चित्तं जुहुयात् ॥ छ ॥ अथापरः ॥ 'ब्राह्मणानुज्ञां गृहीत्वा, सावित्र्या शतवारं घृतमभिमन्त्र्य प्राश्नीयात् ॥ गुरूच्छिष्टं वा भक्षयेत् ॥ कृतप्रायश्चित्तो भवति' इति ॥ एतान्यनुकल्पप्रायश्चित्तानि तत्तद्दोषगुरुलाघववशाज्ज्ञेयानि ॥ इति पुनरुपनयनप्रयोगः समाप्तः ॥ छ ॥

अथोपवीतनाशे तस्य प्रायश्चित्तमुक्तम् ॥ पाराशरे - उपनयनानन्तरं व्रतमध्ये यज्ञोपवीतनाशे वस्त्रं वा सूत्रान्तरं वा धृत्वा, अग्निं प्रतिष्ठाप्य, उपवीतनाशप्रायश्चित्तहोमं करिष्य इति सङ्कल्प्य, तत्राऽपूर्वं तन्त्रं चित्तिर्नामाग्निः मनोज्योतिरादयो देवताः आज्यं हविः इत्यादि पात्रासादनाद्याज्यसंस्कारान्तं कृत्वा, अथाज्याहुतीरुपजुहोति ॥ ॐ मनोज्योतिर्जुषतामाज्यं

विच्छिन्नं यज्ञ्ँसमिमं दधातु ॥ बृहस्पतिस्तनुतामिमन्नो विश्वेदेवा इह मादयन्ताँस्वाहा ॥ मनसे ज्योतिषे बृहस्पतये विश्वेभ्यो देवेभ्य इदम् ॥१॥ ॐ त्रयस्त्रिँशत्तन्तवो ये ... अप्येतु स्वाहा ॥ देवेभ्य इदम् ॥२॥ ॐ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यः स्वाहा ॥ अग्नये व्रतपतय इदम् ॥३॥ ॐ यद्वो वयं प्रमिनामव्रतानि विदुषां देवा अविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवाँऋतुभिः कल्पयाति स्वाहा ॥ अग्नये व्रतपतय इदम् ॥४॥ इति चतस्र आज्याहुतीर्हुत्वा, होमशेषं समाप्य, यज्ञोपवीतं विधिवद्धारयेत् ॥ इत्युपवीतनाशप्रायश्चित्तम् ॥ छ ॥

अथोपनयनकालातिक्रमप्रायश्चित्तमुक्तं पाराशरे कपिलसंहितायाम् 'यदि कालो ह्यतिक्रान्तो निमित्तैश्च दुरासदैः ॥ कालातिपत्तिजनितदोषनिष्कृतिमादितः ॥ (कुर्यादिति शेषः) ॥ पिता विद्वदनुज्ञातो विधिवद्ब्रह्मकूर्चकम् ॥ उपोष्य प्राशयेदादौ ततश्चाब्दव्रतं चरेत् ॥ गायत्रीं च जपेल्लक्षमधिकारप्रसिद्धये' ॥ इत्युपनयनकालातिक्रमप्रायश्चित्तम् ॥ छ ॥

अथोपवीतलक्षणम्[1] ॥ शुचितन्तुमादाय चतसृषु समास्वङ्गुलीषु षण्णवतिकृत्वः परिवेष्ट्य, तावत्रिगुणित अपसव्यं कृत्वा, आपोहिष्ठादिभिः प्रक्षाल्य, सावित्र्या तं सव्यं त्रिवृत्कृत्वा, सजीवखदिरौदुम्बराश्वत्थबिल्वपिप्पलपलाशशाखायां यज्ञवृक्षाणामन्यतमस्य शाखायां वा 'पितृभ्यो नमः' इति बध्वा, सव्येन मृदं गृहीत्वा, तस्मिन् स्थापयति ॥ 'ॐ भूः प्रतिष्ठापयामि ॥ ॐ भुवः प्रतिष्ठापयामि ॥ ओँसुवः प्रतिष्ठापयामि ॥ ॐ भूर्भुवःसुवः प्रतिष्ठापयामि' इति ॥ अथ पत्रफलदूर्वादीन् व्याहृतिभिः प्रक्षिप्य, 'देवर्षिपितृणां तृप्तये' इति करतलं त्रिस्ताडयित्वा, 'पितृणां तृप्तये' इति भ्रमन्नावेष्टच, 'ॐ भूरग्निं च पृथिवीं च मां च ॥ त्रीँश्च लोकान्त्संवत्सरं च ॥ प्रजापतिस्त्वा सादयतु ॥ तया देवतयाङ्गिरस्वद्ध्रुवासीद ॥१॥ ॐ भुवो वायुं चान्तरिक्षं च मां च ॥ त्रीँश्च लोकान्० ॥२॥ ओँसुवरादित्यं च दिवं च मां च ॥ त्रीँश्च लोकान्० ॥३॥ ॐ भूर्भुवःसुवश्चन्द्रमसं च दिशश्च मां च ॥ त्रीँश्च लोकान्त्संवत्सरं च ॥ प्रजापतिस्त्वा सादयतु ॥ तया देवतयाङ्गिरस्वद्ध्रु वासीद ॥४॥' इति चतसृभिरभिमन्त्र्य, ब्रह्मविष्णु-महेश्वरान् प्रणम्य, गायत्र्या

दशवारमभिमन्त्रितजलेनाभ्युक्ष्य, 'ओङ्कारोऽग्निश्च नागश्च सोमः पितर एव च ।। प्रजापतिश्च वायुश्च सूर्यः सर्वाश्च देवताः' इति नवतन्तुदेवता ध्यात्वा, तत्तदात्मकं विभाव्य, सम्पूज्य, गायत्र्याऽष्टोत्तरशतवारमभिमन्त्र्य, उद्वयन्तमेत्यादित्यं दर्शयित्वा, स्योनापृथिवीति भूमौ निधाय, देवस्यत्वेत्यादाय, यज्ञोपवीतमन्त्रेण धारयेत् ।। ब्रह्मचारिण एकम् ।। स्नातकस्य द्वे ।। आयुष्कामस्य बहूनि ।। 'यज्ञोपवीतमजिनं मौञ्जीं दण्डं च धारयेत् ।। नष्टे भ्रष्टे नवं मन्त्रैर्ग्राह्यं, भ्रष्टं जले क्षिपेत्' ।। हेमाद्रौ 'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि ।। तृतीयमुत्तरीयं स्याद्वस्त्राभावे चतुर्थकम् ।। वयोधर्मार्थमेकं स्यात्प्रायश्चित्तार्थमेककम्' इति ।। इति वेङ्कटेशीये पुनरुपनयनादिप्रयोगः समाप्तः ।। छ ।।

अथोपाकर्मकालनिर्णयः ।। गृह्यसूत्रे 'श्रावण्यां पौर्णमास्यां क्रियेताऽपि वा आषाढ्याम्' इति ।। तत्रैव 'पर्वण्यौदयिके कुर्युः श्रावण्यां तैत्तिरीयकाः ।। बह्वृचाः श्रवणे कुर्युर्हस्तर्क्षे सामवेदिनः ।। गुरौ शुक्रेऽथवा मूढे राष्ट्रक्षोभे मलिम्लुचे ।। उपाकर्म न कुर्वीत कर्कटस्थे दिवाकरे ।। एतत्प्रारम्भविषयं गृहस्थानां न चैव तु ।। श्रावणस्य तु नित्यत्वान्नैव नित्यानि लोपयेत् ।।' इति ।। व्यासः 'धनिष्ठासंयुते कुर्याच्छ्रावणं कर्म यद्भवेत् ।। तत्कर्म सफलं ज्ञेयमुपाकरणसंज्ञितम् ।। श्रवणेन तु यत्कर्म उत्तराषाढसंयुतम् ।। संवत्सरकृतोऽध्यायस्तत्क्षणादेव नश्यति' ।। वृद्धमनुः 'अत्रार्धरात्रादर्वाक्चेद्ग्रहसङ्क्रम एव वा ।। नोपाकर्म तदा कुर्याच्छ्रावण्यां श्रवणेन वा' ।। कात्यायनः 'अर्धरात्रादधस्ताच्चेत्सङ्क्रान्तिर्ग्रहणं तथा ।। उपाकर्म न कुर्वीत परतश्चेन्न दोषकृत्' ।। अत्रार्धरात्रादर्वाग्रहः सङ्क्रमो वा यदि भवेत्तदा पर्वण्युपाकर्म न कुर्यादित्युक्तत्वात्, परतश्चेन्न दोषकृदित्युक्तत्वाच्च अर्धरात्रादर्वाक्चेत्तद्दिन एव निषेधः, परतश्चेत्पूर्वदिने न निषेधः किन्तु परदिनं एव निषेधः ।। अत एव चतुर्दश्यामर्धरात्रात्परतो यदि सङ्क्रमः तदा परदिनस्य पर्वण्युपाकर्म न कुर्यादिति ।। वेदोपाकरणे प्राप्ते कुलीरस्थे दिवाकरे ।। उपाकर्म न कर्तव्यं कर्तव्य सिंहयुक्तके ।। एतद्देशान्तरविषयम् ।। तत्र गुरुः 'नर्मदोत्तरभागे तु कर्तव्यं सिंहयुक्तके ।। कर्कटे संस्थिते भानावुपाकुर्यात्तु दक्षिणे' ।। व्यासः 'मासद्वये दोषयुक्ते प्रौष्ठपद्यां कुर्यात्' ।। तदुक्तं सङ्ग्रहे 'श्रावणस्य तु मासस्य पौर्णमास्यां द्विजन्मनाम् ।। आषाढ्यां प्रौष्ठपद्यां वा वेदोपाकरणं स्मृतम्' इति ।। पुनश्च सङ्ग्रहे 'गुरुभार्गवयोः मौढ्ये बाल्ये वा वार्धिकेऽपि वा ।। तथाधिमाससंसर्पमलमासादिषु द्विजे ।। प्रथमोपाकृतिर्न स्यात्कृतं कर्म विनाशकृत्' इति ।। स्मृतिसारे 'यज्ञोपवीतं कर्तव्यं श्रावणे गुरुशुक्रयोः ।। मौढ्येऽपि वार्धके बाल्ये नित्यवत्कर्म चोदितम्' ।। स्मृतिभास्करे 'नित्ये नैमित्तिके जप्ये होमयज्ञक्रियासु च ।। उपाकर्मणि चोत्सर्गे ग्रहवेधो न विद्यते' ।। गोभिलः 'अध्यायानामुपाकर्म कुर्यात्कालेऽपराहणके ।। पूर्वाण्हे तु विसर्गः स्यादिति वेदविदो विदुः' इति ।। वस्तुतस्तु 'भवेदुपाकृतिः पौर्णमास्यां पूर्वाण्ह एव तु' इति प्रचेतसो वचनादपराण्हविधिवाक्यं सामगविषयं, तेषामपराण्ह एवोक्तेरित्यनुपदं वक्ष्यते ।। दीपिकायामपि 'अस्य तु विधेः पूर्वाण्हकाल स्मृतः' इति ।। आश्वलायनः 'शरत्सु स्यात्सामगानां सदैवोपाकृतिः खलु ।। अध्वर्यूणां बह्वृचानां वर्षास्वेव विधीयते ।। मलमासादिदोषाणामुत्पत्तौ तु शरत्स्वपि ।। अध्वर्युभिर्बह्वृचैश्च कार्यैव स्यादुपाकृतिः' ।। आश्वलायनधर्मे 'ग्रहदोषादुपाकर्म प्रथमं न भवेद्यदि ।। उक्तकालेऽथवाऽऽषाढे कुर्याच्छरदि वाऽपि च' इति ।। 'मासत्रयेऽपि दोषश्चेच्छ्रावणे मासि तद्भवेत् ।। नित्यत्वात्कर्म न त्याज्यं गुर्वस्तादि न दोषकृत्' ।। अस्तादिदोषः प्रथमोपाकृतावेव न

द्वितीयादौ ॥ तत्रापि स्वशाखाधिपस्य शक्त्यभावविषयः, तस्य शक्तियोगे तु मौढ्यादावपि तत्कार्यम् ॥ तथा च आत्रेयः 'ऋग्यजुस्सामाथर्वेशा जीवशुक्रकुजेन्दुजाः ॥ शाखाधीशे शक्तियुते तच्छाखाध्ययनं शुभम्' ॥ सङ्ग्रहेऽपि 'एको मूढो भवेदन्यः स्वोच्चमित्रांशगो यदि ॥ अन्यस्यास्तमये काले कुर्याच्छ्रावणिमञ्जसा ॥ प्रथमोपाकृतिं चापि कुर्यादेवाविचारयन्' ॥ कालप्रकाशिकायाम् 'प्राधान्येन विधानाच्च मनुनाऽध्यायकर्मणि ॥ प्रथमोपाकृतिश्चपि कर्तव्येत्याह गौतमः ॥ यदा चास्तं गते शुक्रे श्रावणे कुर्युरञ्जसा ॥ श्रावणस्य च नित्यत्वात्कर्तव्यं नित्यकर्म च' ॥ एतदाषाढादिमासत्रयेऽपि दोषसद्भावविषयम् ॥ अत्र शान्तिरुक्ता ॥ सोमोधेनुमिति (ॐ सोमो धेनुं सोमो अर्वन्तमाशुम् ॥ सोमो वीरं कर्मण्यं ददातु ॥ सादन्यं विदथ्यं सभेयम् ॥ पितुः श्रवणं यो ददाशदस्मै ॥१॥ ॐ अषाढं युत्सुत्वं सोम क्रतुभिः ॥ या ते धामानि हविषा यजन्ति ॥ त्वमिमा ओषधीः सोम विश्वाः ॥ त्वमपो अजनयस्त्वं गाः ॥३॥ इति ब्राह्मणान्तर्गतौ मन्त्रौ ज्ञेयौ ॥) द्वाभ्यां हुत्वैवोपाकृतिं चरेत् ॥ शान्तिं कृत्वा तयोर्वाऽपि शुक्रदेवेन्द्रमन्त्रिणोः ॥ होमदानजपैर्वाऽपि तयोरुदितमन्त्रकैः ॥ कर्तव्यं श्रावणं विप्रैरिति जीवेन भाषितम् ॥ छ ॥ अथ पर्वनिर्णयः ॥ दिनकरोद्योते गोभिलः 'पर्वण्यौदयिके कुर्युः श्रावणे तैत्तिरीयकाः ॥ बह्वृचाः श्रवणर्क्षे तु हस्तर्क्षे सामवेदिनः' ॥ श्रवणेभवं श्रावणम् ॥ 'अत्रौदयिकं पर्व सङ्गवादधिकमेव ग्राह्यम् ॥ श्रावणी पौर्णमासी तु सङ्गवात्परतो यदि ॥ तदैवौदयिकी ग्राह्या नान्या चौदयिकी भवेत्' इति माधवीये गार्ग्योक्तेश्च ॥ यत्तु कालादर्शे 'श्रावण्यां प्रौष्ठपद्यां वा प्रतिपत् षण्मुहूर्तकैः ॥ विद्धा स्याच्छन्दसां तत्रोपाकर्मोत्सर्जनं भवेत्' इति, तत् सामगविषयम् ॥ सिङ्गाभट्टीये 'श्रावणे श्रावणे पर्व सङ्गवस्पृग्यदा भवेत् ॥ तत्रैवौदयिकं कार्यं नान्यदौदयिकं भवेत्' इत्युक्तम् ॥ तत्पर्वणस्सङ्गवाधिक्यस्पर्शविषयं पूर्ववचनेनोपसंहारात् ॥ गार्ग्यः 'पर्वण्यौदयिके कुर्युः श्रावणे तैत्तिरीयकाः ॥ बह्वृचाः श्रवणे कुर्युर्ग्रहसङ्क्रान्तिवर्जिते' इति ॥ 'सम्प्राप्तवान् श्रुतीर्ब्रह्मा पर्वण्यौदयिके पुनः ॥ अतो भूतदिने तस्मिन्नोपाकरणमिष्यते' इति कालिकापुराणे ॥ निगमेऽपि 'परेऽह्नि सङ्गवादूर्ध्वं पूर्णिमा श्रावणे व्रते ॥ सङ्गवस्पर्शनी वाऽपि हीना पूर्वा शुभावहा' ॥ शङ्खः 'उदयादुदयव्याप्ता त्रिमुहूर्ता यदा भवेत् ॥ उपाकरणकार्ये तु श्रोणा ग्राह्या वसोर्युता ॥ हीना पूर्वा तु कर्तव्या उत्तराषाढसंयुता' इति ॥ यत्तु कात्यायनवचनम् 'उदयव्यापिनी चैव विष्णुवर्क्षं घटिकाद्वयम् ॥ तत्कर्म सफलं ज्ञेयं तस्य पुण्यमनन्तकम्' इत्येतदुत्तराषाढयुक्तनिषेशपरं न तद्धटिकाद्वयस्वीकारपरम् ॥ शङ्खशौनकादिभिस्त्रिमुहूर्तप्रयोगपर्याप्तिपर्यन्तमुक्तत्वात् ॥ वैष्णवे 'धनिष्ठासंयुतां शस्तामुपाकरणकर्मणि ॥ उदये त्रिमुहूर्ता तु नोचेत्पूर्वा शुभावहा' इति ॥ सङ्ग्रहे मासफलमाह 'उपाकृतिः श्रावणे तु ब्रह्मवीर्यो भवेद्द्विजः ॥ भाद्रे तु क्षत्रवीर्यस्या त्कृषिवृद्धिः शुचौ भवेत्' इति याज्ञवल्क्यः ॥ 'उत्तमा श्रावणे मासि मध्या भाद्रपदे भवेत् ॥ आषाढे त्वधमा ज्ञेया नान्यमासे ह्युपाकृतिः' इति स्मृतिभारत्याम् ॥ बृहत्प्रचेताः 'भवेदुपाकृतिः पूर्णमास्यां पूर्वाण्ह एवतु ॥ ब्राह्मणान्भोजयेत्तत्र पितॄनुद्दिश्य देवताः' ॥ इति ॥ नान्दीश्राद्धविधानं प्रथमोपाकृतिविषयम् ॥ अत्रैवं व्यवस्था ॥ यजुर्वेदिनां परेद्युः पूर्णिमा सङ्गवात्परतो वा सङ्गवस्पृगिति=सार्धद्वादशघटिकापरिमितसङ्गवकालपर्यन्तं वाऽस्ति चेत् परेद्युरेव, सार्धद्वादशघटिकान्यूना चेत् पूर्वेद्युरेवोपाकर्म कुर्यात् ॥ चतुर्दशीयुतनिषेधस्तु परदिने सङ्गवात्परतो भावविषयः ॥ तथा ॥ बह्वृचानां च परदिने विष्णवर्क्षे त्रिमुहूर्तन्यूने उत्तराषाढयुतस्य स्वीकारात् हीना पूर्वा शुभावहेति उक्तत्वाच्च प्रतिपत् षण्मुहूर्तकैरित्युक्त्वा षण्मुहूर्तसद्भावस्य कर्मकालपर्याप्तत्वात्ततो न्यूने कर्तव्यत्वाविधानात् पूर्वेद्युरेवेति ॥ तत्रापि पूर्वाण्ह एव ॥ नूतनब्रह्मचारिणां तु अस्तमलमासादिवर्जितश्रावणभाद्रपदयोर्वा, शुद्धमासे पूर्वरात्रादर्वाक्पूर्वदिनापररात्रात्परतो वा ग्रहसङ्क्रान्तिवर्जिते नान्दीश्राद्धं कृत्वा, उपाकर्म कुर्यात् ॥ तयोरपि दोषसद्भावे बोधायननामाषाढस्य विहितत्वात्तत्रैव कार्यम् ॥ त्रिष्वपि मासेषु दोषयुक्तेषु पूर्वोक्तप्रायश्चित्तं कृत्वा, श्रावणे कुर्यात् ॥ शरत्स्वपीति वचनाच्छरत्काले वा कर्तव्यम् ॥ नूतनब्रह्मचारिणामुपाकर्ममात्रम् ॥ अन्ये तूत्सर्जनपूर्वकमुपाकर्म कुर्युः ॥ इत्युपाकर्मकालनिर्णयः ॥ छ ॥ अथोत्सर्जनकालः ॥ सिङ्गाभट्टीये 'श्रावण्यां प्रौष्ठपद्यां वा पौर्णमास्यामुपक्रमः ॥ प्रादुर्भावेत्वौषधीनां यदा स्यात्तैत्तिरीयकाः ॥ तैष्यां तु पौर्णमास्यां वा माध्यां वोत्सर्जनं भवेत्' ॥ गृह्यसूत्रे 'उत्सर्गबलिस्तैष्यां पौर्णमास्यां क्रियेताऽपि वा माघ्याम्' इति ॥ कारिकायाम् 'यद्याषाढ्यामुपाकर्म तैष्यां स्वाध्यायमुत्सृजेत् ॥ श्रावण्यां वा तथा

खादिरगृह्योक्तेः ।। परिशिष्टेऽपि 'मासे प्रौष्ठपदे हस्तेपुष्यः पूर्वो भवेद्यदा ।। तदा वा श्रावण कुयादुत्सर्ग छन्दसां द्विजः' इति ।। निर्णयामृते मनुः 'श्रावण्यां प्रौष्ठपद्यां वा ह्युपाकृत्य यथाविधि ।। युक्तं छन्दास्यधीयीत मासान्विप्रोऽर्धपञ्चमान्' ।। अर्धं पञ्चमो येषां ते अर्धपञ्चमाः ।। उपाकर्मप्रभृति सार्धाश्चतुरो मासान् स्वाध्यायदिनेष्वधीयीतेत्यर्थः ।। विष्णुभट्टः 'तच्च श्रावण्यां पौर्णमास्यां ग्रहसङ्क्रान्तिवर्जितायां क्रियेताऽपि वाऽऽषाढ्यां एवं विधायां प्रौष्ठपद्यां वाऽन्यस्यां वा तिथावावश्यकत्वात् ।। अथ यातयामदोषाः ।। अस्थानोच्छवासविच्छेदघोषणाध्यापनादिकम् ।। प्रामादिकं श्रुतौ यत्स्याद्यातयामत्वकारि तत्' इति ।। इत्युत्सर्जनकालनिर्णयः ।। छ ।।

अथोत्सर्जनोपाकर्मसमानतन्त्रप्रयोगः ।। अथाचार्यः सशिष्यः प्रातर्नद्यादौ स्नात्वा, शुक्ले वाससी परिधाय, नित्यकर्म कृत्वा, नदीतीरे देवालये वा शुचौ देशे देवर्षिपितृमण्डलानि लिखेत् ।। यथा ।। मध्ये प्रागग्राः षड्रेखाः उदगग्रा अष्टौ, एवं कृते पञ्चत्रिंशत् कोष्ठानि भवन्ति ।। तद्दक्षिणत अगस्त्यायैकं, एवं षट्त्रिंशत् ।। तदुत्तरे प्रागग्रा उदगग्राश्चाष्टावष्टौ रेखां लिखेत्, एवं कृते एकोनपञ्चाशत् कोष्ठानि भवन्ति ।। तद्दक्षिणे प्रागग्राश्चतस्र उदगग्रा अष्टौ, एवं कृते एकविंशतिकोष्ठानि भवन्ति ।। तद्दक्षिणे स्वस्वपितृणां प्रागग्राश्चतस्रः उदगग्राः पञ्च, एवं कृते द्वादशकोष्ठानि भवन्ति ।। एवं मण्डलचतुष्टयं विलिख्य, तण्डुलैः पूरयित्वा, देवमण्डले दर्भद्वयकृतान् कूर्चान् प्रागग्रान्, ऋषिमण्डले दर्भद्वयकृतान् कूर्चानुदगग्रान्, पितृमण्डले दर्भत्रयकृतान् कूर्चान् दक्षिणाग्रान् आसनार्थं कल्पयित्वा, ततः सर्वेऽपि आचमनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य, 'अनयोरुत्सर्जनोपाकर्माख्यकर्म कर्तुं मम शरीरशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये' इति सङ्कल्प्य तत्कृत्वा, गणपतिं सम्पूज्य, 'उत्सर्जनोपाकर्माख्यकर्मणोः पुण्याहं भवन्तो ब्रुवन्तु ।। आभ्यामुत्सर्जनोपाकर्माख्यकर्मभ्यां स्वस्ति भवन्तो ब्रुवन्तु ।। अनयोरुत्सर्जनोपाकर्माख्यकर्मणोः ऋद्धिं भवन्तो ब्रुवन्तु ।। देवर्षिपितरः प्रीयन्ताम् ।। सविता प्रीयताम्' इत्यादि मार्जनान्तं कृत्वा, ततः सशिष्य आचार्यो दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम सर्वेषां चाधीतानां छन्दसां सवीर्यत्वाय श्रीपरमेश्वरप्रीत्यर्थं उत्सर्जनाख्यं कर्म करिष्ये ।। तदङ्गत्वेन देवर्षिपितृन् पूजयिष्ये' इत्युक्त्वा, अथ मध्ये देवमण्डले नैर्ऋत्यकोणादारभ्य

प्रागपवर्गं यज्ञोपवीती अक्षतान् गृहीत्वा, दक्षिणभागस्थप्रथमपङ्क्तौ ॥ ॐ ब्रह्मणे कल्पयामि (१), प्रजापतये (२), बृहस्पते (३), अग्नये (४), वायवे (५), सूर्याय (६), चन्द्रमसे (७) ॥ तदुत्तरे द्वितीयपङ्क्तौ ॥ नक्षत्रेभ्यः (८), ऋतुभ्यः (९), संवत्सराय (१०), इन्द्राय राज्ञे (११), सोमाय राज्ञे (१२), यमाय राज्ञे (१३), वरुणाय राज्ञे (१४) ॥ तदुत्तरे तृतीयपङ्क्तौ ॥ वैश्रवणाय राज्ञे (१५), वसुभ्यः (१६), रुद्रेभ्यः (१७), आदित्येभ्यः (१८), विश्वेभ्यो देवेभ्यः (१९), साध्येभ्यो देवेभ्यः (२०), सेर्वेभ्यो देवेभ्यः (२१) ॥ तदुत्तरे चतुर्थपङ्क्तौ ॥ सर्वाभ्यो देवताभ्यः (२२), मरुद्भ्यः (२३), ऋभुभ्यः (२४), भृगुभ्यः (२५), अथर्वभ्यः (२६), अङ्गिरोभ्यः (२७), विश्वामित्राय (२८) ॥ तदुत्तरे पञ्चमपङ्क्तौ ॥ जमदग्नये (२९), भरद्वाजाय (३०), गौतमाय (३१), अत्रये (३२), वसिष्ठाय (३३), कश्यपाय (३४), अरुन्धत्यै (३५) ॥ तद्दक्षिणे कोष्ठे ॥ अगस्त्याय कल्पयामि (१-३६) ॥ एतैरेव नामधेयैश्चतुर्थ्यन्तैर्नमोन्तै-रावाहनादि सर्वोपचारान् कुर्यात् ॥ अथ निवीतिनः तदुत्तरे ऋषिमण्डले नैर्ऋत्यकोणादारभ्य उदगपवर्गम् ॥ प्रथमपङ्क्तौ ॥ कृष्णद्वैपायनाय कल्पयामि (१), जातूकर्ण्याय (२), तरक्षवे (३), तृणबिन्दवे (४), सोमशुष्मिणे (५), सोमशुष्मायणाय (६), वाजिने (७) ॥ तत्पूर्वे द्वितीयपङ्क्तौ ॥ वाजश्रवसे (८), बृहदुक्थाय (९), वर्मिणे (१०), सनत्कुमाराय (११), भरद्वाजाय (१२), वामदेवाय (१३), वाजरत्नाय (१४) ॥ तत्पूर्वे तृतीयपङ्क्तौ ॥ हर्यश्वाय (१५), उदमाय (१६), ऋणञ्जयाय (१७), अनृणञ्जयाय (१८), कृतञ्जयाय (१९), धनञ्जयाय (२०), सत्यञ्जयाय (२१) ॥ तत्पूर्वे चतुर्थपङ्क्तौ ॥ बभ्रवे (२२), त्रियऋणाय (२३), त्रियऋषये (२४), त्रिधातवे (२५), अश्वज्ञाय (२६), पराशराय (२७), इन्द्राय (२८) ॥ तत्पूर्वे पञ्चमपङ्क्तौ ॥ मृत्यवे (२९), कर्त्रे (३०), विकर्त्रे (३१), सुकर्त्रे (३२), त्वष्ट्रे (३३), धात्रे (३४), विधात्रे (३५) ॥ तत्पूर्वे षष्ठपङ्क्तौ ॥ सुधात्रे (३६), सुश्रवसे (३७), सत्यश्रवसे (३८), सवित्रे (३९), सावित्र्यै (४०), छन्दोभ्यः (४१), ऋग्वेदाय (४२) ॥ तत्पूर्वे सप्तमपङ्क्तौ ॥ यजुर्वेदाय (४३), सामवेदाय (४४),

(४६) ॥ कृष्णद्वैपायनाय नम इत्यादिभिश्चतुर्थ्यन्तैर्नमोन्तैर्नाममन्त्रैरावाहनाद्युपचारान् कुर्यात् ॥ अथ तद्दक्षिणे पितृमण्डले प्राचीनावीती वायव्यकोणादारभ्य दक्षिणापवर्गम् ॥ प्रथमपङ्क्तौ ॥ वैशम्पायनाय (१), कलिङ्गवे (२), तित्तिरये (३) ॥ तत्पूर्वे द्वितीयपङ्क्तौ ॥ उखाय (४), उख्याय (५), आत्रेयाय (६) ॥ तत्पूर्वे तृतीयपङ्क्तौ ॥ पदकाराय (७), कौण्डिन्याय (८), वृत्तिकाराय (९) ॥ तत्पूर्वे चतुर्थपङ्क्तौ ॥ कण्वाय (१०), बोधायनाय (११), प्रवचनकाराय (१२) ॥ तत्पूर्वे पञ्चमपङ्क्तौ ॥ आपस्तम्बाय (१३), सूत्रकाराय (१४), सत्याषाढाय (१५) ॥ तत्पूर्वे षष्ठपङ्क्तौ ॥ हिरण्यकेशाय (१६), आचार्येभ्यः (१७), ऊर्ध्वरेतोभ्यः (१८) ॥ तत्पूर्वे सप्तमपङ्क्तौ ॥ वानप्रस्थेभ्यः (१९), वंशस्थेभ्यः (२०), एकपत्नीभ्यः कल्पयामि (२१) ॥ इत्यासनं कल्पयित्वा, वैशम्पायनाय नम इत्यादिभिर्नाममन्त्रैश्चतुर्थ्यन्तैर्नमोन्तै-रावाहनाद्युपचारान् कुर्यात् ॥ तद्दक्षिणे ॥ पितृभ्यः पितामहेभ्यः प्रतितामहेभ्यः, मातृभ्यः पितामहीभ्यः प्रपितामहीभ्यः, मातामहेभ्यः मातुःपितामहेभ्यः मातुःप्रपितामहेभ्यः, मातामहीभ्यः मातुःपितामहीभ्यः मातुःप्रपितामहीभ्यः कल्पयामि ॥ इत्यासनं कल्पयित्वा, पितृभ्यो नम इत्यादिभिरावाहनादिपूजां कुर्यात् ॥ अथ उपवीती ॥ ॐ ब्रह्मणे स्वाहा, प्रजापतये स्वाहा ॥ इत्यादिभिः स्वाहान्तैर्नामिभिः अन्नेन बलिं दत्वा, अथ यज्ञोपवीती हस्ते फलोदकं गृहीत्वा तर्पयति ॥ ब्रह्माणं तर्पयामि, प्रजापतिं तर्पयामि, बृहस्पतिं तर्पयामि, अग्निं, वायुं, सूर्य, चन्द्रमसं, नक्षत्राणि ऋतूंस्तर्पयामि, संवत्सरं, इन्द्रं राजानं, सोमं राजानं, यमं राजानं, वरुणं राजानं, वैश्रवणं राजानं, वसून्, रुद्रान्, आदित्यान्, विश्वान्देवान्, साध्यान्देवान् सर्वान्देवान्०, सर्वादेवताः, मरुतः, ऋभून्, सोमं, राजानं अथर्वणः, अङ्गिरसः, विश्वामित्रं, जमदग्निं, भरद्वाजं, गौतमं, अत्रिं, वसिष्ठं, कश्यपं, अरुन्धतीं, अगस्त्यं तर्पयामि ॥ इति तर्पयित्वा, अथ निवीतिनः ऋषीन् द्विर्द्विस्तर्पयन्ति ॥ कृष्णद्वैपायनं तर्पयामि तर्पयामि, जातूकर्ण्यं, तरक्षुं, तृणबिन्दुं, सोमशुष्मिणं, सोमशुष्मायणं, वाजिनं,

वाजश्रवसं, बृहदुक्थं, वर्मिणं सनत्कुमारं, भरद्वाजं, वामदेवं, वाजरत्नं, हर्यश्वं, उदमं, ऋणञ्जयं, अनृणञ्जयं, कृतञ्जयं, धनञ्जयं, सत्यञ्जयं, बभ्रुं, त्रियऋणं, त्रियऋषिं, त्रिधातुं, अश्वज्ञं, पराशरं, इन्द्रं, मृत्युं, कर्तारं, विकर्तारं, सुकर्तारं, त्वष्टारं, धातारं, विधातारं, सुधातारं, सुश्रवसं, सत्यश्रवसं, सवितारं, सत्यं, छन्दाꣳसि, ऋग्वेदं, यजुर्वेदं, सामवेदं, अथर्ववेद, अथर्वाङ्गिरसः, इतिहासपुराणानि, सर्पदेवजनांस्तर्पयामि तर्पयामि, सर्वभूतानि तर्पयामि तर्पयामि ॥ इति द्विर्द्विस्तर्पयित्वा, अथ प्राचीनावीती पितृन् त्रिस्त्रिस्तर्पयति ॥ वैशम्पायनं तर्पयामि तर्पयामि तर्पयामि, फलिङ्गुं, तित्तिरिं, उखं, उख्यं, आत्रेयं, पदकारं, कौण्डिन्यं, वृत्तिकारं, कण्वं, बोधायनं, प्रवचनकारं, आपस्तम्बं, सूत्रकारं, सत्याषाढं, हिरण्यकेशं, आचार्यान्, ऊर्ध्वरेतसः, वानप्रस्थान्, वंशस्थान्, एकपत्नीस्तर्पयामि तर्पयामि तर्पयामि ॥ इति त्रिस्त्रिस्तर्पयित्वा, अथ स्वस्वपितरः ॥ पितृंस्तर्पयामि३, पितामहांस्तर्पयामि३, प्रपितामहांस्तर्पयामि३, मातृंस्तर्पयामि३, पितामहींस्तर्पयामि३, प्रपितामहींस्तर्पयामि३, मातामहांस्तर्पयामि३, मातुःपितामहांस्तर्पयामि३, मातुःप्रपितामहांस्तर्पयामि३, मातामहीस्तर्पयामि, मातुःपितामहीस्तर्पयामि, मातुःप्रपितामहीस्तर्पयामि ॥ अत्र पित्रादिनवानां त्रिस्त्रिः तर्पणं, मातामह्यादितिसृणां सकृत्सकृत् ॥ अथोपवीतिनः आचम्य ब्रह्मयज्ञं कुर्युः ॥ अथाचम्य दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य, ममाधीतानां छन्दसाꣳसवीर्यत्वाय उत्सर्जनाङ्गत्वेन श्रीपरमेश्वरप्रीत्यर्थं ब्रह्मयज्ञेन यक्ष्ये ॐ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि, इत्यपः स्पृष्ट्वा त्रिराचम्य ॥ चतुरो दर्भान् गृहीत्वा, वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य, अथ दक्षिणजानुनि दक्षिणोत्तरौ पाणी निधाय ॥ ॐ भूर्भुवःसुवः तत्सवितुर्वरेण्यम् ॥ भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ॥ धियो यो नः प्रचोदयात् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ॐ अग्निमीळे पुरोहितम्० इषेत्वोर्जत्वा० इत्यनुवाकम् ॥ ब्रह्मसन्धत्तम्० भद्रं कर्णेभिः० सह वै देवानाम्० संज्ञानं विज्ञानम्० इत्येताननुवाकान्

प्रतीकान् वाऽधीत्य तत्तत्काण्डादींश्च अधीत्य ॥ अग्न आयाहि० शन्नो देवी० ॥ अथ शिक्षां प्रवक्ष्यामि ॥ आमावस्येन वा पौर्णमास्येन वा हविषा यक्ष्यमाणो भवति ॥ वृद्धिरादैच् ॥ समाम्नायः समाम्नातः ॥ मयरसतजभनलगसंमितम् ॥ पञ्चसंवत्सरमयम् ॥ गौः ग्मा ज्मा ॥ योगीश्वरं याज्ञवल्क्यम् ॥ नारायणं नमस्कृत्य ॥ अथातो धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा ॥ ॐ नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम औषधीभ्यः ॥ नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ॥ इति त्रिरुक्त्वा ॥ वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम् ॥ हस्ताववनिज्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते ॥ इति सकृदुपस्पृश्य ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषः परि ॥ एवानो दूर्वे प्रतनु सहस्रेण शतेन च ॥ या शतेन प्रतनोषि सहस्रेण विरोहसि ॥ तस्यास्ते देवीष्टके विधेम हविषा वयम् ॥ इति द्वाभ्यां जलसमीपे दूर्वां रोपयित्वा, अथ निवीती ॥ प्रजापतिं काण्डऋषींस्तर्पयामि तर्पयामि०, सोमं, काण्डऋषीन्०, अग्निं काण्डऋषीन्०, विश्वान्देवान् काण्डऋषीन्० स्वयम्भुवं काण्डऋषीन्० ॥ इति द्विर्द्विस्तर्पयित्वा, अथ यज्ञोपवीती अप आचम्य ॥ ॐ कामोऽकार्षीन्नमो नमः ॥ कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते कामकामाय स्वाहा ॥ मन्युरकार्षीन्नमो नमः ॥ मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा ॥ उत्सृष्टा वै वेदाः ॥ ततो देवर्षिपितृनुद्वास्य अनेनोत्सर्जनकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ इत्युत्सर्जनप्रयोगः ॥ छ ॥ अथोपाकर्मप्रयोगः ॥ उत्सर्जनानन्तरं स्नानं वा पुण्याहजलप्रोक्षणं वा कृत्वा, शिष्यैः सह अन्वारब्ध आचार्यः ॥ आचम्य प्राणानायम्य,

स्थण्डिलोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ संङ्कीर्त्य, 'अध्येष्यमाणानां छन्दसाꣳसवीर्यत्वाय उपाकर्माख्यं कर्म करिष्ये ॥ उपाकर्महोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ बलवर्धनो नामाग्निः सविता देवता चरुर्हविः आज्यस्य मान्त्रवर्णिक्यो देवता' इत्यादि सङ्कल्प्य, अन्वाधानाद्याप्रणीताभ्यः कृत्वा, अग्रेणाग्निं पञ्चकोष्ठेषु तण्डुलपुञ्जेषु उदगग्रं कूर्चं निधाय निवीतिनो भूत्वा, उपाकर्माङ्गत्वेन पञ्चकाण्डर्षीन् पूजयिष्ये ॥ ॐ सप्त ते अग्ने समिधः सप्तजिह्वाः सप्तर्षयः सप्तधाम प्रियाणि ॥ सप्तहोत्राः सप्तधात्वा यजन्ति सप्तयोनीरापृणस्वा घृतेन ॥ ॐ भूः प्रजापतिं काण्डर्षिमावाहयामि, ॐ भुवः प्रजापतिं०, ओꣳसुवः प्रजापतिं, ॐ भूर्भुवःसुवः प्रजापतिं० ॥ ॐ भूः सोमं काण्डर्षिम्० ॥ ॐ भूः अग्निं काण्डर्षिम्० ॥ ॐ भूः विश्वान् देवान् काण्डर्षिन्० ॥ ॐ भूः स्वयम्भुवं काण्डर्षिम्० ॥ इत्यावाह्य, 'प्रजापत्यादिकाण्डर्षिभ्यो नमः' इति गन्धपुष्पादिभिरभ्यर्च्य, 'प्रजापतिं काण्डर्षिं तर्पयामि तर्पयामि' इति काण्डर्षीन् द्विर्द्विस्तर्पयित्वा, परिधानप्रभृत्यग्निमुखान्तं कृत्वा, पक्काज्जुहोति गायत्र्या पर्कं हुत्वाऽऽज्याहुतीरुपजुहोति ॥ ॐ याज्ञिकीभ्यो देवाताभ्यः स्वाहा ॥ याज्ञिकीभ्यो देवताभ्य इदम् ॥१॥ ॐ साꣳहितीभ्यो देवाताभ्यः स्वाहा ॥ साꣳहितीभ्यो देवताभ्य इदम् ॥२॥ ॐ वारुणीभ्यो देवाताभ्यः स्वाहा ॥ वारुणीभ्यो देवताभ्य इदम् ॥३॥ ॐ सर्वाभ्यो देवाताभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्य इदम् ॥४॥ अथ निवीती ॥ ॐ प्रजापतये काण्डऋषये स्वाहा ॥ प्रजापतये काण्डऋषय इदम् ॥५॥ ॐ सोमाय काण्डऋषये स्वाहा ॥ सोमाय काण्डऋषय इदम् ॥६॥ ॐ अग्नये काण्डऋषये स्वाहा ॥ अग्नये काण्डऋषय इदम् ॥७॥ ॐ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ॥ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्य इदम् ॥८॥ ॐ स्वयम्भुवे काण्डऋषये स्वाहा ॥ स्वयम्भुवे काण्डऋषय इदम् ॥९॥ उपवीती ॥ ॐ सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् ॥ सनिम्मेधामयासिषꣳस्वाहा ॥ सदसस्पतय इदम् ॥१०॥ ॐ तत्सवितुः ... प्रचोदयात् स्वाहा ॥

ॐ सामवेदाय स्वाहा ॥ सामवेदायेदम् ॥१४॥ ॐ अथर्ववेदाय स्वाहा ॥ अथर्ववेदायेदम् ॥१५॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ अथर्वाङ्गिरोभ्य इदम् ॥१६॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ इतिहासपुराणेभ्य इदम् ॥१७॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ सर्पदेवजनेभ्य इदम् ॥१८॥ ॐ सर्वभूतेभ्यः स्वाहा ॥ सर्वभूतेभ्य इदम् ॥१९॥ इत्येकोनविंशत्याज्याहुतीर्हुत्वा, 'अवदानधर्मेण यज्ञोपवीतं जुहोति' इति सूत्रे उक्तत्वात् दर्व्यामुपस्तीर्य, यज्ञोपवीतमवदाय, अभिघार्य 'ॐ यज्ञोपवीतं ... तेजः स्वाहा ॥ प्रजापतय इदम्' इति हुत्वा, गुरुभ्यो यज्ञोपवीतं दत्वा, पितृभ्यो ब्राह्मणेभ्यश्च दत्वा, प्राणानायम्य, 'मम श्रौतस्मार्तनित्यकर्माष्ठानयोग्यतासिद्ध्यर्थं उपाकर्माङ्गत्वेन उपवीतधारणं करिष्ये' इति सङ्कल्प्य, 'ओङ्कारोऽग्निश्च नागश्च सोमः पितृप्रजापती ॥ वायुः सूर्यो विश्वे देवा इत्येते तन्तुदेवताः' इति तत्तद्देवतात्मकं ध्यात्वा, गन्धपुष्पाक्षताद्यैरभ्यर्च्य, गायत्र्याऽभिमन्त्र्य, उद्वयन्तमेत्यादित्यं दर्शयित्वा, स्योनापृथिवीति भूमौ निधाय, देवस्यत्वेत्यादाय, यज्ञोपवीतमन्त्रेणोपवीतं धृत्वा, आचम्य, एवमेव पुनर्मन्त्रमुक्त्वा धृत्वा पुनरप्याचमेत् ॥ ब्रह्मचारी त्वेकमेव धृत्वा, आचम्य 'इयं दुरुक्तात्' इति मेखलां धृत्वा, 'ऋतस्य गोप्त्री' इति परिवीय 'प्राणानां ग्रन्थिरसि' इति ग्रन्थिं कृत्वा, 'मित्रस्य चक्षुः' इति कृष्णाजिनं धृत्वा, 'सोमोऽसि' इति पालाशदण्डं बैल्वं चेत् 'ब्रह्मवर्चसमसि ब्रह्मवर्चसायत्वा' इति धृत्वा, आचम्य, अथ दर्भेष्वासीनो दर्भान् धारयमाणः पवित्रपाणिः प्राणानायम्य, उत्सृष्टानां छन्दसामुपाकरणार्थं अध्येष्यमाणानां छन्दसाᳬसुवीर्यत्वाय उपाकर्माङ्गत्वेन ब्रह्मयज्ञेन यक्ष्ये ॥ 'ॐ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि' इत्यपः स्पृष्ट्वा, त्रिराचम्य द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदय मालभ्य

वामपादोपरि दक्षिणपादं प्रतिष्ठाप्य दक्षिणजानूपरि दक्षिणोत्तरं वामहस्तं प्रतिष्ठाप्य ॥ ॐ भूर्भुवःसुवः तत्सवितुर्वरेण्यं ... प्रचोदयात् ॥ इति पादोर्ध्वर्चशोनवानं त्रिरुक्त्वा ॥ ॐ अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् ॥ होतारꣳरत्नधातमम् ॥ ॐ इषेत्वोर्जेत्वा वायवस्थोपायवस्थ देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे ॥ ॐ अग्न आयाहि वीतये गृणानो हव्यदातये ॥ निहोता सत्सिबर्हिषि ॥ शन्नो देवीरभिष्टय आपो भवन्तु पीतये ॥ शंयोरभिस्रवन्तु नः ॥ इति चतुरो वेदादीन् जपित्वा, पुनः ॥ इषेत्वा०, यज्ञस्य०, शुन्धध्वम्० इति त्रीननुवाकान् ॥ ॐ आप उन्दन्तु जीवसे दीर्घायुत्वाय वर्चस ओषधे त्रायस्वैनꣳस्वधिते मैनꣳहिꣳसीर्देवश्रूरेतानि प्रवपे स्वस्त्युत्तराण्यशीयापो अस्मान्मातरः शुन्धन्तु घृतेन नो घृतपुवः पुनन्तु विश्वमस्मत्प्रवहन्तु रिप्रमुदाभ्यः शुचिरापूत एमि सोमस्य तनूरसि तनुवं मे पाहि महीनां पयोसि वर्चोधा असि वर्चः ॥१॥ मयिधेहि वृत्रस्य कनीनिकासि चक्षुष्पा असि चक्षुर्मे पाहि चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिस्तस्य ते पवित्रपते पवित्रेण यस्मै कं पुने तच्छकेयमावो देवास ईमहे सत्यधर्माणो अध्वरे यद्वो देवास आगुरे यज्ञियासो हवामह इन्द्राग्नीद्यावापृथिवी आप ओषधीस्त्वं दीक्षाणामधिपतिरसीह मा सन्तं पाहि ॥२॥ उद्धन्यमानमस्या अमेध्यम् ॥ अप पाप्मानं यजमानस्य हन्तु ॥ शिवा नः सन्तु प्रदिशश्चतस्रः ॥ शन्नो माता पृथिवी तोकसाता ॥ शन्नो देवीरभिष्टये ॥ आपो भवन्तु पीतये ॥ शंयोरभिस्रवन्तु नः ॥ वैश्वानरस्य रूपम् ॥ पृथिव्यां परिस्रसा ॥ स्योनमाविशन्तु नः ॥१॥ यदिदं दिवो यददः पृथिव्याः ॥ सञ्जज्ञाने रोदसी सम्बभूवतुः ॥ ऊषान् कृष्णमवतु कृष्णमूषाः ॥ इहोभयोर्यज्ञियमागमिष्ठाः ॥ ऊतीः कुर्वाणो

यत्पृथिवीमचरः ॥ गुहाकारमाखुरूपं प्रतीत्य ॥ तत्तेन्यक्तमिह सम्भरन्तः ॥ शतं जीवेम शरदः सवीराः ॥ ऊर्जं पृथिव्या रसमाभरन्तः ॥ शतं जीवेम शरदः पुरूचीः ॥२॥ वम्रीभिरनुवित्तं गुहासु ॥ श्रोत्रं त उर्व्यबधिरा भवामः ॥ प्रजापतिसृष्टानां प्रजानाम् ॥ क्षुधोपहत्यै सुवितन्नो अस्तु ॥ उपप्रभिन्नमिषमूर्जं प्रजाभ्यः ॥ सूदं ग्रहेभ्यो रसमाभरामि ॥ यस्य रूपं बिभ्रदि मामविन्दत् ॥ गुहाप्रविष्टाꣳसरिरस्य मध्ये ॥ तस्येदं विहतमाभरन्तः ॥ अच्छं बट्कारमस्यां विधेम ॥३॥ ॐ अनुमत्यै पुरोडाशमष्टाकपालन्निर्वपति धेनुर्दक्षिणाये प्रत्यञ्चः शम्या या अवशीयन्ते तन्नैर्ऋतमेककपालं कृष्णं वासः कृष्णतूषं दक्षिणावीहि स्वाहाऽऽहुतिं जुषाण एष ते निर्ऋते भागो भूते हविष्मत्यसि मुञ्चेममꣳहसः स्वाहा नमो य इदं चकारादित्यं चरुनिर्वपति वरो दक्षिणाग्ना वैष्णवमेकादशकपालं वामनो वही दक्षिणाग्नीषोमीयम् ॥१॥ एकादशकपालꣳहिरण्यं दक्षिणैन्द्रमेकादशकपालमृषभोवही दक्षिणाग्नेयमष्टाकपालमैन्द्रं दध्यृषभोवही दक्षिणैन्द्राग्नं द्वादशकपालं वैश्वदेवं चरुं प्रथमजो वत्सो दक्षिणा सौम्यꣳश्यामाकं चरुं वासो दक्षिणा सरस्वत्यै चरुꣳसरस्वते चरुं मिथुनौ गावौ दक्षिणा ॥२॥ इत्येताननुवाकान् ॥ तत्तदादीन् वा यथाशक्त्याऽधीत्य, अथ काण्डादीन् ॥ ॐ वायव्यꣳश्वेतमालभेत भूतिकामो वायुर्वैक्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति भवत्येवातिक्षिप्रा देवतेत्याहुः सैनमीश्वरा प्रदह इत्येतमेव सन्तं वायवे नियुत्वत आलभेत नियुद्वा अस्य धृतिर्धृत एव भूतिमुपैत्य प्रदाहाय भवत्येव ॥१॥ प्रजापतिरकामयत प्रजाः सृजेयेति स तपोतप्यतस सर्पानसृजत सोऽकामयत

प्रजाः सृजेयेति स द्वितीयमतप्यत स वया꣡ꣳस्यसृजत सोऽकामयत प्रजाः सृजेयेति स तृतीयमतप्यत स एतं दीक्षितवादमपश्यत्तमवदत्ततो वै स प्रजा असृजत यत्तपस्तत्वा दीक्षितवादं वदति प्रजा एव तद्यजमानः ॥१॥ युञ्जानः प्रथमं मनस्तत्वाय सविता धियः ॥ अग्निं ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ युक्त्वाय मनसा देवान्त्सुवर्यतो धिया दिवम् ॥ बृहज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ युक्तेन मनसा वयं देवस्य सवितुः सवे ॥ सुवर्गेयाय शक्त्यै ॥ युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ॥ विहोत्रा दधे वयुनाविदेक इत् ॥१॥ सावित्राणि जुहोति प्रसूत्यै चतुर्गृहीतेन जुहोति चतुष्पादः पशवः पशूनेवावरुन्धे चतस्रो दिशो दिक्ष्वेव प्रतितिष्ठति छन्दाꣳसि देवेभ्योऽपाक्रामन्नवो भागानि हव्यं वक्ष्याम इति तेभ्य एतच्चतुर्गृहीतमधारयन् पुरोनुवाक्यायै याज्यायै देवतायै वषट्काराय यच्चतुर्गृहीतं जुहोति छन्दाꣳस्येव तत्प्रीणाति तान्यस्य प्रीतानि देवेभ्यो हव्यं वहन्ति यं कामयेत ॥१॥ प्राचीनवꣳश करोति देवमनुष्या दिशो व्यभजन्त प्राचीं देवा दक्षिणा पितरः प्रतीचीं मनुष्या उदीचीꣳ रुद्रायत्प्राचीन-वꣳशं करोति देवलोकमेव तद्यजमान उपावर्तते परिश्रयत्यन्तर्हितो हि देवलोको मनुष्यलोकानास्मांल्लोकान्त्स्वेतव्य-मिवेत्याहुः को हि तद्वेद यद्यमुष्मिंल्लोकेऽस्ति वा नवेति दिक्ष्वतीकाशान् करोति ॥१॥ प्रजननं ज्योतिरग्निर्देवतानां ज्योतिर्विराट् छन्दसां ज्योतिर्विराड्वाचोग्नौ सन्तिष्ठते विराजमभिसम्पद्यते तस्मात्तज्ज्योतिरुच्यते द्वौ स्तोमौ प्रातस्सवनं वहतो यथा प्राणश्चापानश्च द्वौमाध्यं दिनꣳसवनं यथा चक्षुश्च श्रोत्रं च द्वौ तृतीयसवनं यथा वाक्च प्रतिष्ठा च पुरुषसम्मितो वा एष यज्ञो स्थूरिः ॥१८॥ ॐ ब्रह्मसन्धत्तं तन्मे जिन्वतम् ॥ क्षत्रꣳसन्धत्तं तान्मे जिन्वतम् ॥ इषꣳसन्धत्तं ताम्मे

जिन्वतम् ॥ ऊर्ज॒ꣳ सन्ध॑त्तं॒ ताम्मे॑ जिन्वतम् ॥ र॒यिꣳ सन्ध॑त्तं॒ ताम्मे॑ जिन्वतम् ॥ पुष्टि॒ꣳ सन्ध॑त्तं॒ ताम्मे॑ जिन्वतम् ॥ प्र॒जाꣳ सन्ध॑त्तं॒ ताम्मे॑ जिन्वतम् ॥ प॒शून्त्सन्ध॑त्तं॒ तान्मे॑ जिन्वतम् ॥ स्तु॒तोऽसि॒ जन॑धाः ॥ दे॒वस्त्वा॑ शु॒क्र॒पाः प्रण॑यन्तु ॥१॥ सु॒वीराः प्र॒जाः प्र॒ज॒नय॒न्परी॑हि ॥ शु॒क्रः शु॒क्रशो॑चिषा ॥ स्तु॒तोऽसि॒ जन॑धाः ॥ दे॒वास्त्वा॑ मन्थि॒पाः प्रण॑यन्तु ॥ सु॒प्र॒जाः प्र॒जाः प्र॒ज॒नय॒न्परी॑हि ॥ म॒न्थी म॒न्थिशो॑चिषा ॥ स॒ञ्ज॒ग्मा॒नौ दि॒व आ पृ॑थि॒व्यायुः ॥ सन्ध॑त्तं तन्मे॑ जिन्वतम् ॥ प्रा॒णꣳ सन्ध॑त्तं॒ तम्मे॑ जिन्वतम् ॥ अ॒पा॒नꣳ सन्ध॑त्तं॒ तम्मे॑ जिन्वतम् ॥२॥ व्या॒नꣳ सन्ध॑त्तं॒ तम्मे॑ जिन्वतम् ॥ चक्षुः॒ सन्ध॑त्तं॒ तन्मे॑ जिन्वतम् ॥ श्रो॒त्रꣳ सन्ध॑त्तं॒ तन्मे॑ जिन्वतम् ॥ मनः॒ सन्ध॑त्तं॒ तन्मे॑ जिन्वतम् ॥ वा॒चꣳ सन्ध॑त्तं॒ ताम्मे॑ जिन्वतम् ॥ आयु॑स्थ॒ आयु॑र्मे धत्तम् ॥ आयु॑र्य॒ज्ञाय॑ धत्तम् ॥ आयु॑र्य॒ज्ञप॑तये धत्तम् ॥ प्रा॒णस्थः॒ प्रा॒णं मे॑ धत्तम् ॥ प्रा॒णं य॒ज्ञाय॑ धत्तम् ॥३॥ प्रा॒णं य॒ज्ञप॑तये धत्तम् ॥ चक्षु॒स्स्थश्चक्षु॑र्मे धत्तम् ॥ चक्षु॑र्य॒ज्ञाय॑ धत्तम् ॥ चक्षु॑र्य॒ज्ञप॑तये धत्तम् ॥ श्रो॒त्रꣳ स्थः॒ श्रोत्रं॑ मे धत्तम् ॥ श्रोत्रं॑ य॒ज्ञाय॑ धत्तम् ॥ श्रोत्रं॑ य॒ज्ञप॑तये धत्तम् ॥ तौ दे॒वौ शु॒क्राम॒न्थिनौ ॥ क॒ल्पय॑तं॒ दैवी॒र्विशः॑ ॥ क॒ल्पय॑तं॒ मानु॑षीः ॥४॥ इ॒षमू॒र्जम॒स्मासु॑ धत्तम् ॥ प्रा॒णान्प॒शुषु॑ ॥ प्र॒जां मयि॑ च॒ यज॑माने च ॥ निर॑स्तः॒ शण्डः॑ ॥ निर॑स्तो॒ मर्कः॑ ॥ अप॑नु॒त्तौ शण्डा॒मर्कौ॑ स॒हामु॑ना ॥ शु॒क्रस्य॑ स॒मिद॑सि ॥ म॒न्थिनः॑ स॒मिद॑सि ॥ स प्र॑थ॒मः सङ्कृ॑तिर्वि॒श्वक॑र्मा ॥ स प्र॑थ॒मो मि॒त्रो वरु॑णो अ॒ग्निः ॥ स प्र॑थ॒मो बृ॒हस्पति॑श्चिकि॒त्वान् ॥ तस्मा॒ इन्द्रा॑य सु॒तमा॑जुहोमि ॥४॥ ॐ अङ्गि॑र॒सो वै स॒त्रमा॑सत ॥ तेषां॒ प्रश्नि॑र्घर्म॒धुगा॑सीत् ॥ स॒र्जीषे॑णाजीवत् ॥ तेऽब्रु॑वन् ॥ कस्मै॒ नु स॒त्रमा॑स्महे ॥ येऽस्या ओष॑धी॒र्न ज॒नया॑म॒ इति॑ ॥ ते

दिवो वृष्टिमसृजन्त ॥ यावन्तस्तोका अवापद्यन्त ॥ तावतीरोषधयोऽजायन्त ॥ ता जाताः पितरो विषेणालिम्पन् ॥१॥
तासां जग्ध्वा रुप्यन्त्यैत् ॥ तेऽब्रुवन् ॥ क इद मित्थमकरिति ॥ वयं भागधेयमिच्छमाना इति पितरोऽब्रुवन् ॥ किं वो
भागधेयमिति ॥ अग्निहोत्र एव नोऽप्यस्त्वित्यब्रुवन् ॥ तेभ्य एतद्भागधेयं प्रायच्छन् ॥ यद्धुत्वा निमार्ष्टि ॥ ततो वै त
ओषधीरस्वदयन् ॥ य एवं वेद ॥१॥ स्वदन्तेऽस्मा ओषधयः ॥ ते वत्समुपावासृजन् ॥ इदन्नो हव्यं प्रदापयेति ॥
सोऽब्रवीद्वरंवृणै ॥ दशमारात्रीर्जातं न दोहन ॥ आसङ्गवं मात्रा सह चराणीति ॥ तस्माद्वत्सं जातं दशरात्रीर्न दुहन्ति ॥
आसङ्गवं मात्रा सह चरति ॥ वारे व्रतꣳह्यस्य ॥ तस्माद्वत्सꣳसꣳस्पृष्टधयꣳरुद्रो घातुकः ॥ अतीहि सन्धान् धयति ॥३॥
ॐ अग्निर्नः पातु० ॥ ॐ भद्रं कर्णेभिः० ॥ ॐ सह वै देवानां चासुराणां च यज्ञौ प्रततावास्तां वयꣳस्वर्गं लोकमेष्यामो
वयमेष्याम इति तेऽसुराः सन्नह्य सहसैवाचरन् ब्रह्मचर्येण तपसैव देवास्तेऽसुरा अमुह्यꣳस्ते न प्राजानꣳस्ते पराभवन्तेन
स्वर्ग लोकमायन्प्रसृतेन वै यज्ञेन देवा स्वर्गं लोकमायन्नप्रसृतेनासुरान्पराभावयन्प्रसृतो ह वै यज्ञोपवीतिनो यज्ञो
प्रसृतोनुपवीतिनो यत्किञ्च ब्राह्मणो यज्ञोपवीत्यधीते यजत एव तत्तस्माद्यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य
प्रसृत्या अजिनं वासो वा दक्षिणत उपवीय दक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतमेतदेव विपरीतं
प्राचीनावीतꣳसंवीतं मानुषम् ॥१॥ सञ्ज्ञानं विज्ञानं प्रज्ञानम्० ॥ इत्येताननुवाकान् तत्तदादीन् वा यथाशक्त्याऽधीत्य
अथ शिक्षांप्रवक्ष्यामि आमावास्येन वा पौर्णमास्येन वा हविषा यक्ष्यमाणो भवति ॥ वृद्धिरादैच् ॥ समाम्नायः समाम्नातः ॥
मयरसतजभनलगसम्मितम् ॥ पञ्चसंवत्सरमयम् ॥ ग्लौः ग्माज्मायोगीश्वरं याज्ञवल्क्यम् ॥ नारायणं नमस्कृत्य ॥ अथातो
धर्मजिज्ञासा ॥ अथातो ब्रह्मजिज्ञासा ॥ 'नमो ब्रह्मणे०' इति त्रिः पठित्वा, 'ॐ वृष्टिरसि वृश्चमे

पाप्मानमृतात्सत्यमुपागाम्' इत्यपः स्पृष्ट्वा, हस्ताववनिज्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभते ॥ ॐ कामोऽकार्षीन्नमो नमः ॥ कामोऽकार्षीत्कामः करोति नाहं करोमि कामः कर्ता नाहं कर्ता कामः कारयिता नाहं कारयिता एष ते काम कामाय स्वाहा ॥ ॐ मन्युरकार्षीन्नमो नमः ॥ मन्युरकार्षीन्मन्युः करोति नाहं करोमि मन्युः कर्ता नाहं कर्ता मन्युः कारयिता नाहं कारयिता एष ते मन्यो मन्यवे स्वाहा ॥ इति पठित्वा, 'उपाकृतानि छन्दाꣳसि ॥ उपाकृता वै वेदाः' इत्युक्त्वा, आचम्य, देवर्षिपितृमहातर्पणं कृत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय ॥ ॐ श्रावण्यै पौर्णमास्यै स्वाहा ॥ श्रावण्यै पौर्णमास्या इदम् ॥ इति स्रुवाहुतिर्हुत्वा, अथ स्विष्टकृदाद्युत्तरपरिषेकादिकं कृत्वा, ऋषयछन्दाꣳस्याचार्या वेदा यज्ञाश्च प्रीयन्ताम्' इति वाचयित्वा, 'अनेन उपाकर्मकर्मणा श्रीपरमेश्वरः प्रीयताम्' इतीश्वरार्पणं कुर्यात् ॥ इत्युपाकर्मप्रयोगः ॥ छ ॥ अथ नूतनब्रह्मचारिणां तु नान्दीश्राद्धं कृत्वा, उपाकर्म कुर्यात्, न तूत्सर्जनम् ॥ 'मम वेदग्रहणाधिकारसिद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं उपाकर्म करिष्ये' इति सङ्कल्प्य, अन्यत्सर्वं पूर्ववत् कुर्यात् ॥ इति नूतनोपाकर्मप्रयोगः ॥ छ ॥ अथ महातर्पणम् ॥ नित्यतर्पणम् तु माध्याह्निकस्नानानन्तरं कर्तव्यम् ॥ एवं गुणेत्यादि उपाकर्माङ्गत्वेन देवर्षिपितृमहातर्पणं करिष्ये इति सङ्कल्प्य, पूर्वाभिमुखोऽङ्गुल्यग्रेण देवतीर्थेन देवतास्तर्पयेत् ॥ ब्रह्मादयो ये देवास्तान्देवांस्तर्पयामि, भूर्देवान्, भुवर्देवान्, सुवर्देवान्, भूर्भुवःसुवर्देवान्, देवपत्नीः, देवपुत्रान्, देवपार्षदान्, देवपार्षदीस्तर्पयामि ॥ अग्निः प्रजापतिः सोमो रुद्र आदित्यो बृहस्पतिः सर्पा इत्येतानि प्रागद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि ॥ वसूंस्तर्पयामि ॥ पितरोऽर्यमा भगस्त्वष्टा सविता वायुरिन्द्राग्नी इत्येतानि दक्षिणद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि ॥ रुद्रांस्तर्पयामि ॥ मित्र इन्द्र आपो

विश्वेदेवा ब्रह्मविष्णुरुद्रा इत्येतानि पश्चिमद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि ॥ आदित्यांस्तर्पयामि ॥ वसवो वरुण अजएकपादहिर्बुध्न्यः पूषाश्विनौ यम इत्येतान्युदगूद्वाराणि सदैवतानि सनक्षत्राणि सग्रहाणि सहोरात्राणि समुहूर्तानि तर्पयामि ॥ विश्वान्देवांस्तर्पयामि, साध्यान्देवान्, ब्रह्माणं, प्रजापतिं, परमेष्ठिनं, चतुर्मुखं, हिरण्यगर्भं, स्वयम्भुवं, ब्रह्मपार्षदां० ब्रह्मापार्षदीः अग्निं, वायुं, सूर्यं, चन्द्रमसं, नक्षत्राणि, भूः, भुवः, सुवः, महः, जनः, तपः, सत्यं, भूः पुरुषं, भुवः पुरुषं, सुवः पुरुषं, भूर्भुवःसुवः पुरुषं, सद्योजातं, वामदेवं, अघोरं, तत्पुरुषं, ईशानं, भवं देवं, शर्वं देवं, ईशानं देवं, पशुपतिं देवं, रुद्रं देवं, उग्रं देवं, भीमं देवं, महान्तं देवं, भवस्य देवस्य पत्नीं, शर्वस्य देवस्य पत्नीं, ईशानस्य देवस्य पत्नीं, पशुपतेर्देवस्य पत्नीं, रुद्रस्य देवस्य पत्नीं, उग्रस्य देवस्य पत्नीं, भीमस्य देवस्य पत्नीं, महतो देवस्य पत्नीं, भवस्य देवस्य सुतं, शर्वस्य देवस्य सुतं, ईशानस्य देवस्य सुतं, पशुपतेर्देवस्य सुतं, रुद्रस्य देवस्य सुतं, उग्रस्य देवस्य सुतं, भीमस्य देवस्य सुतं, महतो देवस्य सुतं, रुद्रपार्षदान्, रुद्रपार्षदीः, स्कन्दं, इन्द्रं, सुकुमारं, महासेनं, षण्मुखं, कार्तिकेयं, वह्निगर्भं, विशाखं, षष्टिं, अग्निभुवं, सुब्रह्मण्यं, गुहं तर्पयामि ॥१२॥ स्कन्दपार्षदांस्तर्पयामि, स्कन्दपार्षदीः, विघ्नं, विनायकं, वीरं, शूरं, सद्यःप्रसादकं, लम्बोदरं, वरदं, एकदंष्ट्रं, गजाननं, विघ्ननाशं, गणपतिं, हेरम्बं तर्पयामि ॥१२॥ विघ्नपार्षदांस्तर्पयामि, विघ्नपार्षदीः, केशवं, नारायणं, माधवं, गोविन्दं, विष्णुं, मधुसूदनं, त्रिविक्रमं, वामनं, श्रीधरं, हृषीकेशं, पद्मनाभं, दामोदरं, दामोदरपार्षदान्, दामोदरपार्षदीः, वासुदेवं, सङ्कर्षणं, प्रद्युम्नं, अनिरुद्धं, परमात्मानं, वासुदेवपार्षदान्, वासुदेवपार्षदीः, श्रियं देवीं, भूमिं देवीं, सरस्वतीं देवीं, विद्यां, तुष्टिं, पुष्टिं, गरुत्मन्तं, विष्णुपार्षदान्, विष्णुपार्षदीः, यमं, धर्मराजं, मृत्युं, अन्तकं, वैवस्वतं, कालं, सर्वभूतक्षयं, औदुम्बरं, दध्नं, नीलं, परमेष्ठिनं, वृकोदरं, चित्रं, चित्रगुप्तं, यमपार्षदान्, यमपार्षदीः, सर्वान्देवास्तर्पयामि ॥ अथ निवीत्युदङ्मुखोऽङ्गुलिवामपार्श्वेन ऋषितीर्थेन ऋषीन्द्विर्द्विस्तर्पयेत् ॥ भूऋर्षींस्तर्पयामि तर्पयामि, भुवर्ऋषीन्, सुवर्ऋषीन्, महर्ऋषीन्, जनर्ऋषीन्, तपर्ऋषीन्, सत्यमृषीन्, परमर्षीन्, ब्रह्मर्षीन्, देवर्षीन्, श्रुतर्षीन्, सप्तर्षीन्, ऋषिपत्नीः, ऋषिपुत्रान्,

ऋषिपार्षदान्, ऋषिपार्षदीः, प्रजापतिं काण्डऋषिं, सोमं काण्डऋषिं, अग्निं काण्डऋषिं, विश्वान्देवान्काण्डऋषीन्, स्वयम्भुवं काण्डऋषिं, अत्रिं, भारद्वाजं, धान्वन्तरं, काण्वं, बोधायनं, आपस्तम्बं, सूत्रकारं, सत्याषाढं, पराशरं, हिरण्यकेशं, वासिष्ठं, विश्वामित्रं, गौतमं, आङ्गिरसं, व्यासं, प्रणवं, व्याहृतीः गायत्रीं, छन्दाꣳसि, ऋग्वेदं, यजुर्वेदं, सामवेदं, अथर्ववेदं, अथर्वाङ्गिरसः, इतिहासपुराणानि सर्वभूतानि तर्पयामि तर्पयामि ॥ इति द्विर्द्विस्तर्पयित्वा, अथ प्राचीनावीती दक्षिणाभिमुखः तर्जनीमूलेन पितृतीर्थेनपितृन् त्रिस्त्रिस्तर्पयेत् ॥ अस्मत्पितॄन् शर्मणः गोत्रान् वसूरूपान् स्वधा नमस्तर्पयामि तर्पयामि तर्पयामि, पितामहान् रुद्ररूपान्०, प्रपितामहान् आदित्यरूपान्० ॥ एवं-मातॄः दायीः गोत्राः वसुरूपाः स्वधा नमस्त०, पितामहीः दायीः रुद्ररूपाः०, प्रपितामहीः आदित्यरूपाः० ॥ सपत्नीं मातरं दायीं गोत्रां वसुरुपां स्वधा नमस्त० इति द्विस्तर्पयति ॥ मातामहान् मातुःपितामहान् मातुःप्रपितामहान् तर्पयामीति त्रिः ॥ मातामहीः मातुःपितामहीः मातुःप्रपितामहीः तर्पयामीति सकृत् ॥ गुरुंस्त-३, गुरुपत्नीस्त०-१, आचार्यांस्त०-३, आचार्यपत्नीस्त०-१, सखींस्त०-३, सखिपत्नीस्त०-१, ज्ञातींस्त०-३, ज्ञतिपत्नीस्त०-१, अमात्यांस्त०-३, अमात्यपत्नीस्त०-१, अन्तेवासिनस्त०-३, अन्तेवासिपत्नीस्त०-१ ॥ एवं सतिलदूर्वाभिरद्भिस्तर्पयित्वा, 'ॐ ऊर्जं वहन्तीरमृतं घृतं दधि मधु पयः कीलालं परिस्रुतꣳ स्वधास्तर्पयतु मे पितॄन् स्वधा नमस्तृप्यंतु' इति स्थले जलं निषिच्य, अथ यज्ञोपवीती अप आचम्य 'अनेन महातर्पणकर्मणा श्रीपरमेश्वरः प्रीयताम्' ॥ इति महातर्पणम् ॥ छ ॥

अथानध्यायाः ॥ 'उपाकर्मणि कृते त्रयहमेकाहं वाऽनध्यायः' इति गृह्यसूत्रम् ॥ कारिकायां मनुः 'अयने विषुवे चैव शयने बोधने तथा ॥ अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ॥ अनध्यायस्य पूर्वेद्युरनध्यायो भवेन्निशि ॥ निशामुखे चतुर्थे तु सप्तमी यदि दृश्यते ॥ निशीथिनीमुखे तस्मिन्न वक्तव्या क्वचित्रयी' ॥ अन्यत्र 'षष्ठी च द्वादशी चैव अर्धरात्रोननाडिका ॥ प्रदोषे न त्वधीयीत तृतीया नवनाडिका' ॥ (ऊननाडिका एकघटिकान्यूनेत्यर्थः) ॥ अष्टमी चतुर्दशी पूर्णिमा अमावास्या प्रतिपत्सु प्रतिदिनं सन्ध्यासु च अनध्यायः ॥ ग्रहणादूर्ध्वं त्रिरात्रमनध्यायः ॥ भाद्रपदकृष्णद्वितीयायां महाभरणी, मार्गशिरपुष्यमाघफाल्गुनमासेषु कृष्णपक्षस्य सप्तम्यष्टमीनवमीति

तिस्रोऽष्टकाश्च अनध्यायाः ॥छ॥ अथ निर्णयः ॥ 'उदयास्तमये वाऽपि मुहूर्तत्रयगामि यत् ॥ तद्दिनं तदहोरात्रं अनध्यायं विदुर्बुधाः' इति ॥ अथ मन्वादयः 'आश्वयुक्शुक्लनवमी, कार्तिकी द्वादशी सिता ॥ तृतीया चैत्रमासस्य, सिते भाद्रपदे तथा ॥ फाल्गुनस्य त्वमावास्या, पौषस्यैकादशी सिता ॥ आषाढस्यापि दशमी, माघमासस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा, आषाढस्यापि पूर्णिमा ॥ कार्तिकी, फाल्गुनी चैत्री, ज्यैष्ठा पञ्चदशी सिता ॥ एता मन्वादयः प्रोक्ता दत्तस्याक्षयकारकाः ॥ वैशाखमासस्य च या तृतीया, नवम्यसौ कार्तिकशुक्लपक्षे ॥ नभस्य मासस्य च कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे' ॥ इत्येते युगादयः ॥ 'अनध्यायेष्वध्ययनं प्रज्ञामायुः प्रजां श्रियम् ॥ ब्रह्मबीजं स्वकं तेजो निकृन्तति यमः स्वयम्' इत्येते अनध्यायाः ॥ अथ प्रदोषमहानिशाकालः ॥ धर्मप्रवृत्तौ 'त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तं गते सति ॥ महानिशा निशीथस्य मध्यस्थघटिकाद्वयम्' इति ॥ अथ अध्ययनकालेऽन्तरागमने प्रायश्चित्तम् ॥ मृगश्व सर्पमार्जार नकुलाद्यश्वदन्तिनां ॥ अन्तरागमने चोष्ट्रखराणां च त्र्यहं स्मृतम् ॥ (त्रिदिनमित्यर्थः) ॥ नारीणामपि बालानां गवां चैवान्तरागमे ॥ अहोरात्रमनध्यायो गर्जने रात्रिसम्भवे ॥ पक्षिमण्डूकगोधाखुनराणां चान्तरागमे ॥ दिने दिवसशेषः स्याद्रात्र्यां रात्रेश्च तद्भवेत् ॥ अन्तरागमने सद्यः प्राय्श्चित्तमिदं शृणु ॥ त्रिरात्रमुपवासश्च त्रिरात्रं चाभिषेचनम् । ग्रामान्तरं वा गन्तव्यं जानुभ्यां नात्र संशयः' इति पारिजातोक्तेः ॥ मनुः 'वेदोपकरणे चैव स्वाध्याये चैव नैत्यके ॥ न निरोधस्त्वनध्याये होममन्त्रजपेषु च ॥ वेदोपाकरणान्यङ्गानि ॥ नित्ये जपे च चाङ्गे च क्रतौ पारायणेऽपि च ॥ नानध्यायोऽस्ति वेदानां ग्रहणे स्मृतः ॥ देवतार्चनमन्त्राणां नानध्यायः स्मृतस्तथा ॥ नानध्याये जपेद्वेदान् रुद्रांश्चैव विशेषतः ॥ पौरुषं पावमानं च गृहीतनियमाद्दते' इति ॥ विष्णुभट्टीये 'मानसेऽध्ययने ब्रह्मयज्ञे जपहोमादौ वेदाङ्गेषु च न दोषो नैमित्तिकेष्वनध्यायेष्वकृतार्थकोऽधीयीत ॥ अष्टमीचतुर्दशीपर्वसु नित्यमनध्यायः' ॥ इत्यनध्यायप्रकरणम् ॥छ ॥

अथ वेदारम्भः ॥ उदगयनेऽस्तमलमासादिवर्जिते द्वितीया-तृतीया-पञ्चमी-दशमी-एकादशी-द्वादशीषु शुक्लपक्षे बुध-गुरु-शुक्रवारेषु भानुवारे पूर्वाह्ने चन्द्रवारेऽपराह्णे, अश्विनी-मृगशिर-आर्दा-पुनर्वसु-पुष्य-हस्त-चित्रा-स्वाती-अनूराधा-श्रावणेषु श्रेष्ठः, रोहिणी-उत्तरात्रय-रेवत्यो मध्यमा इति पञ्चदशनक्षत्रेषु, मिथुन-कन्या-धनु-मीना मुख्याः कर्कटको मध्यः, अन्ये राशयो वर्ज्या, एषु लग्नेषु शुभयोगदृष्टियुतेषु, वृष, सिंह-कुम्भ-लग्नेषु वा सप्तमाष्टमयोः सर्वग्रहवर्जिते वेदारम्भं कुर्यात् ॥ तथा च श्रीधरीये 'रिक्ताष्टमीपञ्चदशी निषिद्धा त्रयोदशी सप्तमिका च मध्या ॥ विद्यागमे वित्सितमन्त्रिणां स्युर्वारोदयो मध्यम इन्दुभान्वोः' ॥ गुरुः 'प्रथमा च तृतीया च द्वितीया पञ्चमी तथा ॥ दशमी द्वादशी चैव श्रेष्ठाश्चैकादशी तथा ॥ त्रयोदशी सप्तमी च कदाचिच्छुभदा तिथिः ॥ यदा चन्द्रो बुधांशस्थो बुधजीवसितेक्षितः' ॥ गुरुः 'वारवर्गोदया वर्ज्या दर्शनं चार्किभौमयोः ॥ मध्यमा रविशीतांश्वोः शेषाणामुत्तमाः स्मृताः ॥ रविवारे च पूर्वाण्हे वेदारम्भो विशिष्यते ॥ चन्द्रवारेऽपराह्ने च विद्यागुर्वी विधीयते ॥ रात्रौ च वर्जयेन्नित्यं सन्ध्ययोश्च विशेषतः' इति ॥ अथ नक्षत्राणि ॥ 'हस्ताऽश्वयुक् श्रवणतिष्यसमीरमित्रचित्राऽदितित्रिपुरजिन्मृगलाञ्छनेषु ॥ शस्तोत्तराकमलसम्भवपौष्णभेषु मध्या श्रुतिस्मृतिसमावगतिर्द्विजानाम्' ॥ अत्र हस्तादिदशतारासु शस्ता ॥ उत्तरादिपञ्चतारासु मध्यमा ॥ अत्र विद्याशब्दो वेदपरः ॥ अथ राशयः ॥ 'विद्यारम्भे द्विस्वभावा विशिष्टा मध्याः प्रोक्ता ये चरा राशयश्च ॥ शुद्धो राशिः सप्तमश्चन्द्रवारे कुर्यात्प्राज्ञः सर्वविद्यासमाप्तिम्' ॥ गुरुः 'चरस्थिरद्विस्वभावा मध्यमाधमपूजिताः ॥ शुभयुक्तेषु दृष्टेषु सर्वे पूज्यतमा ग्रहाः ॥ लग्नस्य सप्तमो राशिः पापैः शुभैश्च रहितः शुभदः स्यात्' ॥ गुरुः 'त्रिषडायगताः पापास्त्रिकोणे कण्टके शुभाः ॥ विद्यारम्भे सुपूज्याः स्युः पञ्चमे पापवर्जिते ॥ (कण्टके=केन्द्रे इत्यर्थः) ॥ 'सप्तमस्थाः शुभाः सर्वे सुपूज्या अपि वर्जिताः ॥ न कोऽपि सप्तमे पूज्यः शुभः क्रूरोऽपि वा यदि' ॥ वसिष्ठः 'लग्नात्सप्तमराशौ तु वर्जनीया विशेषतः ॥ पूर्वाह्ने वाऽथ मध्याह्ने विद्यारम्भो विशिष्यते ॥ अपराह्ने चन्द्रवारे विद्यामुक्तिर्विधीयते' ॥ अथाध्ययनलक्षणम् ॥ स्मृतिमञ्जर्याम् 'अध्येष्यमाणस्त्वाचान्तो यथाशास्त्रमुदङ्मुखः ॥ ब्रह्मारम्भावसाने च प्रणमेद्विधिवद्गुरुम् ॥ कुशानास्तीर्य पूर्वाग्रानासीत प्राङ्मुखो गुरुः ॥ तस्य दक्षिणतः शिष्य उपविश्य ह्युदङ्मुखः ॥ अनध्यायेष्वधीतं यद्यच्च शूद्रस्य सन्निधौ ॥ प्रतिग्रहनिमित्तं च नरकाय तदुच्यते' इति ॥ यमः 'ओङ्कारं प्रथमं कृत्वा ततो ब्रह्म प्रवर्तयेत् ॥

ओङ्कारं च पुनः कृत्वा भूमिं स्पृष्ट्वा विरामयेत् ॥ अन्यथा विपरीतं स्याद्ब्रह्महा नात्र संशयः' ॥ अथ श्राद्धसामग्रीप्रतिग्रहविषये ॥ धर्मोद्योते 'फलान्यापस्तिलान् भक्ष्यान् यच्चान्यच्छ्राद्धिकं भवेत् ॥ प्रतिग्रहेऽप्यनध्याय इति बोधायनोऽब्रवीत्' इति ॥ अथाशक्तविषये ॥ पराशरः 'अग्निकार्यात्परिभ्रष्टाः सन्ध्योपासनवर्जिताः ॥ वेदांश्चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ तस्मा[1]द्वृषलभीतेन ब्राह्मणेन विशेषतः ॥ अध्येतव्योऽप्येकदेशो यदि सर्वो न शक्यते' इति ॥ पारिजाते 'सरस्वतीं च सम्पूज्य गणनाथं तथैव च ॥ गुरुपूजां ततः कृत्वा विद्याः सर्वाः समारभेत् ॥छ ॥ अथ प्रयोगः ॥ अथ आचार्यः सशिष्यः स्नानादिनित्यकर्म कृत्वा, आसनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य 'मम समस्तविद्याप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं वेदारम्भं करिष्ये' इति सङ्कल्प्य, पूर्वाह्णे गणेशं सरस्वतीं च सम्पूज्य, तथैव गरुत्मन्तं इष्टदेवतां गुरुं च सम्पूज्य, ब्रह्मचारिणं ब्राह्मणं सुवासिनीश्च अभ्यर्च्य, आशिषो गृहीत्वा, ब्रह्मयज्ञवद्दर्भान् धारयमाणः प्रणवव्याहृतिसहितां सावित्रीमुक्त्वा, प्रणवपूर्वकं स्वाध्यायमुपक्रम्य, किञ्चिदधीत्य, प्रणवेन भूमिं स्पृष्ट्वा, विरम्य, गुरुन् वृद्धांश्च नमस्कुर्यात् ॥ ततः परेद्युः प्रभृति गणेशादीन्नत्वा, गुरुन्नत्वा, प्रणवमुक्त्वा आरम्भं समाप्तिं च कुर्यात् ॥ इति सर्वसाधारणवेदारम्भप्रयोगः ॥छ ॥

अथ बोधायनोक्तवेदारम्भ उच्यते ॥ तत्र कारिकायाम् 'काले वेदमुपाकृत्य विद्यारम्भं च कारयेत् ॥ शुभे परीक्षिते काले प्रबुद्धे च जनार्दने ॥१॥ शश्यृक्षबलसम्पूर्णे खेच[2]राऽनिधनाश्रिते ॥ स्थण्डिलेऽग्निं समिध्याथ कृत्वा ब्रह्मार्चनान्तकम् ॥२॥ पुरतः स्थण्डिले बह्वेर्निदध्यात्कलशं शुभम् ॥ तिरः पवित्रं सावित्र्या पूरयेत्संविपाचितम् ॥३॥ वनौषधिजलं यद्वा गालितं विमलोदकम् ॥ व्याहृतिप्रणवैः प्रास्येद्यवानक्षततण्डुलान् ॥४॥ दूर्वादर्भफलैस्तीर्णं दूर्वादर्भैश्चिनोति तम् ॥ वर्णरूपां च वाग्देवीं श्रद्धामेधासमन्विताम् ॥५॥ तस्मिन्नावाहयेद्देवीं वाचं मन्त्रद्वयेन च ॥ तत्सूक्तत्रितयेनैव स्पृशन्नष्टशतं जपेत् ॥६॥ गन्धाक्षतप्रसूनाद्यैर्विधिवत्तां समर्चयेत् ॥ अर्चयित्वाऽथ दुग्धान्नं प्रसाद्याग्निमुखान्तकम् ॥७॥ कृत्वापक्कं हुनेत्पश्च वर्गमन्त्रमिति स्वयम् ॥ तत्सूक्तस्यादिमगर्भ्यां तु शिष्टर्ग्भिरुपहुत्य च । सरस्वती सूत्रमन्त्रै पंचत्रिंशद्धृताहुतीः। प्रणोदेवी धातवेकेत्यन्तं एकादश स्मृताः ॥८॥ श्रद्धामेधाख्यसूक्ताभ्यां अष्टपञ्चाहुतीर्हुनेत् ॥ ततः स्विष्टकृदाद्यं तु कुर्यादावरदानतः ॥९॥ कलशस्थां ततो देवीं प्रार्थयेद्यतमानसः ॥ उपविश्य ततः शिष्यं देवीमावाहयेद्गुरुः ॥१०॥ यजुः पवित्रैरब्लिङ्गैस्तत्सूक्तत्रितयेन च ॥ अभिषिञ्चेत्तदुदकं कुम्भस्थं देवतात्मकम् ॥११॥ अभ्यर्च्य गन्धपुष्पाद्यैर्वनौषधिरसान्वितम् ॥ घृतं सम्पातितं काले तत्सूक्तेनाभिमन्त्रितम् ॥१२॥ शिरो मे श्रीः प्रमुखतः स्वाहान्ताद्यनुवाककम् ॥ प्राशयेद्व्याहृतीभिस्तु स्वाहान्ताभिश्चतुर्थशः ॥१३॥ देवीं वाचं प्रणोजुष्टश्चोदयित्री च पावका ॥ उतनो जुषतां मे च प्रतेमहि यदप्सु च ॥१४॥ इयं यस्तेस्तन इति सूक्तं सारस्वतं स्मृतम् ॥ देवीं वाचं वदन्त्यन्तं सप्तर्चाः परिकीर्तिताः ॥१५॥ प्रणोदेवी यदप्स्वन्तं द्वौ द्वौ मन्त्रौ प्रकीर्तितौ ॥ श्रद्धयाग्निः षडर्चस्तु श्रद्धयादेव इत्यृचौ ॥१६॥ श्रद्धासूक्तमिति प्रोक्तं सूक्ते विद्याप्रदे शुभे ॥ ततो गुरुः सशिष्यस्तु व्राग्यतो नियतः शुचिः ॥१७॥ पूजयित्वा हरिं लक्ष्मीं वाग्देवीं च विनायकम् ॥ स्वविद्यासूत्रकारांश्च द्विजानभ्यर्च्य शक्तितः ॥१८॥ उपस्थाय ततः सूर्यं सावित्रीं च ततो जपेत् ॥ सम्यगष्टशतं वाऽलङ्कृतब्रह्माञ्जलिं तथा ॥१९॥ प्रोक्त्वा वेदादीन् सावित्रीं पच्छोविहरणक्रमात् ॥ वेदमध्यापयेत्किञ्चित्तदहश्च विसर्जयेत् ॥२०॥ उपाकर्मणि केचित्तु विधिमेवं प्रकुर्वते ॥ उपाकर्मैव केचित्तु एवं विधिरिह श्रुतिः ॥२१॥ ॥ छ ॥

अथ प्रयोगः ॥ पूर्वोक्तशुभे मुहूर्ते विद्यारम्भं कर्तुं निर्विघ्नतासिद्ध्यर्थं वेदारम्भं करिष्ये इति सङ्कल्प्य तत्कृत्वा,

---

[1] वृषलभीतेन = वृषलत्वप्राप्तिभीतेनेत्यर्थः ॥

[2] खेचरेति = खेचरैः निधनमनाश्रिते इत्यर्थः ॥ अष्टमे शुद्धे इति यावत् ॥

वाग्देवी-श्रद्धा-मेधाः प्रीयन्तामिति पुण्याहं वाचयित्वा, आचम्य प्राणानायम्य, अस्य कुमारस्य निर्विघ्नेन समस्तविद्याप्राप्त्यर्थं वेदारम्भं करिष्ये इति सङ्कल्प्य, स्थण्डिलोल्लेखनादि लौकिकाग्निं प्रतिष्ठाप्य, वेदारम्भहोमं करिष्ये वेदारम्भहोमः कर्म आघारवत्तन्त्रं इत्यादि बलवर्धनो नामाग्निः वाग्देवी श्रद्धा मेधा देवताः चर्वाज्ये हविषी अग्निः स्विष्टकृदित्याद्याप्रणीताभ्यः कृत्वा, तत्पूर्वभागे स्थण्डिलोपरिकलशं प्रतिष्ठाप्य, तिरःपवित्रं सर्वौषधीः क्वाथजलं सावित्र्या पूरयित्वा, शोधितशुद्धजलं वा यवाक्षततण्डुलदूर्वादर्भफलानि प्रणवव्याहृतीभिः निक्षिप्य, दूर्वादर्भैः प्रच्छाद्य, श्रद्धामेधासहितां वाग्देवीमावाहयति ॥ 'ॐ देवीं वाचम्०, यद्वाग्वदन्ति' इति द्वाभ्यां सरस्वतीं आवाह्य, 'ॐ श्रद्धयाग्निः समिध्यते' इति श्रद्धां, 'ॐ मेधा देवी जुषमाणा' इति मेधां चावाह्य, गन्धाक्षतपुष्पादिभिरभ्यर्च्य, क्षीरान्नं निवेद्य, अग्निमुखान्तं कृत्वा, पक्वाज्जुहोति ॥ ॐ देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतों३यद्वाग्व-दन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ॥ चतस्र ऊर्जं दुदुहे पया॒ꣳसि क्वस्विदस्याः परमं जगाम स्वाहा ॥ वाग्देव्या इदम् ॥ अथ स्विष्टकृतमवदाय अन्तःपरिधौ निधाय अथाज्याहुतीरुपजुहोति ॥ ॐ अनन्तामन्तादधि० ॥१॥ ॐ वाचं देवा उप० ॥२॥ ॐ वागक्षरं प्रथमजा० ॥३॥ ॐ यामृषयो मन्त्रकृतो० ॥४॥ ॐ चत्वारि वाक्परि० ॥५॥ सर्वत्र वाग्देव्या इदम् ॥ अथ सरस्वतीसूक्तम् ॥ ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती ॥ धीनामवित्र्यवतु स्वाहा ॥ सरस्वत्यै देव्या इदम् ॥१॥ ॐ आनो दिवो बृहतः पर्वतादा सरस्वती यजतागन्तु यज्ञम् ॥ हवं देवी जुजुषाणा घृताची शग्मान्नो वाचमुशती श्रृणोतु स्वाहा ॥ सरस्वत्यै देव्या इदम् ॥२॥ ॐ जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक् ॥ यद्वाचो मधुमत्तस्मिन्मा धाः स्वाहा सरस्वत्यै स्वाहा ॥ सरस्वत्यै देव्या इदम् ॥३॥ ॐ चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ॥ यज्ञं दधे सरस्वती स्वाहा ॥ सरस्वत्या

इदम् ॥४॥ ॐ पावका नः सरस्वती वाजेभिर्वाजिनीवती ॥ यज्ञं वष्टुधियावसुः स्वाहा ॥ सरस्वत्या इदम् ॥५॥ ॐ उत नो देव देवाꣳअच्छावोचो विदुष्टरः ॥ श्रद्विश्वावार्याकृधि स्वाहा ॥ देवेभ्य इदम् ॥६॥ ॐ जुषतां मे वागिदꣳहविः ॥ विराड्देवी पुरोहिता ॥ हव्यवाडनपायिनी स्वाहा ॥ वाच इदम् ॥७॥ ॐ प्रतेमहे सरस्वति सुभगे वाजिनीवति ॥ सत्यवाचे भरेमतिꣳस्वाहा ॥ सरस्वत्या इदम् ॥८॥ ॐ यदप्सु ते सरस्वति ॥ गोष्वश्वेषु यन्मधु ॥ तेन मे वाजिनीवति ॥ मुखमङ्धि सरस्वति स्वाहा ॥ सरस्वत्या इदम् ॥९॥ ॐ इयमेव सा या प्रथमा व्यौच्छदन्तरस्यां चरति प्रविष्टा ॥ वधूर्जजान नवगज्जनित्री त्रयं एनां महिमानः सचन्ते स्वाहा ॥ वध्वा इदम् ॥१०॥ ॐ यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ॥ यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः स्वाहा ॥ सरस्वत्या इदम् ॥११॥ ॐ देवीं वाचमजनयन्त० ॥ वाग्देव्या इदम् ॥१२॥ ॐ प्रणो देवी० ॥ सरस्वत्यै देव्या इदम् ॥१३॥ ॐ जुष्टो वाचः० ॥ सरस्वत्या इदम् ॥१४॥ ॐ चोदयित्री० ॥ सरस्वत्या इदम् ॥१५॥ ॐ पावका नः सरस्वती० ॥ सरस्वत्या इदम् ॥१६॥ ॐ उत नो देव देवा० ॥ देवेभ्य इदम् ॥१७॥ ॐ जुषता मे वाक्० ॥ सरस्वत्या इदम् ॥१८॥ ॐ प्रणो देवी० ॥ सरस्वत्यै देव्या इदम् ॥१९॥ ॐ आनो दिवो बृहतः पर्वतादासरस्वती यजतागन्तु यज्ञं ॥ हवं देवी० श्रृणोतुस्वाहा ॥ सरस्वत्या इदम् ॥२०॥ ॐ जुष्टो वाचो भूयासम्० ॥ सरस्वत्यै देव्या इदम् ॥२१॥ ॐ ऋचास्तोमꣳसमर्धय गायत्रेण रथन्तरम् ॥ बृहद्गायत्रवर्तनी स्वाहा ॥ सरस्वत्या इदम् ॥२२॥ ॐ चोदयित्री० ॥ सरस्वत्या इदम् ॥२३॥ ॐ पावीरवीकन्या चित्रायुः

सरस्वती वीरपत्नी धियं धात् ॥ ग्नाभिरच्छिद्रꣳशरणꣳसजोषा दुराधर्षं गृणते शर्म यꣳसतु स्वाहा ॥ सरस्वत्या इदम् ॥२४॥ ॐ पावका नः० ॥ सरस्वत्या इदम् ॥२५॥ ॐ उत नः प्रियाप्रियासु ॥ सप्तस्वसा सुजुष्टा ॥ सरस्वती स्तोम्याऽभूत् ॥ इमा जुह्वाना युष्मदा नमोभिः स्वाहा ॥ सरस्वत्या इदम् ॥२६॥ ॐ प्रतिस्तोमꣳसरस्वति जुषस्व ॥ तव शर्मन् प्रियतमे दधानाः ॥ उपस्थे याम शरणं न वृक्षꣳस्वाहा ॥ सरस्वत्या इदम् ॥२७॥ ॐ जुषतां मे वाक्० ॥ वाच इदम् ॥२८॥ ॐ ययारूपाणि बहुधा वदन्ति ॥ पेशाꣳसि देवाः परमे जनित्रे ॥ सा नो विराडनपस्फुरन्ती स्वाहा ॥ वाच इदम् ॥२९॥ ॐ प्रतेमहि० ॥ सरस्वत्या इदम् ॥३०॥ ॐ इदं ते हव्यं घृतवत्सरस्वति ॥ सत्यवाचे प्रभरेमा हवीꣳषि ॥ इमानि ते दुरिता सौभगानि ॥ तेभिर्वयꣳसुभगासः स्याम स्वाहा ॥ सरस्वत्या इदम् ॥३१॥ ॐ यदप्सु ते० ॥ सरस्वत्या इदम् ॥३२॥ ॐ या सरस्वती वैशम्भल्या ॥ तस्यां मे रास्व ॥ तस्यास्ते भक्षीय ॥ तस्यास्ते भूयिष्ठभाजो भूयास्म स्वाहा ॥ सरस्वत्या इदम् ॥३३॥ ॐ इयमेव सा या० ॥ वध्वा इदम् ॥३४॥ ॐ यस्ते स्तनः० ॥ सरस्वत्या इदम् ॥३५॥ इति सरस्वतीसूक्तम् ॥४०॥ अथ श्रद्धासूक्तम् ॥ ॐ श्रद्धयाग्निः समिध्यते ॥ श्रद्धया विन्दते हविः ॥ श्रद्धां भगस्य मूर्धनि ॥ वचसा वेदयामसि स्वाहा ॥ श्रद्धाया इदम् ॥१॥ ॐ प्रियꣳश्रद्धे ददतः ॥ प्रियꣳश्रद्धे दिदासतः ॥ प्रियं भोजेषु यज्वसु ॥ इदं म उदित कृधि स्वाहा ॥ श्रद्धाया इदम् ॥२॥ ॐ यथा देवा असुरेषु ॥ श्रद्धामुग्रेषु चक्रिरे ॥ एवं भोजेषु यज्वसु ॥ अस्माकमुदितं कृधि स्वाहा ॥ श्रद्धाया इदम् ॥३॥ ॐ श्रद्धां देवा यजमानाः ॥ वायुगोपा उपासते ॥ श्रद्धाꣳहृदय्ययाकृत्या ॥ श्रद्धया हूयते हविः स्वाहा ॥ श्रद्धाया इदम् ॥४॥ ॐ श्रद्धां प्रातर्हवामहे ॥ श्रद्धां मध्यन्दिनं परि ॥ श्रद्धा सूर्यस्य निमुचि ॥ श्रद्धे श्रद्धापयेह मा स्वाहा ॥ श्रद्धाया इदम् ॥५॥ ॐ श्रद्धा देवानधि वस्ते ॥ श्रद्धा विश्वमिदं

जगत् ॥ श्रद्धां कामस्य मातरम् ॥ हविषा वर्धयामसि स्वाहा ॥ श्रद्धाया इदम् ॥६॥ ॐ श्रद्धया देवो देवत्वमश्नुते ॥ श्रद्धा प्रतिष्ठा लोकस्य देवी ॥ सा नो जुषाणोपयज्ञमागात् ॥ कामवत्साऽमृतं दुहाना स्वाहा ॥ श्रद्धाया इदम् ॥७॥ ॐ श्रद्धा देवी प्रथमजा ऋतस्य ॥ विश्वस्य भर्त्री जगतः प्रतिष्ठा ॥ ताꣳश्रद्धाꣳहविषा यजामहे ॥ सा नो लोकममृतं दधातु स्वाहा ॥ श्रद्धाया इदम् ॥८॥ इत्यष्टौ श्रद्धासूक्तम् ॥४८॥ अथ मेधासूक्तम् ॥ ॐ मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना ॥ त्वया जुष्टा नुदमाना दुरुक्तान्बृहद्वदेम विदथे सुवीराः स्वाहा ॥ मेधाया इदम् ॥१॥ ॐ त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मा गतश्रीरुत त्वया ॥ त्वया जुष्टश्चित्रं विन्दते वसु सा नो जुषस्व द्रविणो न मेधे स्वाहा ॥ मेधाया इदम् ॥२॥ ॐ मेधां म इन्द्रो ददातु मेधां देवी सरस्वती ॥ मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजा स्वाहा ॥ मेधाया इदम् ॥३॥ ॐ अप्सरासु च या मेधा गन्धर्वेषु च यन्मनः ॥ दैवीं मेधा सरस्वती सा मां मेधा सुरभिर्जुषताꣳस्वाहा ॥ मेधाया इदम् ॥४॥ ॐ आ मां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगम्या ॥ ऊर्जस्वती पयसा पिन्वमाना सा मां मेधा सुप्रतीका जुषन्ताꣳस्वाहा ॥ मेधाया इदम् ॥५॥ इति पञ्च मेधासूक्तम् ॥ (मन्त्राः ५३) ॥

अत्र देवींवाचमित्यादिसप्तसु मन्त्रेष्वादिममन्त्रद्वयेन पक्वं हुत्वा, अवशिष्टपञ्चमन्त्रैः सह सरस्वतीसूक्त-श्रद्धासूक्त-मेधासूक्तैश्चोपहुत्य, स्विष्टकृदादिवरदानान्तं कृत्वा कलशस्थां देवीं सम्प्रार्थ्य, ततः शिष्यमुपवेश्य, तस्मिन्देवीमावाह्य, आपोहिष्ठा, हिरण्यवर्णाः, पवमानस्सुवर्जन, इत्येतैः सरस्वती-श्रद्धा-मेधासूक्तैश्च कलशोदकेन शिष्यमभिषिच्य, गन्धपुष्पादिभिरलङ्कृत्य, नानाविधवनौषधिरसेन सम्पातमाज्यं सम्मिश्य, शिरोमेश्रीरित्याद्यनुवाकेन अभिमन्त्र्य,

स्वाहान्तेन व्याहृतिचतुष्टयेन चतुर्वारं प्राशयेत् ॥ यथा ॥ ॐ शिरो मे श्रीः ॥ यशो मुखम् ॥ त्विषिः केशाश्च श्मश्रूणि ॥ राजा मे प्राणोऽमृतम् ॥ सम्राट् चक्षुः ॥ विराट्च्छ्रोत्रम् ॥ जिह्वा मे भद्रम् ॥ वाङ्महः ॥ मनो मन्युः ॥ स्वराड्भामः ॥ मोदाः प्रमोदा अङ्गुलीरङ्गानि ॥ चित्तं मे सहः ॥ बाहू मे बलमिन्द्रियम् ॥ हस्तौ मे कर्मवीर्यम् ॥ आत्मा क्षत्रमुरो मम ॥ पृष्टीर्मे राष्ट्रमुदरमꣳसौ ॥ ग्रीवाश्च श्रोण्यौ ॥ ऊरु अरत्नी जानुनी ॥ विशो मेऽङ्गानि सर्वतः ॥ नाभिर्मे चित्तं विज्ञानम् ॥ पायुर्मेऽपचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे ॥ भगः सौभाग्यं पसः ॥ जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि ॥ विशि राजा प्रतिष्ठितः ॥ प्रतिक्षत्रे प्रतितिष्ठामि राष्ट्रे ॥ प्रत्यश्वेषु प्रतितिष्ठामि गोषु ॥ प्रत्यङ्गेषु प्रतितिष्ठाम्यात्मन् ॥ प्रतिप्राणेषु प्रतितिष्ठामि पुष्टे ॥ प्रतिद्यावा पृथिव्योः ॥ प्रतितिष्ठामि यज्ञे ॥ त्रयो देवा एकादश ॥ त्रयस्त्रिꣳशाः सुराधसः ॥ बृहस्पतिपुरोहिताः ॥ देवस्य सवितुः सवे ॥ देवा देवैरवन्तु मा ॥ प्रथमा द्वितीयैः ॥ द्वितीयास्तृतीयैः ॥ तृतीयाः सत्येन ॥ सत्यं यज्ञेन ॥ यज्ञो यजुर्भिः ॥ यजूꣳषि सामभिः ॥ सामान्यृग्भिः ॥ ऋचो याज्याभिः ॥ याज्या वषट्कारैः ॥ वषट्कारा आहुतीभिः ॥ आहुतयो मे कामान्त्समर्धयन्तु ॥ इति पठित्वा अभिमन्त्रय् ॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ॐ सुवः स्वाहा ॥ ॐ भूर्भुवःसुवः स्वाहा ॥ इति [1]चतुर्भिश्चतुर्वारं प्राश्य, अथ हरिं लक्ष्मीं सरस्वतीं विनायकं स्वविद्यासूत्रकारं च सम्पूज्य, ब्राह्मणान् दक्षिणादिभिः सन्तोष्य, सूर्यमुपस्थाय, गायत्रीमष्टोत्तरशतं जप्त्वा, ब्रह्माञ्जलिं कृत्वा, प्रणवपूर्वकं गायत्रीं पच्छोर्धर्चशोऽनवानमुक्त्वा, किञ्चिद्वेदमधीत्य विरमेत् ॥ अत्र विशेषस्तु पूर्वोक्तपारिजातप्रयोगे द्रष्टव्यः ॥ इति वेङ्कटेशीये वेदसारम्भप्रयोगः समाप्तः ॥ छ ॥

---

[1] अत्र ''भूः स्वाहा'' इत्यादि चतुर्णां ''शिरो मे श्रीः'' इत्यादि ''समर्धयन्तु'' इत्यन्तस्य चतुवारं पठितस्य अन्ते पृथक् पृथग्योजनेन चतुवारं प्राशयेदिति केचित् ॥ तत्र

अथ व्रतसमावर्तनप्रयोगः ।। व्रतसमावर्तनयोः समानकालकर्तव्यतायाः शिष्टाचारप्राप्तत्वात् सहैव निर्णयः कथ्यते ।। पारिजाते 'तिथिनक्षत्रवारांशवर्गोदयनिरीक्षणम् ।। चौलवत्सर्वमाख्यातं सगोदानव्रतेषु च' इति ।। अथ समावर्तनम् ।। श्रीधरीये 'वागीशादितिसौम्यपौष्णदिनकृन्मित्रोत्तरारोहिणीगोविन्देषु शशाङ्कभानुगुरुविच्छुक्रांशवारादिषु ।। रिक्तां पर्व तथाष्टमीं प्रतिपदं मेषं च कीटं हरिं हित्वा शुद्धियुतेऽष्टमे हि विमले कुर्यात्समावर्तनम्' ।। निर्णयसिन्धौ ।। सुरेश्वरः 'भानुभानुजयोर्वारे नक्षत्रे च व्रतोदिते ।। ताराचन्द्रविशुदौ च स्यात्समावर्तनक्रिया' इति ।। रोहिणीमृगशिरःपुनर्वसुपुष्योत्तरात्रयहस्तानुराधारेवतीश्रवणेषु सूत्रोक्तचित्राविशांखयोश्च भानुसोमबुधगुरुशुक्रवारेषु द्वितीयातृतीयापञ्चमीसप्तमीदशम्येकादशीत्रयोदशीषु मेषसिंहवृश्चिकवर्जितराशिषु अष्टमे शुद्धे दिवैव समावर्तनं कुर्यात् ।। अत्र 'व्रतानि प्रजासंस्कारकर्माणि भवन्ति अध्ययनाङ्गानि च' इति विष्णुभट्टः ।। सूत्रे 'वेदोपाकरणस्य वेदस्नातको व्रतस्नातको वेदव्रतस्नातको वेति, एवमेव त्रयः स्नातका भवन्ति, वेदमधीत्य व्रतमकृत्वा यः स्नाति स वेदस्नातकः, यस्तु वेदमनधीत्य चीर्णव्रतः स्नाति स व्रतस्नातकः, वेदमधीत्य व्रतं च कृत्वा यः स्नाति स वेदव्रतस्नातकः' इति, 'एवं स्नात्वा भार्यामुद्वहेत्' इति विष्णुभट्टः ।। सूत्रे 'कालातिक्रमप्रायश्चित्तहोमपूर्वकं पृथक् पृथक् तन्त्रान्वा वेदव्रतानि कृत्वा समावर्तनं कुर्यात् ।। अतःपरं माणवक एवाचार्यानुशिष्टः कर्माणि करोति' इति ।। अत्र कुमारस्वामिकारिका 'होतृशुक्रियोपनिषद्गोदानं सम्मितं तथा ।। एषां व्रतानां पञ्चानां कर्म तन्त्रैक्यमुच्यते ।। पुण्याहवाचनं सद्यो नान्दी कृत्वाऽथ मन्त्रवत् ।। मौञ्जीदण्डोपवीतादि धृत्वा पूर्वधृतं त्यजेत् ।। उल्लेखनप्रभृत्यग्निसुखान्तं पूर्ववद्धुनेत् ।। जयाभ्यातानहोमादि सावित्रीपक्वहोमके ।। स्रुवेणाज्यस्य जुहुयाद्याज्ञिक्यादींश्च तेष्विह ।। होत्रादिव्रतनामानि सकृत्संहितया वदन् ।। चतुर्थ्यन्तं काण्डर्षीन् ते प्रजापतिसोमकौ ।। अग्निश्च विश्वेदेवाश्च स्वयम्भूरिति च क्रमात् ।। तत्तद्व्रत समिद्धोमे काण्डाधीतिसमाह्यपि ।। इषेत्वेत्यापउन्दन्तु उद्धन्यानुमतिस्सह ।। तन्त्रे स्विष्टकृतः पूर्वं तथैवोत्सर्जनान्यपि ।। स्विष्टादिगोप्रदानैर्वा सिध्यन्त्येतद्व्रतानि च' इति ।। गृह्यसूत्रे 'व्रतैर्युक्तस्तु योऽधीते श्रोत्रियो भवति द्विजः ।। व्रताचरणमात्रेण श्रोत्रियो भवति ध्रुवम् ।। व्रतैर्हीनस्त्रिवेदी स्याच्छ्रोत्रियत्वं न लभ्यते' इति ।। कारिकायाम् 'व्रतान्यावश्यचर्याणि चत्वार्युक्तानि यानि तु ।। अशक्तो होममात्रेण चर्यन्ते त्वेकतन्त्रतः ।। कालायत्तमिदं ज्ञेयं कालो हि दुरतिक्रमः ।। तस्मात्तं निष्कृतिं कृत्वा तन्त्रैकेनापि वाऽऽचरेत् ।। त्वमग्ने व्रतपेत्येकः सावित्री च मनस्वती ।। महाव्याहृतयश्चेति प्रायश्चित्ताहुतिर्मता ।। मौञ्जीबन्धोपवीतानि वासः कृष्णजिनौ तथा ।। पूर्वोपयुक्तान्युत्सृज्य धार्याणि स्युर्व्रते व्रते ।। उपवीतपरित्यागो न कार्य इति केचन ।। मुहूर्ते मन्त्रतो दत्तं नोत्सृजेद्धि कथञ्चन' इति ।।छ ।।

अथ प्रयोगः ।। विवाहदिनात्पूर्वेद्युः सद्यो वा वैश्वदेवान्तं नित्यकर्म कृत्वा, 'नान्दीसमाराधनं कर्तुं गणपतिपूजनं पुण्याहवाचनं च करिष्ये' इति सङ्कल्प्य तत्कृत्वा, 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वा, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम कुमारस्य श्वः करिष्यमाण ग्रहशान्ति-व्रतसमावर्तन-विवाहाङ्गतया विहितं नान्दीसमाराधनं हिरण्येन करिष्ये' इति संकल्प्य तत्कृत्वा, तस्यामेव रात्रौ उकशान्ति-प्रतिसरबन्धौ कृत्वा, अथाऽपरेद्युः स्नानपवनादिपूर्वकं व्रतादीनि कुर्यात् ।। सद्यश्चेत्प्रातर्मङ्गलस्नानादि नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, स्नानपवनादिकं

कृत्वा, गणपतिं सम्पूज्य, नान्द्यङ्गपुण्याहं वाचयित्वा, 'मम कुमारस्य अद्य करिष्यमाणग्रहशान्ति-व्रत-समावर्तनाङ्गतया विहितं रात्रौ करिष्यमाणविवाहाङ्गतया विहितं नान्दीसमाराधनं हिरण्येन करिष्ये' इति सङ्कल्पः ।। सद्यश्चेदद्य करिष्यमाणविवाहाङ्गतया विहितमिति विशेषः ।। तत्कृत्वा, कर्माङ्गपुण्याहवाचनं कुर्यात् ।। 'अद्य करिष्यमाणग्रहशान्ति-होतृशुक्रियोपनिषद्गोदानसम्मितव्रत-समावर्तनकर्मणां पुण्याहं भवन्तो ब्रुवन्तु' इति त्रिः ।। 'कर्मभ्यः स्वस्ति भवन्तो ब्रुवन्तु' इति त्रिः ।। 'कर्मणां ऋद्धिं भवन्तो ब्रुवन्तु' इति त्रिः ।। 'आदित्यादिनवग्रहाः प्रीयन्ताम् ।। सविता प्रीयताम् ।। श्रीः प्रीयताम्' इति विशेषः ।। एवं पुण्याहं वाचयित्वा ग्रहशान्त्यर्थमाचार्यादीन् वरयेत् ।। 'अस्मिन् नवग्रहहोमकर्मण्याचार्यं त्वां वृणे, ब्रह्माणं त्वां वृणे, ऋत्विजं त्वां वृणे' इति वृत्वा, प्रधानसङ्कल्पं कुर्यात् ।। आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य, 'मम अश्विनीनक्षत्रे मेषराशौ जातस्य शिवशर्मणः जन्मराश्यपेक्षया ये ये ग्रहा अरिष्टस्थानेषु स्थिताः तेषां ग्रहाणां शुभैकादशस्थानफलावाप्त्यर्थं, मम कान्ताया अनूराधानक्षत्रे वश्चिकराशौ जातायाः तस्या जन्मराश्यपेक्षया ये ये ग्रहा अरिष्टस्थानेषु स्थिताः तेषां ग्रहाणां शुभैकादशस्थानफलावाप्त्यर्थं, मम कुमारस्य नक्षत्रे राशौ जातस्य ये ये ग्रहा इत्यादि, करिष्यमाणविवाहलग्नकाले आदित्यादीनां नवानां ग्रहाणां शुभैकादशस्थानफलावाप्त्यर्थं, सुलग्नसिद्ध्यर्थं नवग्रहप्रीत्यर्थं नवग्रहशान्तिहोमं करिष्ये' इति ग्रहशान्तिसङ्कल्पः ।। देशकालौ सङ्कीर्त्य, 'मम प्रजापत्यसौम्याग्नेयवैश्वदेवस्वयम्भुकाण्डाध्ययनाङ्गभूतानां होतृशुक्रियोपनिषद्गोदानसम्मितव्रतानां उपाकर्मोत्सर्जनहोमं मुख्यकालातिपत्तिप्रायश्चित्तपूर्वकं समानतन्त्रेण करिष्ये' इति व्रतसङ्कल्पः ।। 'मम स्नातकत्वसिद्ध्यर्थं समावर्तनाख्यं कर्म करिष्ये' इति समावर्तनसङ्कल्पः ।। अथ स्थण्डिलोल्लेखनादिलौकिकाग्निं प्रतिष्ठाप्य, 'ॐ उपावरोह जातवेदः०, पुनस्त्वम्०' इति आत्मनि समारोपितमग्निं स्थण्डिलाग्नौ संयोज्य, वक्ष्पमाणब्रह्मचर्यव्रतलोपप्रायश्चित्तं कृत्वा, पूर्ववद्धृतमेखलाजिनदण्डांश्च त्यक्त्वा, तत्तन्मन्त्रैः पुनर्नवं धृत्वा, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य,

उपाकर्मोत्सर्जनहोमं मुक्यकालातिपत्तिप्रायश्चित्तपूर्वकं समानतन्त्रेण करिष्ये, होतृशुक्रियोपनिषद्गोदानसम्मितव्रतानां उपाकर्मोर्जनहोमः कर्म आघारवत्तन्त्रमित्यादि समुद्भवो नामाग्निः सविता देवता चरुर्हविः, प्रधानहोमे याज्ञिक्यादयो देवता आज्यं हविः, व्रतहोमे अग्निवाय्वादित्यव्रतपतयो देवता आज्याक्तपालाशसमिधो हविः अग्निः स्विव्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता, इत्यादि सङ्कल्प्य, अन्वाधानाद्याप्रणीताभ्यः कृत्वा, अग्रेणाग्निं पञ्चकोष्ठेषु तण्डुलपुञ्जेषु उपरि कूर्चं निधाय, प्राजापत्यसौभ्याग्नेयवैश्वदेव-स्वयम्भुकाण्डाध्ययनाङ्गभूतं पञ्चकाण्डर्षिपूजनं करिष्ये ॥ अथ निवीती ॥ ॐ भूः प्रजापतिं काण्डर्षिं आवाहयामि, ॐ भुवः प्रजापतिं०, ओ॒ुं सुवः प्रजापतिं०, ॐ भूर्भुवःसुवः प्रजापतिं० ॥ एवं सोमं, अग्निं, विश्वान् देवान्, स्वयम्भुवं काण्डर्षिमावाहयामि ॥ इत्यावाह्य, गन्धपुष्पादिभिरभ्यर्च्यं ॥ प्रजापतिं काण्डर्षिं तर्पयामि तर्पयामि ॥ एवं सोमं काण्डर्षिं०, अग्निं काण्डर्षिं, विश्वान् देवान् काण्डर्षीन्०, स्वयम्भुवं काण्डर्षिं तर्पयामि तर्पयामि ॥ इति द्विर्द्विस्तर्पयित्वा ॥ उपवीती ॥ सवित्रे जुष्टं निर्वपामि इति त्रिः तूष्णीं चतुर्थं, पुनः सवित्रे जुष्टं निर्वपामि इति पूर्ववन्निरूप्य ॥ ॐ देवस्य त्वा ... हस्तभ्यां सवित्रे वो जुष्टं प्रोक्ष्यामि इति सकृन्मन्त्रेण द्विस्तूर्षीं प्रोक्ष्य, पुनः सवित्रे वो जुष्टं प्रोक्ष्यामि इति त्रिः पूर्ववत्प्रोक्ष्य, अग्निमुखान्तं कृत्वा, होतृशुक्रियोपनिषद्गोदानसम्मितव्रतानां उपाकर्ममुख्यकालातिपत्तिप्रायश्चित्तहोमं करिष्ये इति सङ्कल्प्य ॥ चित्तञ्च स्वाहेत्यादि रुद्राहुत्यन्तं हुत्वा, ततं म आपो, यत्पाकत्रा, महोज्योतिः, यन्मआत्मनः, पुनरग्निः, व्याहृतीश्चेति प्रायश्चित्तं हुत्वा, कारिकोक्तप्रायश्चित्तम् ॥ यथा ॥ ॐ त्वमग्ने व्रतपा असि देव आमर्त्येष्वा ॥ त्वं यज्ञेष्वीड्यः स्वाहा ॥ अग्नये व्रतपतय इदम् ॥ ॐ यद्वो वयं प्रमिनामव्रतानि विदुषां देवा अविदुष्टरासः ॥ अग्निष्टद्विश्वमापृणाति विद्वान्येभिर्देवा॒ऋतुभिः कल्पयाति स्वाहा ॥ अग्नये व्रतपतय इदम् ॥ तत्सवितुः ॥ मनोज्योतिः महाव्याहृतयश्चेति प्रायश्चित्तं वा जुहुयात् ॥ एतयोः अन्यतरेण हुत्वा, अथ सवित्रे

त्वा, सवित्रे त्वा इति विभागद्वयं कृत्वा, मिन्दाहुतीः व्याहृतीश्च हुत्वा, गायत्र्या पक्वं हुत्वा, अथाज्याहुतीरूपजुहोति ॥ ॐ याज्ञिकीभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदान-सम्मितीभ्यः स्वाहा ॥ याज्ञिकीभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदासनसम्मितीभ्य इदम् ॥ ॐ साꣳहितीभ्यो देवताभ्यो होतृशु ... मितीभ्यः स्वाहा ॥ ॐ वारुणीभ्यो देवताभ्यो होतृशु ... मितीभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्यो होतृशु ... मितीभ्यः स्वाहा ॥ अथ निवीती ॥ ॐ प्रजापतये काण्डऋषये स्वाहा ॥ प्रजापतये काण्डऋषय इदम् ॥ ॐ सोमाय काण्डऋषये स्वाहा ॥ सोमाय काण्डऋषय इदम् ॥ ॐ अग्नये काण्डऋषये स्वाहा ॥ अग्नये काण्डऋषय इदम् ॥ ॐ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्यः स्वाहा ॥ विश्वेभ्यो देवेभ्यः काण्डऋषिभ्य इदम् ॥ ॐ स्वयम्भुवे काण्डऋषये स्वाहा ॥ स्वयम्भुबे काण्डऋषय इदम् ॥ अथोपवीती ॥ ॐ सदसस्पति० ॥ सदसस्पतय इदम् ॥ ॐ तत्सवितु० ॥ सवित्र इदम् ॥ ॐ ऋग्वेदाय स्वाहा ॥ ऋग्वेदायेदम् ॥ ॐ यजुर्वेदाय स्वाहा ॥ यजुर्वेदायेदम् ॥ ॐ सामवेदाय स्वाहा ॥ सामवेदायेदम् ॥ ॐ अथर्ववेदाय स्वाहा ॥ अथर्ववेदायेदम् ॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ अथर्वाङ्गिरोभ्य इदम् ॥ ॐ ब्राह्मणेभ्यः स्वाहा ॥ ब्राह्मणेभ्य इदम् ॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ इतिहासपुराणेभ्य इदम् ॥ ॐ कल्पेभ्यः स्वाहा ॥ कल्पेभ्य इदम् ॥ ॐ गाथाभ्यः स्वाहा ॥ गाथाभ्य इदम् ॥ ॐ नाराशꣳसीभ्यः स्वाहा ॥ नाराशꣳसीभ्य इदम् ॥ ॐ रैभीभ्यः स्वाहा ॥ रैभीभ्य इदम् ॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ सर्पदेवजनेभ्य इदम् ॥ ॐ सर्वभूतेभ्य स्वाहा ॥ सर्वभूतेभ्य इदम् ॥ एवं याज्ञिक्यादयश्चत्वारः, पञ्चकाण्डऋषयः, सदसस्सपत्यादयः पञ्चदश, इति सूत्रोक्तप्रकारेण चतुर्विंशत्यज्याहुतीर्हुत्वा, अथ होत्रादिव्रतपञ्चकस्य प्रतिव्रतं चतस्त्रः समिधोऽभ्यादधाति 'तत्तद्व्रतं समिद्धोम' इति कुमारस्वमिः ॥ आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रा

अप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति ॥ ॐ अग्ने व्रतपते होतारं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता ऽस्वाहा ॥ अग्नये व्रतपतय इदम् ॥ ॐ वायो व्रतपते होतारं व्रतं ... राध्यता ऽस्वाहा ॥ वायवे व्रतपतय इदम् ॥ ॐ आदित्य व्रतपते होतारं व्रतं ... राध्यता ऽस्वाहा ॥ आदित्याय व्रतपतय इदम् ॥ ॐ व्रतानां व्रतपते होतारं व्रतं ... राध्यता ऽस्वाहा ॥ व्रतानां व्रतपतय इदम् ॥ एवमग्रेऽपि ॥ ॐ अग्ने व्रतपते शुक्रियं व्रतम्० ॥ ॐ वायो व्रतपते शुक्रियं व्रतम्० ॥ ॐ अदित्य व्रतपते शुक्रियं व्रतम्० ॥ ॐ व्रतानां व्रतपते शुक्रियं व्रतम्० ॥ ॐ अग्ने व्रतपते उपनिषदं व्रतम्० ॥ ॐ वायो व्रतपते उपनिषदं व्रतम्० ॥ ॐ आदित्यं व्रतपते उपनिषदं व्रतम्० ॥ व्रतानां व्रतपते उपनिषदं व्रतं० ॥ अग्नये व्रतपते गोदानं व्रतं० ॥ वायो व्रतपते गोदानं व्रतं० ॥ आदित्यव्रतपते गोदानं व्रतं० ॥ ॐ व्रतानां व्रतपते गोदानं व्रतम्० ॥ ॐ अग्ने व्रतपते सम्मितं व्रतम्० ॥ ॐ वायो व्रतपते सम्मितं व्रतम्० ॥ ॐ आदित्य व्रतपते सम्मितं व्रतम्० ॥ ॐ व्रतानां व्रतपते सम्मितं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता ऽस्वाहा ॥ पूर्ववत् तत्तन्मन्त्रैरुद्देशत्यागः ॥ अथ ब्रह्मयज्ञधर्मेण प्राजापत्यादिकाण्डाध्ययनं कुर्यात् ॥ 'इषेत्वेत्यनुवाकं प्राजापत्यस्य, आपउन्दन्त्वित्यनुवाकं सोमस्य, उद्धन्यमानमित्यनुवाकमग्निकाण्डस्य, अनुमत्यैपुरोडाशमष्टाकपालमित्यनुवाकं वैश्वदेवकाण्डस्य, संज्ञानंविज्ञानमनुवाकं स्वयम्भुकाण्डस्य' इति सूत्रम्, 'सहवैदेवानाम्' इति विष्णुभट्टः ॥ यथा 'श्रीपरमेश्वरप्रीत्यर्थं प्राजापत्यादिकाण्डाध्ययनं करिष्ये ॥ ॐ विद्युदसि विद्य मे पाप्मानमृतात्सत्यत्यमुपैमि' इत्यपः स्पृष्ट्वा, आत्मानं प्रदक्षिणं परिषिच्य, त्रिः आचमेत्, द्विः परिमृज्य सकृदुपस्पृश्य, शिरश्चक्षुषी नासिके श्रोत्रे

हृदयमालभ्य, वामपादोरि दक्षिणपादं प्रतिष्ठाप्य, दक्षिणोत्तरौ पाणिपादौ सपवित्रौ कृत्वा, ॐ भूर्भुवःसुवरित्युक्त्वा, गायत्री पच्छोर्धर्चशोऽनवानमुक्त्वा, वेदादीन् जपित्वा, प्राजापत्यादिकाण्डादीन् जपेत् ॥ इषेत्वा०, आप उन्दन्तु०, उद्धन्यमानम्०, अनुमत्यै परोडाशम्०, संज्ञानं विज्ञानम्० इति पञ्चानुवाकान् क्रमेणाधीत्य, नमो ब्रह्मण इति त्रिरुक्त्वा, 'ॐ वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्यमुपागाम्' इत्यपः स्पृष्ट्वा, आत्मानं प्रदक्षिणं परिषिच्य, आचम्य मिन्दाहुतीव्याहृतीः च हुत्वा, अथ होतृशुक्रियोपनिषद्गोदानसम्मितव्रतानामुत्सर्जनमुख्यकालातिपत्तिप्रायश्चित्तहोमं करिष्ये ॥ चित्तश्चेत्यादि रुद्रःपशूनामित्यन्तं ततम्मआपो यत्पाकत्रा मनोज्योतिर्मिन्दाहुती महाव्याहृतीः व्याहृतीश्च हुत्वा, गायत्र्या पक्वं हुत्वा, अथ स्रुवाहुतीर्जुहोति ॥ ॐ याज्ञिकीभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदानसम्मितीभ्यः स्वाहा ॥ याज्ञिकीभ्यो देवताभ्यो होतृशुक्रियोपनिषद्गोदानसम्मितीभ्य इदम् ॥ ॐ साꣳहितीभ्यो देवताभ्यो होतृशु ... सम्मितीभ्यः स्वाहा ॥ साꣳहितीभ्यो देवताभ्यो होतृशु ... सम्मितीभ्य इदम् ॥ ॐ वारुणीभ्यो देवताभ्यो होतृशु ... सम्मितीभ्यः स्वाहा ॥ वारुणीभ्यो देवताभ्यो होतृशु ... सम्मितीभ्य इदम् ॥ सर्वाभ्यो देवताभ्यो होतृशु ... सम्मितीभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्यो होतृ०भ्य इदम् ॥ अथ निवीती ॥ ॐ प्रजापतये काण्डऋषये स्वाहा ॥ ॐ सोमाय काण्डऋषये स्वाहा ॥ ॐ अग्नये काण्डऋषये स्वाहा ॥ ॐ विश्वेभ्यो देवेभ्यः काण्डऋषये स्वाहा ॥ ॐ स्वयम्भुवे काण्डऋषये स्वाहा ॥ ततन्मन्त्रैरुद्देशत्यागः ॥ उपवीती ॥ ॐ सदसस्पति- ॥ ॐ तत्सवितुः० ॥ ॐ ऋग्वेदाय स्वाहा ॥ ॐ यजुर्वेदाय स्वाहा ॥ ॐ सामवेदाय स्वाहा ॥ ॐ अथर्ववेदाय स्वाहा ॥ ॐ अथर्वाङ्गिरोभ्यः स्वाहा ॥ ॐ ब्राह्मणेभ्यः स्वाहा ॥ ॐ इतिहासपुराणेभ्यः स्वाहा ॥ ॐ कल्पेभ्यः स्वाहा ॥ ॐ गाथाभ्यः स्वाहा ॥ ॐ नाराशꣳसीभ्यः स्वाहा ॥ ॐ

रैभीभ्यः स्वाहा ॥ ॐ सर्पदेवजनेभ्यः स्वाहा ॥ ॐ सर्वभूतेभ्यः स्वाहा ॥ तत्तन्मन्त्रैरुद्देशत्यागः ॥ ततः पूर्वोक्तपालाशसमिधोऽभ्यादधाति ॥ ॐ अग्ने व्रतपते होतारं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ ॐ वायो व्रतपते होतारं व्रतम्० ॥ ॐ आदित्य व्रतपते होतारं व्रतम्० ॥ ॐ व्रतानां व्रतपते होतारं व्रतम्० ॥ ॐ अग्ने व्रतपते शुक्रियं व्रतम्० ॥ ॐ वायो व्रतपते शुक्रियं व्रतम्० ॥ ॐ आदित्य व्रतपते शुक्रियं व्रतम्० ॥ ॐ व्रतानां व्रतपते शुक्रियं व्रतम्० ॥ ॐ अग्ने व्रतपते उपनिषदं व्रतम्० ॥ ॐ वायो व्रतपते उपनिषदं व्रतम्० ॥ ॐ आदित्य व्रतपते उपनिषदं व्रतम्० ॥ ॐ व्रतानां व्रतपते उपनिषदं व्रतम्० ॥ ॐ अग्ने व्रतपते गोदानं व्रतम्० ॥ ॐ वायो व्रतपते गोदानं व्रतम्० ॥ ॐ आदित्य व्रतपते गोदानं व्रतम्० ॥ ॐ व्रतानां व्रतपते गोदानं व्रतम्० ॥ ॐ अग्ने व्रतपते सम्मितं व्रतम्० ॥ ॐ वायो व्रतपते सम्मितं व्रतम्० ॥ ॐ आदित्य व्रतपते सम्मितं व्रतम्० ॥ ॐ व्रतानां व्रतपते सम्मितं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ पूर्ववदुद्देत्यागः ॥ अथ स्विष्टकृतमवदाय, अन्तःपरिधौ निधाय, व्याहृतिभिरुपहुत्य, स्विष्टकृदाद्युत्तरपरिषेकात्प्राक् कृत्वा, अग्रेणाग्निं सव्याहृतिगायत्र्या पलाशपर्णेषु हुतशेषं निधाय, तथैव हुतशेषं पक्वादुपादाय, तत्सवितुरिति प्राश्य, उत्तरपरिषेक-प्रणीताविमोक-ब्रह्मोद्वासनानि च कृत्वा, अनेन होतृशुक्रियोपनिषद्गोदानसम्मितव्रतानां उपाकर्मोत्सर्जनहोमकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ यद्वा ऋग्वेदादीनां मन्त्रवद्धोमः कार्यः ॥ यथा-याज्ञिक्यादि सावित्र्यन्तं हुत्वा ॥ 'ॐ अग्निमीळे ... धातमम् स्वाहा ॥ ऋग्वेदाय इदम्' इति ऋग्वेदस्य ॥ 'ॐ इषे त्वोर्जे त्वा ... पशून्पाहि स्वाहा ॥ यजुर्वेदायेदम्' इति यजुर्वेदस्य ॥ 'ॐ अग्न आयाहि ... बर्हिषि स्वाहा ॥

सामवेदायेदम्' इति सामवेदस्य ॥ 'शन्नो देवी ... स्रवन्तु नः स्वाहा ॥ अथर्ववेदायेदम्' इत्यथर्ववेदस्य ॥ 'ॐ ऋचो यजूꣳषि सामानि ॥ अथर्वाङ्गिरसश्च ये स्वाहा ॥ अथर्वाङ्गिरोभ्य इदम्' इत्यथर्वाङ्गिरसाम् ॥ 'ॐ इतिहासपुराणानि स्वाःहा ॥ इतिहासपुराणेभ्य इदम्' इति इतिहासपुराणानाम् ॥ 'ॐ सर्पदेवजनाश्च ये स्वाहा ॥ सर्पदेवजनेभ्य इदम्' इति सर्पदेवजनानाम् ॥ 'ॐ ये च लोका ये चालोकाः ॥ अन्तर्भूतं प्रतिष्ठितꣳस्वाहा ॥ सर्वभूतेभ्य इदम्' इति सर्वभूतानाम् ॥ शेषं समानम् ॥ सूत्रे एवं अभिधाय, यद्वा नाममन्त्रैरित्युक्तत्वान्नाममन्त्रैर्वा होमः ॥ इति वेङ्कटेशीयप्रयोगमालायां होत्रादिव्रतप्रयोगः ॥छ ॥

अथ समावर्तनम् ॥ तत्रादौ ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥ यथा आसनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य, 'मम शौचाचार-स्नान-सन्ध्यावन्दन-दर्भ-भिक्षा-अग्निकार्यराहित्य, शूद्रादिस्पर्शन, कौपिन-कटिसूत्र-यज्ञोपवीत-मेखला-दण्ड-अजिनत्याग, दिवास्वापन, छत्रधारण, पादुकाध्यारोहण, मालाधारण, उद्वर्तन, अनुलेपन, अञ्जन, जलक्रीडा-द्यूत-नृत्य-गीत-वाद्याद्यभिरति, पाषण्डादिसम्भाषण, पर्युषितभोजनादि-सर्वब्रह्मचर्यनियमलोपप्रायश्चित्तार्थं कृच्छ्राचरणपूर्वकं प्रायश्चित्तहोमं करिष्ये' इति सङ्कल्प्य ॥ 'मम ब्रह्मचारिव्रतलोपप्रायश्चित्तार्थं प्राजापत्यकृच्छ्रप्रत्याम्नायत्वेन गोनिष्क्रयीभूतयथाशक्तिहिरण्यदानं करिष्ये' इति सङ्कल्प्य तद्दत्वा, 'अथ ब्रह्मचारिव्रतलोपप्रायश्चित्तहोमं करिष्ये, प्रायश्चित्तहोमः कर्म आपूर्विकं तन्त्रं चतस्रः सामिधेन्यः चित्तिर्नामाग्निः, सविता देवता चरुर्हविः' इत्यादि सङ्कल्प्य, गायत्र्या पक्वं हुत्वा, अथ स्रुवेण आज्यं आदाय, व्याहृतिचतुष्टयं 'पाहिनो अग्न' इति पञ्च पुनर्व्याहृतिचतुष्टयं इति पाहित्रयोदशहोमं कृत्वा, स्विष्टकृदादिहोमशेषं समापयेत् ॥ अथवा केवलाज्येन होममेव कुर्यात् ॥ तत्र प्रोक्षण्याज्यस्थालीस्रुक्स्रुवावित्यासाद्य, आज्यसंस्कारान्तं कृत्वा, पाहित्रयोदशहोमं कुर्यात् ॥ इति ब्रह्मचारिव्रतलोपप्रायश्चित्तम् ॥छ ॥

अथ समावर्तनम् ।। 'विद्यान्ते अर्थदानेन गुरुं सन्तोष्य समावर्तनं कुर्यात्' इत्याश्वलायनप्रयोगरत्ने ।। विष्णुभट्टोऽपि 'एवं गुरुकुले वसन् वेदं वा व्रतं वा उभयं वा पारं नीत्वा, गुरवे धनं दत्वा, तदनुज्ञया स्नायात् इति ।। पूर्वोक्तस्वानुकूलदिने पूर्वपक्षे सूर्योदयात्पूर्वमेव गृहं प्रविश्य, अन्तर्लोम्ना चर्मणा द्वारं पिधाय, यथा नैतदहरेनमादित्योऽभितपेत् मध्यंदिने भिक्षां दद्यात्' इति सूत्रम् ।। अथ मध्यंदिन आगते समावर्तनं कुर्यात् ।। यदि व्रतान्तेऽग्निसमारोपणं न कृतं चेत्तत्रैव समावर्तनं कुर्यात् ।।

समारोपणे कृते स्थण्डिलोल्लेखनादिकं कृत्वा, पूर्ववदात्मसमारोपितमग्निं प्रतिष्ठाप्य, आसनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य, 'मम स्नातकत्वसिद्ध्यर्थं समावर्तनहोमं करिष्ये, समावर्तनहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ परिवर्तो नामाग्निः श्रीर्देवता चरुर्हविः अग्निस्विष्टकृत्' इत्यादि सङ्कल्प्य, अन्वाधानं कृत्वा, प्राकृतपात्राण्यासाद्य, एरकाञ्चोपबर्हणं, नापितं क्षुरं, वैतसं दन्तधावनं, उष्णाश्चापः शीताश्च, सर्वसुरभिपिष्टमञ्जनं, पुष्पमालां, दर्पणं अहतं वासः, प्रावरणं वसनान्तरं, सुवर्णोपधानं बादरमणिं, सूत्रं च, प्रवृत्तौ च, दण्डं, उपानहौ, छत्रमित्येतानि सकृदेवासाद्य ।। अस्यार्थः - एरका शय्याविशेषः, उपबर्हणं नाम तस्योपरि शिरःप्रदेशयोग्यवस्त्रबन्धविशेषः, अहतं वासः तल्लक्षणं पूर्वमेवोक्तं, प्रावरणं नाम शीतादिनिवारणाच्छादनवस्त्रं, बादरमणिं प्रवालमणिं, प्रवृत्तौ कुण्डले ।। इत्येतानि सकृदेवासाद्य, आप्रणीताभ्यः कृत्वा, 'श्रियै जुष्टं निर्वपामि' इति चरुं निरूप्य, आज्यं संस्कृत्य, अग्निमुखान्तं कृत्वा, पालाशीꣳसमिधं आज्येनाङ्क्त्वा, अभ्याधापयन् वाचयति ।। ॐ इमꣳस्तोममर्हते जातवेदसे रथमिव सम्महे मा मनीषया ।। भद्रा हि नः प्रमतिरस्य सꣳसद्यग्ने सख्ये मारिषामा वयं तव स्वाहा ।। जातवेदसेऽग्नय इदम् ।। अथ शय्यायां उदीचीनशिरा निपद्यते (उपविशतीत्यर्थः) 'ॐ त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषं अगस्त्यस्य त्र्यायुषं ऋषीणां च त्र्यायुषं यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषꣳशतायुषम्' इति ।। शिर उद्यमानमनुमन्त्रयते (उद्यमानमद्भिरार्द्रीक्रियमाणमित्यर्थः) 'ॐ शिवा मे भवथ सꣳस्पृशे इति ।। क्षुरमभिमन्त्रयते ● ॐ

क्षुरो नामासि स्वधितिस्ते पिता नमस्ते अस्तु मा मा हिꣳसीः ●इति ॥ अथ क्षुरेण उप्यमानं अनुमन्त्रयते ●ॐ यत्क्षुरेण वर्चयसि वप्त्रा वपसि केशश्मश्रु वर्चय मे मुखं मा म आयुः प्रमोषीः ●इति ॥ श्मश्रूण्येवाग्रे वपते, अथोपकुक्षौ (तदुपरितनरोमाणीत्यर्थः), अथ केशान्, इति क्रमेण वापयित्वा, अथ काममितराण्यङ्गानि च वापयित्वा, नखान्निकृत्य, दर्भस्तम्बे निदधाति, अथाग्नेः पश्चात्प्राङ्मुख उपविश्य मेखलां विस्रंसयति ॥ ●ॐ इमं विष्यामि वरुणस्य पाशं यमबध्नीत सविता सुकेतः ॥ धातुश्च योनौ सुकृतस्य लोके स्योनं मे सह पत्या करोमि ●इति मेखलां विस्रस्य ब्रह्मचारिणे प्रयच्छन्नाह ●इमां हृत्वा न्यग्रोधे वा उदुम्बरमूले वा न्यधत्ताम् ●इति ॥ ततो ब्रह्मचारी तां गृहीत्वा तत्र निदधाति ●ॐ इदमहं केशवशर्मणः शुचा पाप्मानमवगूहाम्युत्तरस्य द्विषद्भ्यः ●इति ॥ अत्रैव दण्डमजिनं विसृज्य, अप उपस्पृश्य, ब्रह्मचारिधर्मान् परित्यज्य, शकलैर्दन्तान् विधावयते ॥ ●ॐ अन्नाद्याय व्यपोहध्वं भगो राजायमागमत् ॥ स मे मुखं प्रसर्पतु वर्चसे च भगाय च ●इति आचम्य, उष्णासु शीता अपः आनयति ●ॐ देवमनुष्यस्य व्यावृत्यै ● इति ॥ अपामञ्जलिनोपहत्य मूर्ध्न्यासिञ्चति आपोहिष्ठेति तिसृभिर्हिरण्यवर्णा इति चतसृभिः पवमानस्सुवर्जन इत्येतेनानुवाकेन मार्जयित्वा, ततो विमलजलैर्मङ्गलस्नानं कृत्वा, सर्वसुरभिगन्धं त्रिरालोड्योत्क्षिपति (त्रिरुर्ध्वमुत्क्षिपतीत्यर्थः) ●ॐ नमः शाकजञ्जभाभ्यां नमस्ताभ्यो देवताभ्यो या अभिग्राहिणीः ●इति ॥ तेन सर्वाङ्गमनुलिम्पति ●ॐ अप्सरासु च यो गन्धो गन्धर्वेषु च यद्यशः ॥ दिव्यो यो मानुषो गन्धः समाविशत्विह ● इति ॥ अहतं वासः परिधत्ते ●ॐ सा मा तनूराविश शिवा मा तनूराविश ●इति । एवमेवोत्तरीयम् ॥ अत्रैव द्वितीययज्ञोपवीतधारणम् ॥ अथ प्रागासादितबादरमणिं सुवर्णोपधानं सूत्रे प्रोत्य, दर्व्यामादाय, तत्सूत्रेण दर्वीदण्डं पर्यस्य

जुहोति (सुवर्णयुतबादरमणिं सूत्रे सयोज्य त मणिं दर्व्यां निधाय तत्सूत्रेण दर्वीदण्ड बध्वेत्यर्थः) 'ॐ इयमोषधे त्रायमाणा सहमाना सहस्वती ॥ सा मा करोतु सोमवर्चस्ꣳसूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥ ओषधये सहस्वत्या इदम्' इति ॥ अथैनमुदपात्रेण परिल्पावयति 'ॐ विश्वा उत त्वया वयं धारा उदन्या इव ॥ अतिगाहेमहि द्विषः' इति ॥ 'अपाशोऽसि' इत्युक्त्वा कण्ठे बध्नाति यथा कण्ठस्यार्धे भवति ॥ अथैतौ प्रवृत्तौ सूत्रे प्रोत्य दर्व्यामादाय दर्वीदण्डं सूत्रेण पर्यस्य जुहोति 'ॐ आयुष्यं वर्चस्यꣳरायस्पोषमौद्भिद्यम् ॥ इदꣳहिरण्यं वर्चसे जैत्र्यायाविशतादिम्ꣳरयिꣳस्वाहा ॥ हिरण्यायेदम् ॥१॥ ॐ शुनिमिवाहꣳहिरण्यस्य पितुरिव नामाग्रभेषजम् ॥ तं मा करोतु सोमवर्चसꣳसूर्यवर्चसं ब्रह्मवर्चसिनमन्नादं करोतु स्वाहा ॥ हिरण्यायेदम् ॥२॥ ॐ उच्चैर्वाजिपृतनाजिसत्रासाहं धनञ्जयम् ॥ सर्वाः समृद्धिर्ऋद्धयो हिरण्ये याः समाहिताः स्वाहा ॥ हिरण्यायेदम् ॥३॥ ॐ विराजं च स्वराजं चाभिष्टीर्या च नो ग्रहे ॥ लक्ष्मी राष्ट्रस्य या मुखे तया मा सꣳसृजामसि स्वाहा ॥ लक्ष्म्या इदम् ॥४॥ ॐ यशो मा कुरु ब्राह्मणेषु यशो राजसु मा कुरु ॥ यशो विश्येषु शूद्रेष्वहमस्मि यशस्तव स्वाहा ॥ लक्ष्म्या इदम् ॥५॥' इति ॥ अथैनमुदपात्रेण परिप्लावयति 'ॐ विश्वा उत त्वया वयं धारा उदन्या इव' इति ॥ एतयोर्मणिकुण्डलयोरन्यतरमादाय दक्षिणकर्णे बध्नाति 'ॐ आयुष्यं वर्चस्यम्' इत्येतैः पञ्चभिर्मन्त्रैः ॥ अथैनं परिभ्रामयति 'ॐ ऋतुभिस्त्वार्तवैः संवत्सरस्य धायसा ॥ तैस्त्वा सहानुकरोमि' इति ॥ एवमेवान्यमणिकुण्डलं वामकर्णे बध्वा, अथ माल्यादिकं प्रतिमुञ्चति 'ॐ शुभिके शिर आरोह

शोभयन्ती मुखं मम ॥ मुखꣳहि मम शोभय भूयाꣳसं च भगं करु ॥ यां त्वा जहार जमदग्निः श्रद्धायै कामायान्यै ॥ तां त्वेमां प्रतिमुञ्चेऽहं वर्चसे च भगाय च' इति ॥ अथ त्रैककुदमञ्जनं चक्षुषोः धारयेत् (त्रिककुन्नामपर्वतः तत्र भवं त्रैककुदं तेनाञ्जनेनेत्यर्थः) 'ॐ यदाञ्जनं त्रैककुदं जातꣳहिमवत उपरि ॥ तेन वामाञ्जे मयि पर्वत वर्चसमस्तु' इति ॥ आदर्शे परिपश्यते 'ॐ यन्मे मनः परागतमादर्शे परिपश्यतः ॥ इदं ते परिपश्याम्यायुष्यं वर्चस्यं मे अस्तु' इति ॥ अथोपानहौ उपमुञ्चते 'ॐ द्यौरसि' इति दक्षिणपादे, 'ॐ पृथिव्यसि' इत्युत्तरपादे ॥ अथ दण्डमादत्ते 'ॐ सखामागोपाय' इति ॥ अथ छत्रम् 'ॐ दिव्योऽसि सुपर्णोऽन्तरिक्षान्मा पाहि' इति ॥ 'ॐ वरुणोऽसि धृतव्रतो वारुणमसि' इति कमण्डलुम् (जलपात्रमित्यर्थः) ॥ अथ 'तीर्थयात्रां गच्छामि' इति गुर्वनुज्ञां लब्ध्वा, उत्तराभिमुखः सप्तपदानि गत्वा, अथ कन्यादात्रा त्रिभिर्निवारिते छत्रोपानहौ विसृजेदिति शिष्टाचारः ॥ अन्यत्सर्वं नित्यं धारयेत् ॥ अथ पक्वम् ॥ स्रुवेण दर्व्यामुपस्तीर्य, पूर्वार्धाच्चरोरवदाय, अपरार्धादवद्यति, अभिघारयति, प्रत्यनक्ति, पुरस्तात्स्रुवहुतिं हुत्वा ॥ 'ॐ [1]द्विपदा पुरोनुवाक्या भवति ॥ द्विपद एवावरुन्धे ॥ चतुष्पदा याज्या ॥ चतुष्पद एव पशूनवरुन्धे' इति ब्राह्मणम् ॥ ॐ आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनो३वासाꣳसि मम गावश्च अन्नपाने च सर्वदा ॥ ततो मे श्रियमावह लोमशां पशुभिः सह स्वाहा ॥ श्रिया इदम् ॥ अथ स्विष्टकृतमवदाय अन्तःपरिधौ निधाय आमायन्त्विति दशस्रुवाहुतीः जुहोति, सूत्रे कारिकादौ च 'उन्मायन्तु ब्रह्मचारिणः स्वाहेति षष्ठो मन्त्रः' इत्युक्तत्वात् ॥ यथा 'ॐ आमायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य

---

[1] इदं च ब्राह्मणावाक्यं "आवहन्ती" मन्त्रस्य वाक्यषट्कस्य याज्यापुरोनुवाक्याधर्मव्यवस्थायै उदाहृतम् ॥ यत्र षडेव वाक्यानि, मन्त्रेण तेन हवने वाक्यद्वयेन पुरोनुवाक्यामनूच्य वाक्यचतुष्टयेन याज्यया जुहुयादिति तदभिप्रायः ॥ एतेन "आवहन्ती वितन्वाना ततो मे श्रियमित्यृचौ ॥ व्याहृतिं प्रणवं वाऽपि पुरोऽनूच्य यजेद्धविः ॥

इदम् ॥१॥ ॐ विमायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य इदम् ॥२॥ ॐ प्रमायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य इदम् ॥३॥ ॐ दमायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य इदम् ॥४॥ ॐ शमायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य इदम् ॥५॥ ॐ उन्मायन्तु ब्रह्मचारिणः स्वाहा ॥ ब्रह्मचारिभ्य इदम् ॥६॥ ॐ यशो जनेसानि स्वाहा ॥ यशस इदम् ॥७॥ ॐ श्रेयान् वस्यसोसानि स्वाहा ॥ श्रेयस इदम् ॥८॥ ॐ तं त्वा भग प्रविशानि स्वाहा ॥ भगायेदम् ॥९॥ ॐ स मा भग प्रविश स्वाहा ॥ भगायेदम् ॥१०॥' इति ॥ अथ मिन्दाहुती हुत्वा स्विष्टकृत्प्रभृतिसिद्धमाधेनुवरप्रदानात्, अथाग्रेणाग्निं बिल्वशाखायां हुतशेषं निदधाति 'ॐ तस्मिन्त्सहस्रशाखे ॥ निभगाहं त्वयि मृजे स्वाहा' इति ॥ अथ पक्वादुपादाय प्राश्नाति, तस्य हस्तमभिघार्य चरुमवदाय अभिघार्य प्रश्नाति 'ॐ यथापः प्रवतायन्ति ॥ यथा मासा अहर्जरम् ॥ एवं मां ब्रह्मचारिणः ॥ धातरायन्तु सर्वतः स्वाहा' इति प्राश्य, अप आचम्य, जठरमभिमृशति 'ॐ प्रतिवेशोऽसि प्रमा भाहि प्रमा पद्यस्व' इति ॥ अप उपस्पृश्य, अथ नक्षत्रोदयपर्यन्तं तत्रैव स्थित्वा, उदितेषु नक्षत्रेषु उपनिष्क्रम्य दिश उपतिष्ठते 'ॐ देवीः षडुर्वी रुरुणः कृणोत विश्वेदेवास इह वीरयध्वम्' इति ॥ अथ नक्षत्राणि 'ॐ माहास्म हि प्रजया मा तनूभिः' इति ॥ अथ चन्द्रमसम् 'ॐ मारधाम द्विषते सोमराजन्' इति ॥ असम्भवे दिगुपस्थानादिकं दिवैव कृत्वा, उत्तरपरिषेकादिकं कृत्वा, यस्य स्मृत्येत्युक्त्वा, अनेन समावर्तनकर्मणा श्रीपरमेश्वरः प्रीयतामित्युक्त्वा, याते अग्न इत्यात्मन्यग्निं समारोप्य, विवाहपर्यन्तं सायम्प्रातरग्निकार्यं आज्येन कुर्यात् ॥

अत्र समावर्तने वपनं विकल्पितं कुतः 'स यदि लोमानि वापयिष्यमाणः स्यादित्यत्र यदि शब्दप्रयोगात्॥ कारिकायामपि 'यदि शब्दात्तु वपनं विभाषितमिति स्थितिः' इति॥ तत्रैव आयुष्यं वर्चस्यमित्यादिहोमपञ्चकानन्तरं 'मन्त्रैरेतैः कुण्डले च घटयेत्कर्णयोर्द्वयोः' इति॥ 'वरुणोऽसीति मन्त्रेण जलपूर्णकमण्डलुम्' इति च॥ 'आवहन्त्यादिकेनैव स्वाहान्तेन तु कृत्स्नशः॥ उपहुत्य तदन्ते स्यादामायान्तु द्विपञ्चभिः' इति॥ 'ब्रह्मचारिवदग्नेश्च परिचर्या घृतेन च'॥ विवाहपर्यन्तमिति शेषः॥ प्रयोगरत्ने 'दिव्योऽसीति तत छत्रं वरुणोऽसि कमण्डलुम्॥ ततस्तीर्थान्युदगच्छेत्सुहृद्भिरभिवारितः॥ जुहुयादावहन्तीति पक्वं द्वाभ्यामतः क्रमात्॥ आविप्रदश उत्पूर्वमायान्तु ब्रह्मचारिणः॥ यशः श्रेयान् ततस्तन्त्वा समा इति दशाहुतीः' इति॥ इति वेङ्कटेशीयप्रयोगमालायां समावर्तनप्रयोगः समाप्तः॥छ॥

**अथ विवाहः॥** गृह्यपरिशिष्टे 'अथ सलक्षणो वरो लक्षणवतीं कन्यां यवीयसीं असपिण्डां असगोत्रजां अविरुद्धसम्बन्धां उपयच्छेत्॥ पितृतः सप्तपूरुषं सापिण्ड्यं मातृतः पञ्चपूरुषम्' इति॥ मत्स्यपुराणे 'लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः॥ पिण्डदः सप्तमस्तेषां सापिण्ड्यं सप्तपूरुषम्' इति॥ याज्ञवल्क्यः 'पञ्चमात्सप्तमादूर्ध्वं मातृतः पितृतस्तथा' इति॥ अस्यार्थः - मातृपक्षे पञ्चमात् पितृपक्षे सप्तमात् पूरुषादूर्ध्वं सापिण्ड्यं निवर्तत इति॥ मरीचिः 'पञ्चमे सप्तमे चैव एषां वैवाहिकी क्रिया॥ क्रियापरा अपि हि ते पतिताः शूद्रताङ्गताः' इति॥ विष्णुः 'सप्तमात्पञ्चमाद्वा यः कन्यकामुद्वहेद्द्विजः॥ गुरुतल्पी स विज्ञेयः सगोत्रां चैवमुद्वहन्' इति॥ एतदुक्तं भवति - पितृपक्षे कूटस्थमारभ्य तत्पुत्रादिपरिगणनायां सप्तमादूर्ध्वं वरवध्वोर्विवाहो न दुष्यति, मातृपक्षे कूटस्थमारभ्य तद्दुहित्रादिगणनायां वरवध्वोर्माता चेत्पञ्चमी भवति तदा तयोः सापिण्ड्यनिवृत्तेर्विवाहो न दोषायेति॥छ॥ अथ मातुलकन्याविषये 'मातुलस्य सुतामूढ्वा मातृगोत्रां तथैव च॥ समानप्रवरां चैव द्विजश्चान्द्रायणं चरेत्' इत्यादीनि शातातपादीनां वचनानि गान्धर्वादिविवाहोढजाविषयाणि तत्र सापिण्ड्यनिवृत्तेरभावात्॥ मातुलसुताग्राहकश्रुतिस्मृतिसदाचाराः ब्राह्मादिविवाहोढजाविषयाः तत्र सापिण्ड्यनिवृत्तेः॥ श्रुतिस्तु 'आयाहीन्द्र' इति ऋग्वेदे प्रसिद्धा॥ 'अतस्तृतीये सङ्गच्छावहै चतुर्थे सङ्गच्छावहै' इति वाजसनेयश्रुतेश्च॥ ज्योतिःसङ्ग्रहे 'न राशिकूटं न गणं न योनिः' इति वक्ष्यमाणश्लोकोऽप्यत्र योज्यः॥ 'मातुलं पैशाचं च' इति च॥ 'कूटस्थमारभ्य तृतीये चतुर्थे वा सङ्गच्छावहै विवाहावहै' इति॥ षट्त्रिंशन्मतेऽपि 'तृतीया मातृतः कन्यां तृतीयां पितृतः तथा॥ विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः' इति॥ चतुर्विंशतिमतेऽपि 'तृतीयां वा चतुर्थीं वा पक्षयोरुभयोरपि॥ विवाहयेन्मनुः प्राह पाराशर्योऽङ्गिरा यमः'॥ पाराशरः 'चतुर्थीमुद्वहेत्कन्यां चतुर्थः पञ्चमोऽपि वा॥ पाराशरमते षष्ठी पञ्चमो न तु पञ्चमीम्' इति॥छ॥ अथ मात्रादिसम्बन्धविषये॥ बोधायनः 'मातुः सपत्नीभगिनी तत्सुतां च विवर्जयेत्॥ पितृव्यपत्नीभगिनीं तत्सुतां च विवर्जयेत्'॥ सङ्ग्रहे 'यदा कूटस्थमारभ्य या माता या स्वसा भवेत्॥ सैव त्याज्या परिणये नान्यथाह पराशरः॥ पञ्चमः पञ्चमीं कन्यां नोद्वहेदिति यद्वचः॥ मातृष्वस्रादिसम्बन्धादन्यत्र तु न दोषभाक्॥ स्नुषामुखी तथा पुत्री शस्तोद्वाहे तु पञ्चमी॥ सम्बन्धं कुरुते यत्र न दोष इति गोभिलः॥ स्यात्सप्तमे वाऽप्यथ पञ्चमे वा यद्वोभयत्रापि च पञ्चमे वा॥ तद्वत्स्वरूपे विहिता च सम्यक्कन्या चतुर्थी वरपञ्चमो वा॥ आवार्धिमूर्ध्नः पितृमातृतोर्वाक्सुतां च कन्यां भगिनीं तथैव॥ त्यजेत्प्रसूं षट्पुरुषान्तराले प्रसूं च तस्मान्न निरीक्षितव्यम्॥ सापिण्डात्परतः सुतां च भगिनी मातृष्वसारं स्नुषां ज्येष्ठभ्रातृपितृव्यपत्निभगिनीं धात्रीसुतां नोद्वहेत्॥ अज्ञानादिकृतोद्वहो यदि तदा त्याज्या वधूः सर्वदा प्रायश्चित्तविधानतश्च सदृशं सापिण्ड्यवत्पालयेत्॥ यथोक्तसापिण्ड्यनिवृत्यनन्तरं तत्रत्यकन्या यदि मातृसंज्ञिता॥ पुत्री यदि स्याद्भगिनी यदि स्यात्तयोर्विवाहो न कदाचिदेव॥ पञ्चमः पञ्चमीं चैव सापिण्ड्यान्तरपौरुषम्॥ यदि चेदिच्छयेद्यस्तु कनिष्ठभगिनीसमम्॥ पञ्चमः पञ्चमी कन्यां नोद्वहेदिति यद्वचः॥ मातृष्वस्रानुबन्धित्वात्पञ्चमो न तु पञ्चमीम्॥ स्नुषामुखी तथा पुत्री पञ्चमाय विवाहयेत्॥ स्वसारं मातरं हन्ति उद्वहेत्पतितो द्विजः॥ जननी भगिनी पित्रोः पक्षे स्वसृस्नुषासुताः॥ सम्बन्धिन्यो न वोढव्याः कन्या भिन्नान्वया अपि॥ असपिण्डा च या मातुरसगोत्रा

च या पितुः ।। सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ।। स्नुषामुखी तथा पुत्री शस्तोद्वाहे तु पञ्चमी ।। चतुर्थी वा वरोद्वाहे स्वसा माता च नोद्वहेत् ।। असपिण्डां सपिण्डां वा मातरं भगिनीं विना ।। पितृव्यभार्याभगिनीं तत्पुत्रीमपि वर्जयेत् ।। यदा न गणनात्पूर्वं सम्बन्धः प्राप्यते यदि ।। स्वसारं मातरं वाऽपि विवाहेदिति गौतमः ।। विवाहसापिण्ड्यमतः प्रवक्ष्ये कूटस्थमारभ्य पितश्च मातुः ।। विवाहसापिण्ड्यमतः परस्तात्षष्ठेऽष्टमे वाऽपि भवेद्विवाहः ।। विवाहसापिण्ड्यमतः प्रशस्तं स्यात्सप्तमे वाऽप्यथ पञ्चमे वा ।। यद्वोभयत्रापि च पञ्चमेऽपि तद्विश्वरूपेऽभिहितं हि सम्यक् ।। कन्यां चतुर्थीमपि पञ्चमो वा वरश्चतुर्थो न तु पञ्चमी वहेत् ।। पित्रोर्भवेत्पञ्चमषष्ठयोर्वा स्मृत्यर्णवे सम्यगुदीरितं च यत् ।। मिथस्तृतीयेऽपि तथा चतुर्थे विवाह उक्तः स्मृतिचन्द्रिकायाम् ।। चतुर्थषष्ठे तु पराशरीये तथा तृतीयस्तु चतुर्थिकां च ।। चतुर्थिकां चैव तथा तृतीयो विवाहयेन्मातृमुखीं च हित्वा ।। तथैव हित्वा भगिनी चतुर्थस्तृतीयकन्यां विदधीतशंखः ।। पितृव्यपत्नीभगिनी च तत्सुतां सापत्नमातुर्भगिनीं च तत्सुताम् ।। विवाहयेच्चैव यदि प्रमादाच्चाण्डालयोनेरिदमेव कारणम् ।। येन केनापि सम्प्राप्तां स्वसारं मातारं त्यजेत् ।। प्रमादादुद्वहेत्तां वै स चाण्डालो न संशयः ।। भिन्नान्वये यदि परां च यदाऽपि दूरं सम्बन्धतस्तु जननीं भगिनीं च कन्याम् ।। श्वश्रूं तथा श्वश्रुसुतां विवाह्य बन्धुत्रयोभयभवास्तु सदैव वर्ज्याः' ।। बन्धुत्रयभवा वर्ज्या इत्युक्तं, ते तु 'पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः ।। पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ।। मातुर्मातृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।। मातुर्मातुलपुत्राश्च इत्येते मातृबान्धवाः ।। आत्मतातस्वसुः पुत्रा आत्ममातुः स्वसुः सुताः ।। आत्ममातुलपुत्राश्च इत्येते ह्यात्मबान्धवाः' इति सम्बन्धविचारः ।।छ ।।

अथ कन्याविक्रयः ।। 'कन्यामाभरणं मौल्यं समर्थाश्रयसेवकौ ।। परस्परविवाहश्च विक्रयश्चैव पञ्चधा ।। माता भक्षयते गात्रं पिता भक्षयते शिरः ।। बन्धुभिर्भक्ष्यते बाहुः शेषाश्चैवेतरे जनाः' ।।छ ।। स्मृत्यन्तरे 'सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ।। तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत्' इति ।।छ ।। अथ पुंस्त्वपरीक्षा ।। नारदः 'यस्याप्सु प्लवते बीजं ह्रादि मूत्रं च फेनिलम् ।। पुमान् स्याल्लक्षणैरेतैर्विपरीतस्तु षण्डकः' इति ।। बीजं=वीर्यं, ह्रादि=ध्वनिमत् ।।छ ।। वासिष्ठे 'अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले ।। वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते' इति वर्ज्यवरः ।।छ ।। अथ परिवित्तलक्षणम् 'दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ।। परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः' ।। शातातपः 'पितृव्यपुत्राः सापत्न्याः परनारीसुतास्तथा ।। दाराग्निहोत्रसंयोगे न दोषः परिवेदने' ।। सापत्न्या=अन्यमातृजाः ।। गौतमः 'भिन्नोदरे दत्तके च पितृव्यतनयेऽग्रजे ।। दाराग्निहोत्रसंयोगे न दोषः परिवेदने' इति ।।छ ।। अथ विवाहकालमाह नारदः 'युग्मेऽब्दे जन्मतः स्त्रीणां प्रीतिदं पाणिपीडनम् ।। तद्वत्पुंसामयुग्मेऽब्दे व्यत्यये नाशनं तयोः' इति ।। 'अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी ।। दशवर्षा भवेत्कन्या द्वादशी वृषली मता' ।। 'नवमे नग्निका भवेत्' इति संवर्तः ।। मरीचिः 'गौरीं ददन्नाकपृष्ठं वैकुण्ठं रोहिणीं ददन् ।। कन्यां ददन् ब्रह्मलोकं रौरवं तु रजस्वलाम्' ।। शौनकः 'कुलशीलवयोवृत्तरूपाढ्यां नग्निकां शुभाम् ।। विधिना चोद्वहेत्कन्यां सर्वकामार्थसिद्धये ।। नग्निकालक्षणं स्मृतिभास्करे 'यावल्लज्जां न जानाति कन्या पुरुषसन्निधौ ।। योन्यादीन्नावगूहेत तावद्भवति नग्निका' इति ।।छ ।। अथ कन्यापरिवेत्तृत्वविषये गर्गः 'एकमातृप्रसूतानां पुत्रीणां परिवेदने ।। दोषः स्यात्सर्ववर्णेषु न दोषो भिन्नमातृषु' ।। वृद्धमनुः 'विवाहानधिकारत्वे ज्येष्ठकन्या स्थिता यदा ।। तदनुज्ञां विना वाऽपि कनिष्ठामुद्वहेत्तदा' ।। छ ।। पारिजाते संहितासारावल्यां एकमातृजविवाहविषये 'एकमातृप्रसूतानां एकस्मिन्वत्सरे यदि ।। विवाहं नैव कुर्वीत कुर्वन्ति मुनयोऽन्यथा ।। विवाहस्त्वेकजन्यानामस्मिन्नुदये कुले ।। नाशं करोत्येकवर्षे स्यादेका विधवा तयोः' इति ।। उदयो लग्नम् ।। अत्र देशव्यवस्था ।। 'एकोदरीकरतलग्रहणं यदि स्यादेकोदरस्थवरयोः कुलनाशहेतुः ।। एकाब्दिके तु विधवा भवतीति कन्या नद्यन्तरे तु शुभदं पृथुशैलरोधे' ।। गर्गः 'भ्रातृयुक्स्वसृयुग्मे च भ्रातृस्वसृयुगे तथा ।। न जातु

मण्डनं कुर्यादेकस्मिन्मण्डपेऽहनि' ।। 'पुत्रीपरिणयादूर्ध्वं यावद्दिनचतुष्टयम् ।। पुत्र्यन्तरस्य कुर्वीत नोद्वाहमिति सूरयः' ।। इत्येतद्वचनद्वयं अभिन्नमातृकविषयम् ।। छ ।। अथ प्रत्युद्वाहादिनिषेधः ।। 'प्रत्युद्वाहो नैव कार्यो नैकस्मै दुहितृद्वयम् ।। नैवैकजन्ययोः पुंसोरेकजन्ये तु कन्यके ।। नैवं कदाचिदुद्वाहो नैकदा मण्डनद्वयम् ।। अन्यच्च 'एकजन्ये तु कन्ये द्वे पुत्रयोर्नैकजन्ययोः ।। न पुत्रीद्वयमेकस्मै प्रदद्यात्तु कदाचन' इति ।। छ ।। अथैकोदराणां उपनयनविवाहकालनिर्णयः ।। संहितासारावल्याम् 'न मण्डनान्मुण्डनमूर्ध्वमिष्टं न पुत्रयोर्मण्डनमेकवर्षे ।। न पुंविवाहोर्ध्वमृतुत्रयेऽपि विवाहकार्यं दुहितुश्च कुर्यात् ।। न मण्डनाच्चापि हि मुण्डनं च गोत्रैकतायां यदि नाब्दभेदः' ।। गोत्रैकतायामिति=विज्ञातसापिण्ड्ये ज्ञेयम् ।। तथा चार्थत उक्तं स्मृत्यन्तरे 'कुले ऋतुत्रयादर्वाक् मण्डनान्न तु मुण्डनम् ।। प्रवेशान्निर्गमो नेष्टो न कुर्यान्मण्डनत्रयम् ।। पुत्रोद्वाहान्नैव पुत्रीविवाहोऽपि ऋतुत्रये ।। अब्दान्तरान्मुण्डनं च नैकदा मण्डनद्वयम्' ।। सायणीये 'एकस्मिन्च्छोभने वृत्ते द्विशुभं नैव कारयेत् ।। यदि कुर्यात्प्रमादेन तत्र स्यादशुभं ध्रुवम्' ।। अब्दभेदे न दोष इति संहितासारावल्याम् 'फाल्गुने चैत्रमासे तु पुत्रोद्वाहोपनायने ।। भेदादब्दस्य कुर्वीत नर्तुत्रयविलम्बनम्' ।। बृहन्मनुः 'एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः ।। न समानक्रियां कुर्यान्मातृभेदे विधीयते' ।। नारदः 'पुत्रोद्वाहात्परं पुत्रीविवाहो न ऋतुत्रये ।। न तयोर्व्रतमुद्वाहान्मण्डनादपि मुण्डनम्' इति ।। वराहः 'विवाहस्त्वेकजातानां षण्मासाभ्यन्तरे यदि ।। असंशयं त्रिभिर्वर्षैस्तत्रैका विधवा भवेत्' ।। 'एकोदरभ्रातृविवाहकृत्यं स्वसुर्न पाणिग्रहणं विधेयम् ।। षण्मासमध्ये मुनयः समूचुर्न मुण्डनं मण्डनतोऽपि कार्यम्' ।। अस्यापवादस्तत्रैव 'ऋतुत्रयस्य मध्ये चेदन्याब्दस्य प्रवेशनम् ।। तदा ह्येकोदरस्यापि विवाहस्तु प्रशस्यते' ।। संहिताप्रदीपे 'ऊर्ध्वं विवाहात्तनयस्य नैव कार्यो विवाहो दुहितुः समार्धम् ।। अप्राप्य कन्यांश्चशुरालयं च वधूःप्रवेश्या स्वगृहं न चादौ' ।। मदरत्ने वसिष्ठः='द्विशोभनं नैकगृहेऽपि नेष्टं शुभं तु पश्चान्नवभिर्दिनैस्तु ।। अवश्यकं शोभनमुत्सवो वा द्वारेऽथवाऽऽचार्यविभेदतो वा ।। एकोदरप्रसूतानां पुंसां नाग्नित्रयं भवेत् ।। भिन्नोदरप्रसूतानां तथा शातातपोऽब्रवीत् ।। कुर्वन्तु मुनयः केचिदन्यस्मिन्वत्सरे लघु ।। लघु वा गुरु वा कार्यं प्राप्तं नैमित्तिकं तु यत् ।। पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तु निर्गमः ।। मुण्डनं चौलमित्युक्तं व्रतोद्वाहौ तु मंगलम् ।। चौलं मुण्डनमेवोक्तं वर्जयेन्मण्डनात्परम् ।। मौञ्जी चोभयतः कार्या यतो मौञ्जी न मुण्डनम् ।। अभिन्ने वत्सरेऽपि स्यात्तदहस्तत्र भेदयेत् ।। अभेदे तु विनाशः स्यान्नकुर्यादेकमण्डपे' ।। कपर्दिकारिकायां वराहमिहिरश्च 'उद्वाह्य पुत्रीं न पिता विदध्यात्पुत्र्यन्तरस्योद्वहनं कदाचित् ।। यावच्चतुर्थं दिनमत्रपूर्वं समाप्य वाऽन्योद्वहनं विदध्यात्' ।। काश्यपः 'मौञ्जीबन्धस्तथोद्वाहः षण्मासाभ्यन्तरेऽपि वा ।। पुत्र्युद्वाहं न कुर्वीत विभक्तानां न दोषकृत्' ।। ज्योतिर्विदाभरणे='एकोदरयोर्द्वयोरेकदिनोद्वाहने भवेन्नाशः ।। यद्यन्तरे चैकदिनेऽप्याहुः सङ्कटे च शुभम्' ।। 'ऊर्ध्वं विवाहाच्छुभदो नरस्य नारीविवाहो न ऋतुत्रये स्यात् ।। नारीविवाहात्तदहेऽपि शस्तं नरस्य पाणिग्रहमाहुरार्याः' ।। मेधातिथिः 'पृथग्भ्रातृजयोः कार्यो विवाहस्त्वेकवासरे ।। एकस्मिन्मण्डपे कार्यः पृथग्वेदिकयोस्तथा ।। पुष्पपङ्क्तिकयोः कार्यं दर्शनं न शिरस्थयोः ।। भगिनीभ्यामुभाभ्यां च यावत्सप्तपदी भवेत्' इति ।। छ ।। निर्णयसिन्धौ यमलविषये भट्टकारिकायाम् 'एकस्मिन्वत्सरे चैव वासरे मण्डपे तथा ।। कर्तव्यं मङ्गलं स्वस्त्रोर्भ्रात्रोर्यमलजातयोः' ।। वृद्धवासिष्ठः 'पुत्रीविवाहात्परतः सदैव शुभप्रदं पुत्रविवाहकर्म ।। पुत्रद्वये नैव ऋतुत्रयेऽपि पुत्रीद्वयं वाऽपि कदाचिदेव' ।। छ ।। अथ प्रतिकूलविषये ।। ज्योतिर्निबन्धे गर्गः 'कृते तु निश्चये पश्चान्मृत्युर्भवति कस्यचित् ।। तदा न मङ्गलं कुर्यात्कृते वैधव्यमाप्नुयात्' ।। मेधातिथिः 'वधूवरार्थे घटिते सुनिश्चिते वरस्य गेहेऽप्यथ कन्यकायाः ।। मृत्युर्यदा स्यान्मनुजस्य कस्यचित्तदा न कार्यं खलु मङ्गलं बुधैः' ।। मङ्गलं = विवाहः ।। स्मृतिचन्द्रिकायाम् 'कृते वाङ्निश्चये पश्चान्मृत्युर्मर्त्यस्य गोत्रिणः ।। तदा न मङ्गलं कार्यं नारी वैधव्यदं ध्रुवम्' ।। भृगुः 'वाग्दानानन्तरं यत्र कुलयोः कस्यचिन्मृतिः ।। तदोद्वाहो नैव कार्यः स्ववंशक्षयदो यतः' ।। शौनकः 'वरवध्वोः पिता माता 'पितृव्यश्च सहोदरः ।। एतेषां प्रतिकूलं च महाविघ्नप्रदं भवेत् ।। पिता पितामहश्चैव माता चैव पितामही ।। पितृव्यः स्त्री सुतो भ्राता भगिनी चाविवाहिता ।। एभिरेव विपन्नैस्तु प्रतिकूलं बुधैः स्मृतम् ।। अन्यैरपि विपन्नैस्तु केचिदूचुर्न तद्भवेत्' इति ।। माण्डव्यः 'वाग्दानानन्तरं माता पिता भ्राता विपद्यते ।। विवाहो नैव कर्तव्यः

'पितुरब्दमाशौचं स्यात्तदर्धं मातुरेव च ॥ मासत्रयं तु भार्यायास्तदर्धं भ्रातृपुत्रयोः ॥ अन्येषां तु सपिण्डानामाशौचं मासमीरितम् ॥ तदन्ते शान्तिकं कृत्वा वाग्दानादि चरेत्पुनः' इति ॥ ज्योतिःप्रकाशे 'प्रतिकूलेऽपि कर्तव्यो विवाहो मासतः परम् ॥ शान्तिं विधाय गां दत्वा वाग्दानादि चरेत्पुनः' इति ॥ शान्तिं = विनायकशान्तिम् ॥ तथा च मेधातिथिः 'सङ्कटे समनुप्राप्ते याज्ञवल्केन योगिना ॥ शान्तिरुक्ता गणेशस्य तां कृत्वा शुभमाचरेत्' ॥ अन्यत्र 'प्रतिकूले न कर्तव्यो गच्छेद्यावदृतुत्रयम् ॥ प्रतिकूलेऽपि कर्तव्यमित्याहुर्विभवे सति ॥ प्रतिकूले सपिण्डस्य मासमेक विवर्जयेत्' ॥ मेधातिथिः 'पुरुषत्रयपर्यन्तं प्रतिकूलं सगोत्रिणाम् ॥ प्रवेशान्निर्गमस्तद्वत्तथा मण्डनमुण्डने' ॥ छ ॥ अथाशौचविषये निर्णयामृते विष्णुः 'विवाहादिकर्मस्वनारब्धेषु सूतके प्राप्ते सन्निहितलग्नान्तराभावे कूष्माण्डैर्हुत्वा विवाहः कार्यः' ॥ 'अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयात्घृतम् ॥ गां दद्यात्पञ्चगव्याशी ततः शुद्ध्यति सूतकी' इति ॥ अवश्यकं विवाहादिकं कुर्यात् इति शेषः ॥छ ॥ अथ रजोदोषनिर्णयः ॥ माधवीये 'प्रारम्भात्प्राग्विवाहस्य माता यदि रजस्वला ॥ निवृत्तिस्तस्य कर्तव्या सहत्वश्रुतिचोदनात्' ॥ प्रारम्भान्नान्दीश्राद्धात् ॥ नान्दीश्राद्धं विवाहादावित्युक्तत्वात् ॥ मेधातिथिः 'चौले च व्रतबन्धे च विवाहे यज्ञकर्मणि ॥ भार्या रजस्वला यस्य प्रायस्तस्य न शोभनम् ॥ वधूवरान्यतरयोर्जननी चेद्रजस्वला ॥ तस्याः शुद्धेः परं कार्यं माङ्गल्यं मनुरब्रवीत्' ॥ अथ यदि नान्दीमुखानन्तरं रजोदोषे कपर्दिकारिकायाम् 'सूतिकोदक्ययोः शुद्धौ गां दद्याद्धोमपूर्वकम् ॥ प्राप्ते कर्मणि शु[1]द्धिः स्यादितरस्मिन्न शुद्ध्यति' ॥ 'अलाभे सुमुहूर्तस्य रजोदोषे च सङ्गते ॥ श्रियं सम्पूज्य तत्कुर्यात्पाणिग्रहणमङ्गले ॥ हैमीं माषमितां पद्मां श्रीसूक्तविधिनाऽर्चयेत् ॥ प्रत्यृचं पायसं हुत्वा अभिषेकं समाचरेत्' ॥ इति रजोदोषनिर्णयः ॥छ ॥ अथ चतुर्थीमध्ये श्राद्धे दर्शे च प्राप्ते ज्योतिर्निबन्धे 'विवाहमारभ्य चतुर्थिमध्ये श्राद्धं दिनं दर्शदिनं यदि स्यात् ॥ वैधव्यमाप्नोति तदाशु कन्या जीवेत्पतिश्चेदनपत्यता च ॥ विवाहमध्ये यदि चेत् क्षयाहस्तत्र स्वमुख्याः पितरो नयन्ति ॥ व्रते विवाहे परतस्तु कुर्याच्छ्राद्धं स्वधाभिर्न तु दूषयेत्तम्' ॥ तं विवाहं न त्यजेत्, किन्तु कुर्यादेवेत्यर्थः ॥ 'ये वा भद्रं दूषयन्ति स्वधाभिः' इति श्रुतेश्च ॥ आश्वलायनधर्मे 'अलाभे सुमुहूर्तस्य विघ्नं यः कुरुते यदि ॥ स्वधया तु विवाहस्य न स पश्येच्छुभं क्वचित् ॥ विघ्नमाचरते यस्तु यज्ञस्योद्वाहकस्य च ॥ यात्रायाश्चैव स्वधया स याति नरकं ध्रुवम्' ॥ एतदापद्विषयम् ॥ अत एव प्रयोगदर्पणे क्षयाहे प्राप्ते वृद्धिश्राद्धनिषेधः कृतः 'पित्रोः प्रत्याब्दिके चैव नान्दीश्राद्धं न कारयेत् ॥ यदि मोहाद्विजः कुर्यान्माङ्गल्यमशुभं भवेत्' ॥ पुनश्च तत्रैव 'नान्दीश्राद्धे कृते यावद्देवकोत्थापनं भवेत् ॥ ब्रह्मयज्ञं च वै श्राद्धं वेदानुष्ठानमेव च ॥ शवेक्षणं स्वधाकारं श्मश्रुकेशनिकृन्तनम् ॥ सीमातिक्रमणं चैव श्राद्धभोजनमेव च ॥ न कुर्याच्छुभकर्ता च सपिण्डा अपि चैव हि ॥ यस्तु वै कुरुते मोहादशुभं स च वै लभेत्' ॥ पुनस्तत्रैव नान्दी श्राद्धे कृते इत्युपक्रम्य 'अपसव्यं स्वधाश्राद्धं नदीस्नानं शवेक्षणम् ॥ वर्जयेत्तर्पणं चैव देवकोत्थापनावधि ॥ विवाहे चोपनयने कृते चौले सुतस्य च ॥ त्यजेत्पिण्डांस्तिलान्च्छ्राद्धे नरकं चाब्दमध्यतः' ॥ नान्द्यन्तरे निषिद्धान्याह गार्ग्यः 'नान्दीश्राद्धे कृते पश्चाद्यावन् मातृविसर्जनम् ॥ दर्श श्राद्धं क्षय श्राद्धं स्नानं शीतोदकेन च ॥ अपसव्यं स्वधाकारं नित्य श्राद्धं तथैव च ॥ ब्रह्मयज्ञं चाध्ययनं नदीसीमातिलङ्घनम् ॥ उपवासं व्रतं चैव श्राद्धभोजनमेव च ॥ नैव कुर्यात्सपिण्डश्च मण्डपोद्वासनावधि' ॥ ज्योतिषे 'स्नानं सचैलं तिलमिश्रकर्म प्रेतानुयानं कलशप्रदानम् ॥ अपूर्वतीर्थामरदर्शनं च विसर्जयेन्मङ्गलतोऽब्दमेकम् ॥ मासषट्कं विवाहादौ व्रतप्रारम्भणं न च ॥ जीर्णभाण्डादि न त्याज्यं गृहसम्मार्जनं तथा ॥ ऊर्ध्वं विवाहात्पुत्रस्य तथैव व्रतबन्धनात् ॥ आत्मनो मुण्डनं नैव वर्षं वर्षार्धमेव च' ॥

---

[1] शुद्धिरिति = कूष्माण्डहोमपूर्वकं श्रीशान्तिं कृत्वा पयस्विनीं गां दत्वा कर्ता शुद्ध्यतीत्यर्थः ॥ न तु रजस्वलाशुद्धिरत्र विवक्षिता असम्भवात् ॥ शुद्धिरत्र कर्तुः प्रक्रान्तकर्मकरणाधिकारः उत्तरश्लोके तथा दर्शनात् ॥

हेमाद्रौ 'विवाहव्रतचूडासु वर्षमर्धं तदर्धकम्॥ पिण्डदानं मृदास्नानं न कुर्यात्तिलतर्पणम्॥ तीर्थे संवत्सरे प्रेते पितृयज्ञे महालये॥ कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वापणं सदा॥ मातापित्रोर्मृताहे च गयाश्राद्धे महालये॥ दद्यात्पिण्डान्कृतोद्वाहः श्राद्धेष्वन्येषु वर्जयेत्' इति॥छ॥ अथ मासिकविषये शाट्यायनिः 'प्रेतश्राद्धानि सर्वाणि सपिण्डीकरणं तथा॥ अपकृष्यापि कुर्वीत कर्तुर्नान्दीमुखे द्विजः'॥ वृद्धिं विनाऽपकर्षे दोषमाह उशनाः 'वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत्॥ स श्राद्धी नरके घोरे पितृभिः सह मज्जति'॥ मेधातिथिः 'प्रेतकर्माण्यनिर्वर्त्य चरेन्नाभ्युदयक्रियाम्॥ आचतुर्थं ततः पुंसि पञ्चमे शुभदं भवेत्'॥ स्मृत्यन्तरे 'सपिण्डीकरणादर्वागपकृष्यकृतान्यपि॥ पुनरप्यपकृष्यन्ते वृध्युत्तरनिषेधनात्'॥छ॥ अथाशौचविषये याज्ञवल्क्यः 'दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे॥ आपद्यपि च कष्टायां सद्यः शौचं विधीयते'॥ ब्रह्मपुराणे 'दातुः प्रतिगृहीतुश्च कन्यादाने तु नो भवेत्॥ विवाहे वि[1]ष्णोः कन्याया लाजहोमादि कर्मणि' इति॥ 'व्रतयज्ञविवाहेषु श्राद्धे होमे व्रते जपे॥ प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्' इति विष्णुवचनाच्च॥ प्रारम्भस्तेनैवोक्तः 'प्रारम्भो वरणं यज्ञे, सङ्कल्पो व्रतसत्रयोः॥ नान्दीमुखं विवाहादौ, श्राद्धे पाकपरिक्रिया' इति॥छ॥ अथ कन्यादातारः नारदः 'पिता दद्यात्स्वयं कन्यां भ्राता वाऽनुमतः पितुः॥ मातामहो मातुलश्च सकुल्यो बान्धवस्तथा॥ माता त्वभावे सर्वेषां प्रकृतौ यदि वर्तते॥ तस्यामप्रकृतिस्थायां कन्यां दद्युः स्वजातयः'॥ (अप्रकृतिस्था=उन्मादादिदोषयुक्ता)॥ याज्ञवल्क्यः 'पिता पितामहो भ्राता सकुल्यो जननी तथा॥ कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः' इति॥ अन्यकन्यां धनेन गृहीत्वा वाग्दानं कुर्यादित्युक्तं स्कान्दे 'आत्मीकृत्य सुवर्णेन परकीयां तु कन्यकाम्॥ धर्मेण विधिना दातुमसगोत्रेपि युज्यते'॥ विष्णुधर्मोत्तरे 'अनाथां कन्यकां दत्वा सदृशे वाधिके वरे॥ द्विगुणं फलमाप्नोति कन्यादाने यदीरितम्' इति॥छ॥ अथ विवाहभेदाः॥ मनुः 'ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथाऽसुरः॥ गान्धर्वो राक्षसश्चैव पैशाचस्त्वष्टमोऽधमः॥ चत्वारो ब्राह्मणस्याद्याः शस्ता गान्धर्वराक्षसौ॥ राज्ञस्तथाऽसुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः'॥ अन्त्यः=पैशाचः॥छ॥ अथ नान्दीपित्रुदेशक्रमः॥ स्मृत्यर्थसारे 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्॥ नामसङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम्' इति॥ नान्दीमुख इत्येतच्छाखान्तरविषयम्॥छ॥ मातुलकन्याविषये ज्योतिःसङ्ग्रहे 'न राशिकूटं न गणान् न योनिः स्त्रीदीर्घवर्णौ गुणरज्जुवेधाः॥ सर्वाणि कूटानि विवर्जयन्ति तस्मै हिता मातुलकन्यका या॥ मातुल-पैशाच-राक्षस-गान्धर्व-विवाहसंज्ञासु॥ प्रेम-छल-बल-चौर्यान्नाश्रितलग्नं न च ग्रहाः कूटम्' ॥छ॥

**अथ वधूवरयोरेकनक्षत्रराशिनिर्णयः** ॥ सङ्ग्रहे 'एकर्क्षे चैकराशौ च विवाहः प्राणहानिदः॥ एकर्क्षे भिन्नराशौ वा दम्पत्योः शुभदं भवेत्॥ एकराशौ द्विनक्षत्रे पुन्तारा प्रथमा भवेत्॥ अतीवशोभना प्रोक्ता स्त्री तारा चेद्विनश्यति॥ दम्पत्योरेकनक्षत्रे द्विपदर्क्षे मृतिर्भवेत्॥ त्रिपदर्क्षे मृता पत्नी चतुष्पादे शुभावहम्'॥ अन्यत्र 'तोयर्क्ष-भरणी-सर्पा हस्ते-न्द्र-वरुणानि च॥ रोहिण्यार्द्रा धनिष्ठा च तिष्य-मूल-मघा द्विषट्॥ दम्पत्योरेकनक्षत्रे विवाहो मरणप्रदः॥ शेषास्ताराः पञ्चदश विवाहे च शुभप्रदाः॥ भवनद्वययुक्तर्क्षे पूर्वं पुंसः शुभावहं॥ पश्चाद्भागं तथा स्त्रीणां व्यत्ययस्तु विनाशकृत्॥ एकराशौ द्विनक्षत्रे कृत्तिका याम्यतारके॥ धनिष्ठा शततारा च पुष्याऽऽश्लेषा च वर्जयेत्॥ तुरगे पौष्ण आग्नेये हस्ते पुष्योत्तरासु च॥ आर्द्रायां तु विशेषेण एकपादे शुभावहम्॥ रोहिण्यार्द्रा मृगेन्द्राऽग्नी तिष्यश्रवण पौष्णभम्॥ उत्तरा प्रोष्ठपादे च नक्षत्रैक्येऽपि शोभनम्॥ पूर्वाषाढस्तथाऽऽश्लेषा ज्येष्ठा वासववारुणाः॥ स्वाती मूल भरण्यश्च एकतारा मृतिप्रदाः॥ ब्रह्मविष्णुशिवेन्द्राग्नीपूषाहिर्बुध्यपैत्रभम्॥ उत्तराषाढकं चैव नक्षत्रैक्ये शुभावहम्॥ मैत्राश्विनी च पुष्येन्दू अर्यमादितिवारुणाः॥ हस्तापस्त्वष्टृदैवत्या नक्षत्रैक्येऽपि मध्यमाः॥ अजैकपान्मित्रवसुर्द्विदेव प्रभञ्जनात्यर्कभुजङ्गभानि॥ मुकुन्दजीवान्तकभानि नूनं शुभानि योषिद्वरजन्मभैक्ये'॥ माधवीये 'एकर्क्षेऽपि वरस्यपूर्वमपरं वध्वास्तु भं पूजितं त्याज्यं नेतरथापि तत्परिहरेन्नक्षत्रमेकं द्वयोः॥ तच्चान्ये शुभमामनन्ति मुनयः शकप्रचेतोमघामूलार्द्रावसुरोहिणीयमपयोहस्ताहि-पुष्यैर्विना'॥छ॥ अथ स्त्रीनक्षत्रपूर्वविषये 'वारुणर्कमरुद्दस्रा अग्नितोये विधिः पिता॥ एकराशौ

---

१ विष्णोः – [illegible]

तु कर्तव्यं स्त्रीपूर्वमपि शोभनम्।। पूर्वाषाढे वारुणे रौद्रभाग्ये हस्तस्वातीमैत्रदस्रामघासु।। विश्वेदेवाः सौम्यवह्निर्विरिचिः स्त्रीपूर्वा स्यादत्र मुख्यं प्रशस्तम्।। विशाखिकार्द्रश्रवणप्रजेशास्तिष्यान्ततत्पूर्वमघाः प्रशस्ताः।। स्त्रीपुंसतारैक्यकरग्रहे तु शेषा विवर्ज्या इति सङ्गिरन्ते'।। प्रयोगदर्पणे 'दम्पत्योरेकराशिः स्यात्सम्पत्पुत्रशुभावहः।। उभयोरेकनक्षत्रे शुभं स्याद्भिन्नपादयोः।। यदैकराशौ शुभदं पृथग्भे राशिद्वयं मध्यममेकमृक्षे।। एकर्क्षराशौ वरयोर्जुगुप्सा चेच्छन्ति केचित्पदयोः पृथक्त्वे।। आषाढे यमभे सर्पे हस्तेन्दुवरुणानि षट्।। दम्पत्योरेकनक्षत्रं आयुःश्रीपुत्रनाशनम्' इति।।छ।। अत्रैवं व्यवस्था।। अश्विनी-कृत्तिका-मृगशिरः-पुनर्वसु-पूर्वाफल्गुनि-उत्तरात्रय-चित्र-विशाखा-अनुराधा-श्रवणं-पूर्वाभाद्र-रेवत्य इति चतुर्दशनक्षत्राणि दम्पत्योरेकनक्षत्रे श्रेष्ठानि।। रोहिणी-आर्द्रा-पुष्य-मघा-स्वाती-धनिष्ठाश्चेति षण्मध्यमाः।। भरणि-आश्लेषा-हस्त-ज्येष्ठा-मूल-पूर्वाषाढ-शततारा इति सप्त वर्ज्याः।। अथैकराशौ द्विनक्षत्रे पूर्वनक्षत्रं पुरुषस्य अपरनक्षत्रं स्त्रियाश्चेत् सर्वाण्यपि शुभान्येव, यदि स्त्रीनक्षत्रं पूर्वमपरं पुरुषस्य तदा कानिचिद्ग्राह्याणि, यथा पूर्वाषाढशततारा-आर्द्रा-उत्तरा-हस्त-स्वाती-अनूराधा-अश्विनी-मघा-उत्तराषाढ-मृगशिरः-कृत्तिका-रोहिण्य इति त्रयोदशनक्षत्राणि, स्त्रीपूर्वाण्यपि ग्राह्याणि, अन्यानि वर्ज्यानि इति।।छ।। 'मूलजा श्वशुरं हन्ति व्यालजा च तदङ्गनाम्।। ऐन्द्रे धवाग्रजं हन्ति विशाखासु धवानुजम्।। सुतः सुता वा नियतं श्वशुरं हन्ति मूलजः।। तदन्त्यपादजो वाऽपि नैवाश्लेषान्त्यपादजा'।। अन्यत्र 'मूलाद्यपादे श्वशुरं निहन्ति व्यालान्त्यपादे च तदङ्गनां च।। ऐन्द्रे द्विदैवान्तिमपादजाता तदग्रजं हन्ति तथैव देवरम्।। विशाखा च तुलायुक्ता देवरस्य सुखप्रदा।। सा कन्या देवरं हन्ति पुच्छे वृश्चिकसंयुता।। मूलाश्लेषविशाखासु ज्येष्ठाजातश्च यः पुमान्।। न दुष्यति विवाहे च स्त्रीणां सर्वत्र वर्जयेत्'।।छ।।

अथ ज्येष्ठविषये 'ज्येष्ठस्य ज्येष्ठकन्याया विवाहो न प्रशस्यते।। तयोरन्यतरे ज्येष्ठे ज्येष्ठेमासः प्रशस्यते'।। मुहूर्तचिन्तामणौ 'न ज्येष्ठाज्ज्येष्ठयोः कार्यं नृनार्योः पाणिपीडनम्।। तयोरेकतरे ज्येष्ठे ज्येष्ठमासेऽपि कारयेत्।। द्वौ ज्येष्ठौ मध्यमौ प्रोक्तावेकज्येष्ठः सुखावहः।। ज्येष्ठत्रयं न कुर्वीत विवाहं सर्वसम्मतम्'।। पराशरः 'अज्येष्ठकन्यका यत्र ज्येष्ठपुत्रो वरो यदि।। व्यत्ययो वा तयोस्तत्र ज्येष्ठमासः शुभावहः'।।छ।। अथ जन्ममासादिनिर्णयः 'जन्ममासि न च जन्मभेऽथवा नैव जन्मदिवसेऽपि कारयेत्।। आद्यगर्भदुहितुः सुतस्य वा ज्येष्ठमासि न तु जातुमङ्गलम्'।। रत्नकोशे 'जन्मर्क्षे जन्मदिवसे जन्ममासे शुभं त्यजेत्।। ज्येष्ठे मास्याद्यगर्भस्य शुभं वर्ज्य स्त्रिया अपि।। न जन्मभे जन्मगृहे दिने वा कुर्याद्विवाहं न च जन्ममासे।। ज्येष्ठर्क्षजे ज्येष्ठसुताङ्गनानां मिथो विवाहो न तु शुक्रमासे।। अन्नप्राशनमुद्वाहश्चौलकर्मोपनायनम्।। जन्ममासे तु वर्ज्यं स्यात्कलिङ्गमगधेषु च।। नर्मदादक्षिणे देशे जन्ममासः शुभप्रदः।। अन्यदेशे न शुभदं बहूनां सम्मतंत्विदम्।। स्त्रीणां जन्मत्रयं श्रेष्ठं विवाहे तु प्रशस्यते'।। अन्यत्रापि 'विवाहे कन्यकानां तु जन्मर्क्षत्रितयं शुभम्।। पुंसः प्रथमजन्मर्क्षं त्याज्यमन्यद्वयं शुभम्'।। माधवीये 'मुक्त्वैकं जन्मर्क्षं द्वेतारे जन्मसंज्ञके शुभदे।। उपनयने च विवाहे भुक्तौ यात्रागमे क्रमशः।। जन्मविपत्प्रत्यरवधजन्माष्टमराशितारकास्त्याज्याः।। साष्टमग्रहाः शुभेषु त्यजन्ति षष्ठव्ययौ चान्ये'।। विपदादीनां दानमुक्तं निर्णयसिन्धौ 'विपदर्क्षे गुडं दद्यान्निधने तिलकाञ्चनम्।। प्रत्यरे लवणं दद्याच्छाकं दद्यात्रिजन्मसु।। चन्द्रे च शङ्खं, लवणं च तारे तिथौ विरुद्धेऽत्वथ तण्डुलांश्च।। धान्यं च दद्यात्करणे च वारे योगे विरुद्धे कनकं प्रदेयम्'।। सङ्ग्रहे 'शाकं गुडं च तैलं च दधि सर्पिः पयो मधु।। फलं सुवर्णं दत्तं चेत्तारादोषो न विद्यते'।।छ।।

अथ मासादिनिर्णयः।। नारदः 'पौषेऽपि मकरस्थेऽर्के चैत्रे मेषं गते रवौ।। आषाढं केऽप्याहुः करपीडनम्।। माघफाल्गुनवैशाखज्येष्ठमासाः शुभावहाः।। मध्यमः कार्तिको मार्गशीर्षो वै निन्दिताः परे'।। मार्गशीर्षमासनिषेधो ज्येष्ठापत्यपरः।। तदाह चण्डेश्वरः 'मार्गे मासि तथा ज्येष्ठे क्षौरं परिणयं व्रतम्।। ज्येष्ठपुत्रदुहित्रोस्तु यत्नेन

परिवर्जयेत्' ॥ आपदि तत्रैव 'कृत्तिकास्थं रविं त्यक्त्वा ज्येष्ठपुत्रस्य कारयेत्' इति ॥ श्रीधरीये 'अर्के कर्कटकन्यकाघटधनुर्मुक्ते भृगौ मन्त्रिणि स्फीतज्योतिषि शीतरोचिषि बलोद्रिक्ते विरिक्ते तिथौ ॥ रोहिण्युत्तररेवतीपितृमरुन्मित्रेन्दुहस्तासुरेष्वारार्कार्कजवा-सरादिरहितेषूद्वाहकर्मारभेत्' ॥ असुरं = मूलम् ॥ विधिरत्ने 'कन्याकुम्भकुलीरगे दिनकरे कुर्यान्न पाणिग्रहं शेषाणि प्रवराणि यानि नितरां मासानि पाणिग्रहे' इति ॥ नारदः 'न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ॥ विवाहो देवतानां च प्रतिष्ठां चोपनायने ॥ अप्रबुद्धे हृषीकेशे यावत्तावन्न मङ्गलम् ॥ उत्सवे वासुदेवस्य दिवसे नान्यमङ्गलम्' इति ॥ अत्र विशेषस्तु वसिष्ठः = 'आषाढस्तु शुभो ज्ञेयो यावत्सूर्यो न कर्किणि ॥ विष्णुः शेते सदाऽऽषाढे शुक्लपक्षे हरेर्दिने ॥ कार्तिक्यां प्रतिबुध्येत शुक्लपक्षे हरेर्दिने ॥ अप्रबुद्धे हृषीकेशे यावत्तावन्न मङ्गलम् ॥ प्रबुद्धे चैव कुर्वीत सुदिने निर्मलाम्बरे ॥ न कदाचिद्दशर्क्षेषु भानोरार्द्राप्रवेशनात् ॥ माङ्गल्यादीनि कुर्वीत विवाहादीनि कानिचित्' ॥ चैत्रेण सहाषाढादिमासचतुष्टयं वर्जयेत् ॥ तथा च गुरुः 'चैत्रे चाषाढपूर्वेषु चतुर्ष्वपि च वर्जयेत् ॥ अन्ये तु शुभदा मासाः सौरेणैतेऽतिशोभनाः' इति ॥ वसिष्ठः 'अष्टौ मासाः प्रशस्ताः स्युश्चत्वारः परिवर्जिताः ॥ प्रशस्तेष्वेव मासेषु विवाहं योजयेद्बुधः ॥ चत्वारो निन्दिता मासाः श्रावणाश्वयुजौ तथा ॥ चैत्रे प्रोष्ठपदे चैव विद्वान्नैव प्रयोजयेत्' इति ॥ पौषस्तु शून्यत्वान्निन्दितः ॥ नारदः 'माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः ॥ मध्यमः कार्तिको मार्गशीर्षोऽन्ये निन्दिताः परैः' इति ॥ सङ्ग्रहे 'विवाहे चोपनयने जन्ममासं विवर्जयेत् ॥ विशेषाज्जन्मपक्षं तु वसिष्ठाद्यैरुदाहृतम्' इति ॥ गृह्यसूत्रे 'उदगयन आपूर्यमाणपक्षे पुण्ये नक्षत्रे इति ॥ सर्वे मासा विवाहस्य शुचितपस्तपस्यवर्ज्यमित्येके ॥ रोहिणीमृगशीर्षोत्तराफल्गुनीस्वातीति विवाहस्य नक्षत्राणीति च' ॥ अतो बोधायनानां सर्वे मासाः शुभावहा इत्युक्तम् ॥ केचिदाषाढमाघफाल्गुनमासा वर्ज्या इत्याहुः ॥ इति मासनिर्णयः ॥छ ॥ अथ नक्षत्राणि ॥ सौम्य-पैतृक-हस्ताश्च मैत्र मूलाख्य वायवः ॥ त्रीण्युत्तराणि पौष्णश्च रोहिणी शोभनप्रदा ॥ अन्याश्च सर्वा वर्ज्याः स्युस्ताराः पाणिग्रहे सदा ॥ प्रशस्तनक्षत्राणि 'स्वाती-शशाङ्क-पितृतारक-मैत्रभानि पुञ्जन्मऋक्षमथवावनितर्क्षकं वा ॥ राश्यादिकूटगणनादशकं न चेत्स्यादत्यन्तमिष्टमिति शास्त्रविदो वदन्ति' इति ॥ वासिष्ठः 'शुक्लद्वितीयादिषु ये च कृष्णपक्षे दशम्यन्तगताः प्रशस्ताः ॥ तास्वष्टमी स्कन्दगणेशदुर्गाश्चतुर्दशी पापतिथीर्विवर्ज्याः ॥ वाराः प्रशस्ताः शुभखेचराणां सूर्यार्किवारौ खलु मध्यमौ तौ ॥ त्याज्यः सदा भूमिसुतस्य वारः, कामार्कतिथ्योरपि तौ प्रदोषौ ॥ तिस्रोत्तरामूलमघान्त्यमित्रप्रजेशचन्द्रार्कसमीरभेषु ॥ तदा प्रशस्तः खलु कामिनीनां पाणिग्रहो वेधविवर्जितेषु' इति ॥छ ॥ अथ सङ्क्रान्तिनिर्णयः ॥ नारदीये 'त्याज्याः सूर्यस्य सङ्क्रान्तेः पूर्वतः परतः सदा ॥ विवाहादिषु कार्येषु नाड्याः षोडश षोडश' ॥ वासिष्ठे 'विषुवतोरयनयोर्दिनत्रय हरिपदे षडशीतिमुखेऽपि च ॥ पूर्वतोऽपि परतोऽपि सङ्क्रमान्नाडिकाश्च खलु षोडश षोडश' ॥ विषुवादिलक्षणमुक्तं माधवीये 'अर्के स्थिरान्विशति विष्णुपदाभिधानास्तेभ्यः पराश्च षडशीतिमुखाश्चतस्रः ॥ सङ्क्रान्तयस्त्वजमृगास्यतुलाकुलीरा ज्ञेयाः क्रमादुदगवाग्विषुवायनाख्याः' इति ॥ मेषतुलासङ्क्रमौ विषुवौ, मकरकर्कटसङ्क्रमावयने, वृषसिंहवृश्चिककुम्भसङ्क्रमा विष्णुपदानि, मिथुनकन्याधनुर्मीनसङ्क्रमाः षडशीतय इति ॥छ ॥ अथाष्टमराशिः ॥ बार्हस्पत्ये 'जन्मेशाष्टमलग्नेशौ मिथौ मित्रे व्यवस्थितौ ॥ जन्मराश्यष्टमेशोत्थदोषो नश्यति भावतः' इति ॥छ ॥ अथ ग्रहणम् 'ग्रहणोत्पातभं त्याज्यं मङ्गलेषु ऋतुत्रयम् ॥ यावच्च राहुणाभुक्त्वा मुक्तं तद्दग्धकाष्ठवत् ॥ उत्पातग्रहणादूर्ध्वं सप्ताहमखिलग्रहे ॥ नाखिले त्रिदिनं नेष्टं नेष्टं तद्वदृतुत्रयम् ॥ ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा ॥ सन्ध्यायां तु त्रिस्त्रिदिनं निश्शेषे सप्त सप्त च' ॥ गुरुः 'पश्चादेवोपरागे तु दोषःस्यान्नैव पूर्वतः ॥ ग्रहदाहादयो दोषां यथा स्युर्दहनात्परम्' इति ॥ अथ राहूदयापवादः ॥ शुभकर्मसु राहूदये न शुभं इत्याहुः ॥ गुरुः 'तमोलग्ने शुभं दद्याद्यदा केन्द्रे शुभग्रहः ॥ षण्णवत्यशंकातीतः पश्चात्तच्छुभकर्म चेत् ॥ अथवा राहुकेतुभ्यां ग्रस्तादर्केन्दुमण्डलात् ॥ दिनाशीतेः शतात्पश्चाद्राहुकेतूदयः शुभः' ॥ गुरुः 'अप्रकाशग्रहाः सर्वे न दद्युरशुभं तदा ॥ यदेन्दुः शुभकर्मस्थः शुभस्थाने शुभेक्षितः ॥ बुधशुक्रोदये तेषां लग्नदोषो विनश्यति' ॥ सूर्यकेन्द्रस्थराहूदयभङ्गः 'योगे चाभिजिदाख्येये सौम्यग्रहविलग्नगे ॥ दृष्टे वा तैस्तदा राहुर्लग्नदोषो विनश्यति ॥ यदा शुभग्रहौ केन्द्रे भवेता शुभवीक्षितौ ॥ त्रिषडेकादशे पापास्तदा पापोदयेऽपि सत् ॥ यदातिबलिनौ सौम्यचन्द्रावन्योन्यवीक्षितौ ॥ न चेल्लग्नांशके क्रूरस्तदा पापोदयेऽपि सत्' ॥ माधवीये 'उपरागादपरिगते वर्षार्धे तनगते शभे वलिनि ॥ उदयोऽपि तमोग्रहयोः शभदः

शुभकर्मसु ग्राह्यः' इति ॥छ॥ अत्र महापातः-नारदीये 'यस्मिन्दिने महापातस्तद्दिनं परिवर्जयेत्॥ अपि सर्वगुणोपेतं दम्पत्योर्मृत्युदं यतः'॥ सङ्ग्रहे 'महापातस्य वैधृत्या यावत्कालं स्थितिर्भवेत्॥ तावत्कालं त्यजेत्पूर्वं तावत्कालं त्यजेत्परम्॥ माधवीये-आत्मोपलब्धाविव यामवत्यामुपागतायां ग्रहवासरेषु॥ वर्णेषु पर्णेष्विवबुद्धिमन्तो हीनोत्तमत्वं न खलु स्मरन्ति'॥ अन्यत्र 'न वारदोषाः प्रभवन्ति रात्रौ' इति ॥छ॥ अथ तात्पर्यम्भानोरार्द्राप्रवेशादिदशनक्षत्रपर्यन्तं विवाहं वर्जयेत्॥ हरिबोधानन्तरं कार्तिक-मार्गशिर-माघ-फाल्गुन-वैशाख-ज्येष्ठेषु मेषयुक्त चैत्र-मकरयुक्त पुष्ययोर्वा, शुक्लद्वितीयादिकृष्णदशमीपर्यन्तेषु तिथिषु, आदित्य-सोम-बुध-गुरु-शुक्रवारेषु मङ्गल-शनिवारयोश्च रात्रौ, रोहिणी-मघा-उत्तरात्रय-हस्त-स्वाती-अनूराधा-मूल-रेवतीषु, सप्तमे सर्वग्रहवर्जिते, अष्टमे शनि-राहु-केतून्विना अन्यग्रहवर्जिते, शुभग्रहराशिषु शुभयोगदृष्टियुक्तपापराशिषु विवाहं कुर्यात्॥ दम्पत्योर्जन्ममासं जन्मपक्षं वा वर्जयेत्॥ जन्मदिन-जन्मलग्नानि च वर्जनीयानि, पुरुषस्याद्यजन्म वर्ज्यं अनुजन्मत्रिजन्मनक्षत्रे मध्यमे, स्त्रियास्तु जन्मर्क्षं श्रेष्ठमन्ये मध्यमे, पक्षद्वयेऽपि नमवीं चतुर्दशीं च, कृष्णपक्षे चतुर्थीं च वर्जयित्वा, शुक्लचतुर्थी षष्ठ्यष्टमी द्वादशी च मध्यमाः, अन्ये शुभाः, एवं लग्नादिकं विचार्य विवाहं कुर्यात्॥ राशीनाह नारदः 'शुभेक्षिता युताः शस्ता उद्वाहेऽखिलराशयः' इति ॥छ॥

अथ राशिकूटादिनिर्णयः कथ्यते॥ नारदीये 'पुण्येह्नि लक्षणोपेतं सुखासीनं सुचेतसम्॥ प्रणम्य दैववित्पृच्छेद्दैवज्ञं भक्तिपूर्वकम्॥ ताम्बूलफलपुष्पाद्यैः पूर्णाञ्जलिरुपागतः॥ कर्ता निवेद्य दम्पत्योर्जन्मराशिं सजन्मभम्' इति॥ 'अष्टधा राशिकूटाश्च स्त्रीदूर-गण-राशयः॥ राशीश-योनि-वर्णाख्या नाडी-रज्जुरितिक्रमात्'॥ प्रयोगदर्पणे तु 'अष्टादशकूटानि' इत्युक्तं, तेषां नामानि 'माहेन्द्र गणकूटं च दिनकूटं च योनिजम्॥ स्त्रीदीर्घं रज्जुकूटं च वश्यं वर्णाख्यकूटकम्॥ राशिराश्यधिपाख्ये च वेधा नाढ्याख्यकूटके॥ भूत लिङ्गाख्यकूटे च जात्याख्यं पक्षिकूटकम्॥ योगिनी गोत्रकूटे च कूटान्यष्टादशैव हि' इति॥ 'दम्पत्योर्वृद्धिकारीणि यत्नाच्चिन्त्यानि तत्वतः' इति च॥ सङ्ग्रहे तु 'दिनं गणंचमाहेन्द्रं स्त्रीदीर्घं योनिरेव च॥ राशिराश्यधिपौ रज्जुर्वेधा वश्याः तथा दश॥ वर्णो नाडी भूत लिङ्ग जाति गोत्राणि पक्षिणः॥ योगिनीऋक्षदेवाख्यः तथाष्टादशवर्गकाः' इति॥ एतान्यवश्यकानि कानिचित्कूटानि लिख्यन्ते ॥छ॥ अथ दिनकूटम्॥ कन्यादिवरऋक्षान्तं पर्यायान्नवसङ्ख्यया॥ समताराःशुभाः प्रोक्ता दिनकूटं प्रशस्यते॥ जन्म-सम्पत्-विपत्-क्षेम-प्रत्यरः-साधको-वधः॥ मैत्र-परममैत्रं च जन्मादीनि पुनः पुनः॥ इति नक्षत्रनामानि॥ अथ फलम्॥ 'स्नेहोऽर्थसिद्धिर्विपदिष्टसिद्धिः स्नेहच्युतिर्मङ्गलमृत्युदौ च॥ मित्रातिमित्रत्वमिति क्रमेण दिनाह्वयं स्त्रीपरिवर्तनेन' इति॥ 'स्त्रीभाजन्म विपत्तिश्च प्रत्यरो वध एव च॥ पर्याये प्रथमे वर्ज्या मध्ये त्वाद्यचतुस्त्रयः॥ पादास्त्याज्यास्तृतीये तु दोषो नास्ति शुभावहः' इति॥ आद्यशं विपदर्क्षे तु प्रत्यरे च चतुर्थकम्॥ वेधाख्ये च तृतीयांशं विना शेषास्तु शोभनाः॥ अस्यापवादः॥ गर्गः 'स्त्रीदीर्घगणयोः सत्वे चन्द्रताराबले सति॥ असत्वं दिनकूटस्य दोषं न जनयेद्ध्रुवम्'॥ इति दिनकूटम्॥१॥ अथ गणकूटम्॥ अश्वी-मृगशिरो-हस्ताः-स्वाती-पुष्यः-पुनर्वसुः॥ मैत्र-श्रवण-रेवत्य एते देवगणाः स्मृताः॥ भरणी-रोहिणी चार्द्रा-पूर्वात्रितयमेव च॥ उत्तरात्रयसंयुक्ता इत्येते मानुषागणाः॥ ज्येष्ठा-मूला-मघा-ऽऽश्लेषा-विशाखा-त्वाष्ट्र-वारुणाः॥ कृत्तिका च धनिष्ठा च राक्षसाः परिकीर्तिताः॥ स्वगणं चोत्तम विद्यान्मध्यमौ दैवमानुषौ॥ कलहं राक्षसे देवे मरणं नरराक्षसौ॥ राक्षसी यदि वा नारी नरो भवति मानुषः॥ दोषस्तत्र न सन्देहो विपरीते शुभावहः॥ देवासुरगणे पुंसि यदि स्त्री मानुषे गणे॥ क्रमादुत्तममध्याख्यौ विपरीतौ न शोभनौ॥ अस्यापवादः॥ राशीशयोः सुहृद्भावे मित्रत्वे वांशनाथयोः॥ गणाभावेऽपि दम्पत्योः पुत्रपौत्रादिवृद्धयः॥ माहेन्द्रराशिकूटौ च स्यातां वश्यसमागमे॥ गणाभावेन जनितो दोषो नास्ति शुभावः॥ गर्गस्तु 'ग्रहमैत्री च राशिश्च विद्येते चेत्तयोर्यदि॥ न गणाभावजनितं दूषणं न विरोधकम्' इति॥ इति गणकूटम्॥२॥ अथ माहेन्द्रकूटम्॥ 'वधूभात्तु चतुस्सप्त

दशमं च त्रयोदशं ॥ षोडशैकोनविंशश्च द्वाविंशः पञ्चविंशतिः ॥ एष माहेन्द्रयोगश्च दम्पत्योः शुभदायकः' इति ॥ केचित्प्रकारान्तरमाहुः 'स्त्रीपुन्नक्षत्रमध्यस्थनक्षत्रं च हरेत्त्रिभिः ॥ अवशेषद्वयं प्राहुर्माहेन्द्रं योगमुत्तमम् ॥ अस्याभावेऽपि कर्तव्यं रज्जौ च ग्रहमित्रके' इति ॥ इति माहेन्द्रकूटम् ॥३॥ अथ स्त्रीदीर्घकूटम् ॥ स्त्रीधिष्ण्यादतिदूरस्थ पुम्भं स्त्रीदीर्घमुच्यते ॥ नवकत्रितये ज्ञेयं नीचं मध्यममुत्तमम् ॥ स्त्रीभान्निभागे प्रथमे पुत्रपौत्रादिनाशनम् ॥ द्वितीये बन्धनं प्रोक्तं अतः स्त्रीदीर्घमुच्यते ॥ अन्यत्रापि 'स्त्रीधिष्ण्यादादिनवके स्त्रीदूरमतिनिन्दितम् ॥ द्वितीये नवके श्रेष्ठं तृतीये नवके शुभम् ॥ त्रयोदशर्क्षादूर्ध्वं स्यात्स्त्रीदीर्घमिति कथ्यते ॥ नवर्क्षादधिकं मध्यमन्यं नैव तु कारयेत् ॥ स्त्रीदीर्घ यदि नोद्वाहे स्त्रीनाशो भवति ध्रुवम् ॥ ग्रहमैत्रे गणे राशौ सति चेन्न तु दोषकृत्' ॥ इति स्त्रीदीर्घकूटम् ॥४॥ अथ योनिकूटम् ॥ अश्वो गजो ह्यजः सर्पः सर्पिणी श्वा बिडालकः ॥ अजो मार्जारमूषौ च मूषिकी वृषमाहिषौ ॥ व्याघ्रश्च महिषो व्याघ्री मृगीमृग्यौ शुनः कपिः ॥ गोषण्डो वानरी मर्त्यस्तुरगी स्त्री च गौर्गजी ॥ प्रकारान्तरेणाप्याह 'अश्वी शतभिषगश्वौ भरणी रेवती गजौ ॥ कृत्तिकापुष्पभे छागौ नागौ सौम्यं च रोहिणी ॥ आर्द्रा मूले तथा श्वानौ, अदित्यही बिडालकौ ॥ मूषकः पितृभे चैव पूर्वधिष्ण्यश्च मूषकी ॥ अहिर्बुध्योत्तरें गावौ स्वाती हस्तौ तु माहिषौ ॥ चित्रा विशाखा व्याघ्रौ च मैत्र ज्येष्ठे मृगौ तथा ॥ पूर्वाषाढं च हरिभं मर्कटौ तौ प्रकीर्तितौ ॥ अभिजिद्वैश्वदेवौ च बभ्रुद्वयमुदाहृतम् ॥ धनिष्ठा पूर्वभाद्रौ च सिंहौ चान्यैर्नरौ स्मृतौ ॥ उत्तमं चैकयोनित्वं भिन्नयोनिस्तु मध्यमम्' ॥ अथ वैरवर्गः 'गोव्याघ्रं गजसिंहमश्वमहिषं श्वैणं च बभ्रूरगं वैरं वानरमेषकं च सुमहत्तद्वद्बिडालोन्दुरुः ॥ लोकानां व्यवहारतोन्यदऽपि च ज्ञात्वा प्रयत्नादिदं दम्पत्योर्नृपभृत्ययोरपि सदा वर्ज्यं शुभस्यार्थिभिः' ॥ अन्यत्र 'श्वा गौर्ना महिषो द्विपाजकपयो व्याघ्रद्विषोऽरिः शुनो बस्तो गौः प्लवगो मृगोऽप्यथ मिथो वैर्याखुभुङ्मूषिकम् ॥ एणेभं महिषोश्वमोतुभुजगं हस्त्यश्वमाखूरगं योन्योरत्र सुहृत्वमैक्यमपि च श्लाघ्यं विरोधोऽशुभः' ॥ अस्यार्थः - शुनकादिसप्त प्राणिनः व्याघ्रस्य वैरिणः, शुनो वैरिणस्तु (बस्तः = छागः) बस्तादिचत्वारः, अन्ये अन्योन्यवैरिणः ॥ योन्योर्मैत्रत्वमैक्यं च शुभं, विरोधस्त्वशुभः त्याज्य इत्यर्थः ॥ अत्र गोषण्डः बभ्रुः इति पर्याय नाम ॥ एणेभमित्यत्र एणशब्दः सिंहवाचकः ॥ पूर्वं पुंसः स्त्रियः पश्चाद्योनिरित्यभिधीयते ॥ पुंसां पुंभिश्च संयोगे सदा शत्रुत्वमाप्नुयात् ॥ पुंसां स्त्रीभिश्च संयोगे विवाहो मध्यमो मतः ॥ स्त्रीणां स्त्रीभिश्च संयोगे विवाहं कारयेद्बुधः ॥ यदि नारी नरःस्यात्तु नरो नारी शुभः स्मृतः ॥ अस्यापवादः ॥ योनेरभावे नोद्वाहः कार्यः सतुवियोगदः ॥ राशिर्वश्यं च यद्यस्ति कारयेन्न तु दोषभाक् ॥ इति योनिकूटम् ॥५॥ अथ राशिकूटम् ॥ एकराशौ सदा प्रीतिरैश्वर्यं समसप्तके ॥ द्विर्द्वादशे भवेन्मृत्युरायुर्द्वादशके द्विके ॥ त्र्येकादशे महादुःखं सुखमेकादशत्रिके ॥ चतुर्थदशके वैरं प्रीतिर्दशचतुर्थके ॥ वैधव्यं पञ्चनवके शुभदं नवपञ्चभे ॥ षष्ठाष्टके च कलहं स्नेहमष्टमषष्ठभे ॥ अत्र विशेषस्तु ॥ द्विर्द्वादशे शुभाः प्रोक्ता मीनाद्या युग्मराशयः ॥ मेषादियुग्मराशिश्चेन्निधनं सम्भविष्यति ॥ द्विर्द्वादशे वा नवपञ्चमे वा षष्टाष्टके रक्षसि वाऽथ योषित् ॥ एकाधिपत्ये भवनेशमैत्र्ये विरिञ्चिपाणिग्रहणं विधेयम् ॥ रज्जु-त्रिकोण-स्त्रीदीर्घ-द्विर्द्वादश-षडष्टसु ॥ राशीशैक्येऽथवा मैत्र्ये दम्पत्योः तत्सुखावहम् ॥ षष्ठाष्टकेऽपि कुर्वीत तृतीयैकादशेपि वा ॥ विवाहं पञ्चनवमे ग्रहाणामीशमित्रतः ॥ स्त्रीपुंसयोर्मानवदानवाख्यनक्षत्रयोः शोभनदो विवाहः ॥ विनाऽपि राशीश्वरमित्रभावं प्रशस्त एवोत्तमराशिकूटे ॥ पञ्चमनवमौ शुभदौ मेषहरी कर्किवृश्चिकौ प्रोक्तौ ॥ समसप्तकेऽप्यशुभदौ घटसिंहौ पाणिपीडने कथितौ ॥ कर्कीनक्रौ नृयुक्चापे तुलामेषावशोभनौ ॥ घटसिंहौ विना कार्यौ तथैव समसप्तके ॥ पञ्चमनवमौ शुभदौ नव दशतारे क्रमाद्वधूभगणात् ॥ भवभवने वैरं हि रिप्फर्क्षं मृत्युकरमेव ॥ कन्याजन्मांशमारभ्य षट्त्रिंशत्पादतः परम् ॥ ग्राह्य स्यात्पञ्चनवमं विवाहे गार्ग्यसम्मतम् ॥ त्रिकोणं तु शुभं प्रोक्तं मेषसिंहधनुः क्रमात् ॥ वृषकन्ये नृयुक्तौली घटयुग्मे शुभस्थिते ॥ कर्किवृश्चिकमीनेषु त्रिकोणं तु शुभावहम् ॥ षष्ठाष्टकविषये ॥ मेषेण कन्या धनुषा ककुद्मी तौल्या तिमिः कुम्भभृता कुलीरः ॥ सिंहेन नक्रो नृयुगेण कौर्पैः षष्ठाष्टकश्चाप्यशुभाय योगः ॥ वृषे तुलायां अथ कर्कचापौ कन्याघटौ वृश्चिकमेषयोश्च ॥ मीने च सिंहे मकरान्नृयुग्मे षष्ठाष्टके प्रीतिकरो विवाहः ॥ वश्ये चैकाधिपत्ये वा शुभं षष्ठाष्टकेऽपि च ॥ मित्रभावाश्रितानां तु त्रिकोणेऽप्येवमीरितम् ॥ अनेन शत्रुषष्ठाष्टकं त्याज्यं मित्रषष्ठाष्टकं

कीटमेषयोर्वृषजूकयोः ।। कर्किचापभयोर्मीनसिंहयोर्मृगयुग्मयोः ।। कन्यकाकुम्भयोरेव प्रीतिदं पाणिपीडनम्' इति ।। अस्यापवादः ।। राशियोग = रहितस्तु विवाहो निन्दितो भवति यद्ययमेव ।। रज्जु-वेध-सहितो ग्रहमित्र-योगतः सकलदोषविहीनः ।। इति राशिकूटम् ।।६।। अथ राश्यधिपकूटम्। मेषवृश्चिकयोर्भौमः तुलावृषभयोः सितः ।। कन्यामिथुनयोः सौम्यः सोमः कर्कटकाधिपः ।। सिंहस्याधिपतिर्भानुर्गुरुस्तु झषचापयोः ।। मृगास्यकुम्भयोर्मन्द एते राश्याधिपा स्मृताः ।। अथ मित्रत्वम् ।। रवेः समो ज्ञः, सुहृदः कुजेन्दुजीवा, स्त्वरी भार्गवसूर्यपुत्रौ ।। चन्द्रस्य मित्रे बुधभास्करौ च शेषाः समाः कश्चन नारिरस्य ।। कुजस्य मित्राणि रवीन्दुजीवाः समौ सितार्की त्वसुहृद्बुधश्च ।। बुधस्य मन्देज्यकुजाः समाः स्युर्मित्रे सितार्कावसुहृद्विधुश्च ।। गुरोश्च मित्राणि रवीन्दुभौमाः त्वरी सिताज्ञौ च समस्तु मन्दः ।। शुक्रस्य मित्रे बुधसूर्यपुत्रावरी रवीन्दू च समौ कुजार्यौ ।। मन्दस्य मित्रे ज्ञसितावमित्रा रवीन्दुभौमाश्च समस्तु जीवः ।। एवं ग्रहाणां च त्रिकोणभावाच्छत्रुत्वमित्रत्वसमत्वमुक्तम् ।। उत्तमं मित्रवर्गः स्यात्सममित्रं तु मध्यमम् ।। कनिष्ठं समवर्गः स्याद्वैरवर्गं न कारयेत् ।। कलहं शत्रुमित्रे च वियोगं समशत्रुता ।। राशिनाथें विरुद्धेऽपि मित्रे चांशाधिपे सति ।। अंशमित्रेण कर्तव्यं शुभदं पाणिपीडनम् ।। अंशाधिपौ यदा मित्रे यदा राश्यधिपौ तु वा ।। विवाहं योजयेद्धीमान् दम्पत्योः सौख्यवर्धनम् ।। अस्य अपवादः ।। विवाहमाहुर्ग्रहमैत्रशून्यं वियोगदं यद्ययमेव भूयः ।। स्त्रीदीर्घनाडी-सगणः-सरज्जुः सराशिकश्चेच्छुभदं वदन्ति ।। स्त्रीराक्षसं नश्यति राशियोगे राशीशयोगो ह्यथ राशिदोषम् ।। वश्येन कन्यावरजन्मतारानवां-शनाथैक्यसुहृत्तया च ।। प्रयोगपारिजाते बृहस्पतिः 'दम्पत्योर्जन्मलग्नाभ्यां यौ ग्रहावधिपौ स्मृतौ ।। तयोः परस्परं मैत्र्ये विवाहे शुभदो मतः' इति ।। इति राश्याधिपकूटम् ।।७।। अथ रज्जुकूटम् ।। लिङ्गाकारास्त्रिरेखाः स्युः तिर्यग्रेखाचतुष्टयम् ।। वायव्यचरणात्पूर्वमश्विन्यादि लिखेत्ततः ।। पदोर्विदेशगमनं जान्वोः कामविवर्जितौ ।। नाभौ चेदल्पपुत्रत्वं कण्ठे वैधव्यमेव च ।। शिरो रज्जुश्च मरणमित्येतद्रज्जुलक्षणम् ।। एकरेखान्तरे द्व्यर्क्षे रज्जुदोषं विनिर्दिशेत् ।। अश्विसार्पमघाज्येष्ठामूलान्त्याः पादरज्जवः ।। याम्यतिष्यार्यमामैत्राप्याहिर्बुध्यास्तु जानुगाः ।। अग्निमातृभगेन्द्राग्नीविश्वाभाद्राश्च नाभिगाः ।। ब्रह्मरुद्रकरस्वातीश्रोणाः पाशी च कण्ठगाः ।। वसुचित्रेन्दवः शीर्षे एकरज्जौ विवर्जयेत् ।। एकरज्जुस्सदारज्जुर्भिन्नरज्जुं च योजयेत् ।। आरोहरज्जुश्चिरकालभोगी वरोहरज्जुश्च वधूविनाशः ।। आरोहरज्जुर्ह्यवरोहरज्जुः पाणिग्रहे मङ्गलमातनोति ।। वरोहरज्जुश्चेत्यत्र अवेत्युपसर्गस्याकारलोपः, तथा चामरकोशे 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यत्र पिधानशब्दप्रयोगवत् ।। अवरोहरज्जुरित्यर्थः ।। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्युक्तत्वात् ।। अस्यापवादः ।। रज्जोरभावे नोद्वाहो विवाहे विधवा भवेत् ।। ग्रहमैत्रं राशिनाड्यौ यदि सन्ति न दोषदः ।। शिरःकण्ठौ यदि स्यातामपवादो न विद्यते ।। इति रज्जुकूटम् ।।८।। अथ वेधाकूटम् ।। पूर्वोक्तरज्जुवदेव रेखा विलिख्य, वायव्याद्यश्विन्यादिनक्षत्राणि विलिख्य, गणनायां क्रियमाणायां तत्र स्वस्वचतुर्थरेखागतनक्षत्रेणान्योन्यं विध्यति, तद्वयं दम्पत्योर्यदि तद्विवाहे परिहार्यम् ।। तदेवोच्यते 'अश्वीन्द्रौ यममित्रभे हरिहरौ शूर्पानलौ वाप्य्वजौ मूलाही पितृपूषणौ गुरुजले देवप्रसूविश्वभे ।। बुध्न्यर्क्षार्यमणौ दिनेशवरुणौ भाद्रर्क्षभाग्ये मिथोवेधान्नार्हति ऋक्षयोगयुगलं वस्विन्दुचित्रात्रयम्' ।। तदेवाह 'त्यजसुरपतिनाश्वं याम्यमैत्रं च विद्धं अनलहतविशाखा रोहिणी स्वाति विद्धा ।। हिमकर वसु चित्रा रौद्रविद्धश्च विष्णुः त्वदितिरिति सविश्वे आप्यपुष्यं च विद्धम् ।। भुजगनिर्ऋतिविद्धं पैतृकं पौष्णविद्धं तदपरमथ भाद्रा चोत्तरा पूर्वभाद्रा ।। कर इति शततारा योग एवं विवाहे भवति यदि विनाशः कन्यकाया वरस्य ।। जन्मर्क्षवेधे कथितेऽत्र जाते युक्तेऽपि वश्यादिगुणैर्बलिष्ठैः ।। पतिं च कन्यां च समूलघातं निहन्ति षष्ठाष्टमराशियोगः' ।। अस्यापवादः ।। असति जननतारावेधदोषो यदि स्याद्भवनपतिसुहृत्वं वश्यतैकाधिपत्यम् ।। न भवति खलु दोषस्तर्हि षष्ठाष्टमत्वं सति कथितगुणेऽस्मिन्नाशुभो राशियोगः ।। इति वेधाकूटम् ।।९।। अथ वश्यकूटम् ।। मेषस्य वश्यौ सिंहाली कर्किजूकौ वृषस्य तु ।। युग्मस्य कन्यकावश्यं कर्किणश्चापवृश्चिकौ ।। तुलासिंहस्य वश्या स्यात् कन्याया

यममत्स्यभे ।। मृगकन्ये तु जूकस्य कर्की स्याद्वृश्चिकस्य तु ।। मीनश्चापस्य वश्यः स्यात्क्रियकुम्भौ मृगस्य तु ।। मेषः कुम्भस्य वश्यः स्यान्मकरो मीनवश्यकृत् ।। एवं वश्यसमायोगे स्त्रीराशेः पुरुषस्य तु ।। वश्ययोगः शुभः प्रोक्तो दम्पत्योः प्रेमकृत्परम् ।। माधवीये 'अलिमृगपती तौलीन्द्वक्षे वधूर्मलिधन्विनौ वणिगधिपतिं वीणामीनौ मृगं युवतीन्दुभे ।। पुनरनिमिषं मेषोपान्त्यावजं मकरं क्रमादिति पदमितराशीन् वश्यानजादिषु मन्यते ।। स्वामिदर्शनकाले तु वश्यारूढोदयः शुभः ।। स्वामिराशेर्ग्रहे वाऽपि वश्यराशिः श्रियावहः' ।। इति वश्यकूटम् ।।१०।। अथ वर्णकूटम् ।। कर्कान्त्यवृश्चिका विप्रा राजा सिंहस्तुला धनुः ।। मेषयुग्मघटा वैश्याः शूद्रा वृषमृगाङ्गनाः ।। वर्णश्रेष्ठा च या नारी वर्णहीनस्तु यः पुमान् ।। विवाहमेतयोः कुर्यात्तस्या भर्ता विनश्यति ।। इति वर्णकूटम् ।।११।। अथ नाडीकूटम् ।। चतुस्त्रीद्व्यङ्घ्रिनक्षत्रे कन्यायाः क्रमशोऽश्विभात् ।। वह्निभादिन्दुभान्नाडी त्रिचतुःपञ्चपर्वसु ।। चतुर्नाडी तु बाल्हीके पाञ्चाले पञ्चनाडिका ।। त्रिनाडी सर्वदेशेषु विवाहः सर्वसम्मतः ।। रोहिण्यार्द्रामृगेन्द्राग्नितिष्यश्रवणपौष्णभाः ।। अहिर्बुध्न्यस्तथाऽष्टौ च एकनाडी शुभावहाः ।। राश्यैक्ये ऋक्षभेदे तु नाडीदोषो न विद्यते ।। नक्षत्रैक्ये पादभेदे कुर्वन्ति मुनयः सदा ।। नाडीवियोगे यदि चेद्विवाहः स एव वैधव्यमलङ्करोति ।। तथाऽपि माहेन्द्रदिनेन युक्तो राशीशयोनी प्रयुते न दोषः ।। नाडीगणं च वेधा च ग्रहमैत्रं च वश्यकम् ।। गौतम्या दक्षिणे देशे प्रशस्तं पञ्चकूटकम् ।। नाडीकूटं कन्यकाकण्ठसूत्रं ज्ञेयं तस्माच्चिन्तयेत्पूर्वमेव ।। पश्चाद्राशिस्वामिनोर्मित्रयोगो विप्रादीनां मुख्यमेतद्विवाहे ।। निधनं मध्यमनाड्योर्दम्पत्योनैव पार्श्वयोर्नाड्योः ।। आसन्नायां तस्यान्तरितायां न दोष उद्वाहे ।। सा मध्यनाडी पुरुषं निहन्ति तत्पार्श्वनाडी खलु कन्यकां च ।। आसन्नपर्यायसमाननाडी वर्षेण चाप्यन्तरिते त्रिवर्षैः ।। राशिकूटादिकं सर्वं स्त्रीभमारभ्य चिन्तयेत् ।। पुम्भाच्चेत्तु विरुद्धः स्यान्नाडीसंशुद्धिरश्विभात् ।। भरणीसौम्यतिष्याश्च अर्यमा त्वाष्ट्रमित्रभे ।। आषाढवस्वहिर्बुध्न्य आसन्ने च विवर्जयेत् ।। आदिमध्यावसानेषु त्रीणि त्रीणि त्रयः क्रमात् ।। अभ्यन्तरैकनाडीषु शुभदं पाणिपीडनम् ।। ब्रह्मक्षत्रियवैश्यानां मध्यदक्षिणवामकाः ।। ब्राह्मणानां विशेषेण मध्यनाडी च निन्दिता ।। ग्रहमैत्रं द्विजातीनां गणकूटं तु भूपतेः ।। विशां च राशिकूटं स्याच्छूद्राणां योनिरेव च ।। सर्वथा शास्त्रसन्देहो विवाहेषु प्रदृश्यते ।। शकुनं तु निरीक्ष्याथ विवाहं कारबेद्बुधः ।। इति नाडीकूटम् ।।१२।। अथ भूतकूटम् ।। अश्विन्याद्यास्तु षट्ताराः पुनर्वस्वादयश्च षट् ।। हस्तादिपञ्चकं भानां ज्येष्ठादिपञ्चकं तथा ।। वस्वादिपञ्चकं भानां भूतकूटं धरादयः ।। पञ्चभूतानि पृथ्व्यापः तेजो वायुश्च खं तथा ।। स्त्रीपुंसां जन्मनक्षत्रे एकभूते शुभावहम् ।। धरातोये तु सम्पत्स्यात्तोयवायू तु मध्यमम् ।। अधमं वायुभूमी स्यादग्नितोयेधमाधमम् ।। शेषभूतेधमो योगः परस्परसमागमे ।। एतानि भूतकूटानि दमपत्योश्च विवाहके ।। इति भूतकूटम् ।।१३।। अथ लिङ्गकूटम् ।। श्रवणाभिजिदादित्या हस्ततिष्योऽश्विनी विधिः ।। प्रोष्ठपाद्वयं मित्रं पुन्ताराश्च प्रकीर्तिताः ।। वारुणं सौम्यमूले च नपुंसकसमाह्वये ।। अग्निसार्पचतुष्कार्द्रा याम्यत्वाष्ट्रत्रिकं जलम् ।। विश्वेन्द्रवासवं पौष्णं स्त्रीलिङ्गं समुदाहृतम् ।। स्त्रीनक्षत्रेऽङ्गनाजन्म पुन्नक्षत्रे पुमान्यदि ।। स संयोगः शुभः प्रोक्तो देवेन्द्रगुरुणा यतः ।। अशुभं विपरीते तु मध्यमं स्त्रीनपुंसकम् ।। पुन्नपुंसकमेवं स्यात्सर्वस्यद्विकयोगतः ।। इति लिङ्गकूटम् ।।१४।। अथ जातिकूटम् ।। अश्विनी रौद्र भाग्यादि पञ्च पञ्च च तारकाः ।। ततश्चतुश्चतुस्तारा जातयः षट् प्रकीर्तिताः ।। ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चैवानुलोमजः ।। प्रतिलोमाश्चकथ्यन्ते पण्डितैर्जातयश्च षट् । उत्तमं समजातिः स्यान्मध्यमस्त्वनुलोमजः ।। अधमं प्रतिलोमं स्याच्चण्डालोऽप्यधमाधमः ।। इति जातिकूटम् ।।१५।। अथ गोत्रकूटम् ।। मरीचिगोत्रताराः स्युरश्विन्यादिचतुष्टयम् ।। वसिष्ठाः सौम्यताराद्या आश्लेषादिकमङ्गिराः ।। हस्तादिषु तथाऽत्रिः स्यात्पुलस्त्यो मैत्रभादिषु ।। पुलहश्चैव विश्वादिर्भृगुर्वारुणभादिषु ।। एवं गोत्रादिताराः स्युर्भिन्नगोत्रे शुभं भवेत् ।। सगोत्रे त्वशुभं विद्याद्गोत्रकूटमुदाहृतम् ।। इति गोत्रकूटम् ।।१६।। अथ पक्षिकूटम् ।। भैरुण्डकः पिङ्गलकाकताम्रचूडाः शिखण्डीति खगाः क्रमेण ।। बाणाङ्गतर्केष्विषुसङ्ख्यभानां श्रेष्ठं द्वयोरेकविहङ्गमत्वम् ।। बाण ५, अङ्ग ६, तर्क ६, इषु ५, इषु५।। एकपक्ष्युभयोः सख्यं प्रीतिः स्यात्पाणिपीडने ।। भिन्नपक्ष्युभयोर्हानिः कलहश्चापि जायते ।। इति पक्षिकूटम् ।।१७।। अथ योगिनीकूटम् ।। योगिनीनां तु सप्तानामनीकस्तुल्यसप्तकः ।। एकयोगिनिनक्षत्रे शुभं तारा यदि द्वयोः ।। भिन्नयोगिनितारासु न शुभोऽयं विशेषतः ।। इति योगिनीकूटम् ।।१८।। अथ आयकूटम् ।। ध्वजस्य ताराः समप्रोक्ता अश्विन्यादिचतुष्टयम् ।। सौम्यद्वाग्रेस्तु चत्वारि सर्पादिश्च हरेस्तथा ।। हस्ताद्याश्च शुनश्च स्युर्वृषस्यैन्द्राग्निपूर्वकाः ।। मूलाद्याः खरताराः स्युर्वैष्णवाद्या गजस्य

तु ॥ पूर्वाप्रोष्ठपदाद्याः स्युर्वायसस्य त्रितारकाः ॥ मित्राये तु शुभं विन्द्यात्पर्यायस्तु विनाशदः ॥ समाये सम एव स्याद्दम्पत्योर्जन्मतारयोः ॥ इत्यायकूटम् ॥१६॥ अत्राष्टादशकूटानां मध्ये योगिनीकूटस्थाने आयकूटमेवेति केचित् ॥ इत्यष्टादशकूटानि ॥छ ॥ अथ कूटानां गुणवृद्धिमाह ॥ 'वर्णो वश्यं तारा योनिर्ग्रह गण भनाडीभिः ॥ गुणवृद्धिर्विज्ञेया शस्तं स्याद्विंशतेरूर्ध्वम् ॥ गुणैकवर्णं द्विगुणं च वश्यं त्रिभिश्च तारा चतुरश्च योनिम् ॥ पञ्चग्रहाः षड्गुणको गणश्च भकूटसप्तैव तथैव नाडी' इति ॥छ ॥ अत्र कानिचित्कूटानि विवाह आवश्यकानीत्याह सङ्ग्रहकारः 'राशिकूटतदधीशसुहृत्वं स्त्रीविदूरगणयोनिविनाड्यः ॥ दैवयोगवरगोत्रसमेताः पाणिपीडनविधौ विचिन्त्यताम्' ॥छ ॥ अथ कूटफलानि ॥ 'दिनेऽनुकूले श्रियमातनोति गणेऽनुकूले तु मनोनुरागम् ॥ माहेन्द्रयोगे परमां विभूतिं स्त्रीदीर्घयोगे प्रियसौख्यता च ॥ रज्जौ च माङ्गल्यमुपैति दीर्घं वेधाऽनुकूले बहुपुत्रतां च ॥ नाड्याश्च योगे शुभदं परस्परं सराशिकं चेच्छुभदं वदन्ति ॥ दम्पत्योर्जन्मताराभ्यां नामर्क्षाभ्यामथापि वा ॥ स्त्रीजन्म पूर्वताराभ्यां संयोगाद्वा शुभाशुभम् ॥ यस्य जन्म न विज्ञातं तस्य नाम विधीयते ॥ जन्म जन्मनी कर्तव्ये नामनामनी कारयेत् ॥ जन्म नाम न कर्तव्यं स्त्रीपुंसोर्जन्मराशिषु ॥ जन्मर्क्षस्यार्धफलं नामर्क्षं ब्राह्मणस्य निर्दिष्टम् ॥ नृपवैश्ययोः समानं शूद्राणां नामतः फलं ततोऽप्यधिकम् ॥ अज्ञातजन्मभानां सर्वेषां नामभाक्फलं भवति ॥ सेवापरिणयनादौ ग्राह्यं तद्वति विशेषतः फलदम् ॥ आयुधवाहनकिङ्करभूम्यादीनां परिग्रहे भर्तुः ॥ तन्नामर्क्षाभ्यां योगाः सर्वे विवाहवद्वाच्याः ॥ ग्रामक्षत्रियसेवायां वृद्धौ च व्यवसायिनि ॥ चत्वारि नामऋक्षाच्च शेषं जन्मनि कारयेत्' इति ॥छ ॥

अथ गौत्रप्रवरनिर्णयः कथ्यते ॥ 'असमानार्षगोत्रजाम्' इति गृह्यसूत्रे ॥ ऋषेरिदं आर्षम् ॥ प्रवरः गोत्रप्रवर्तकस्य मुनेर्व्यावर्तको मुनिगण इत्यर्थः ॥ तथा हि ॥ अङ्गिरोबृहस्पती भारद्वाजस्य गोत्रप्रवर्तकस्य व्यावर्तकौ ॥ प्रयोगोऽपि 'आङ्गिरसबार्हस्पत्यभारद्वाज' इति ॥ एवमन्यत्राप्युदाहार्यम् ॥ गोत्रं तु वंशपरम्पराप्रसिद्धम् ॥ यस्या वध्वाः वरेण प्रवरैक्यं वा नास्ति सा तेन विवाह्या ॥ अत्र विशेषमाह प्रवरसूत्रकारः 'एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते ॥ तावत्समानगोत्रत्वं भृगुमङ्गिरसं विना' ॥ तथा च बोधायनः 'पञ्चानां त्रिषु सामान्यादविवाहस्त्रिषु द्वयोः ॥ भृग्वङ्गिरगणेष्वेवं शेषेष्वेकोऽपि वार्यते ॥ वसिष्ठौ तौ च विज्ञेयौ ब्रह्मपुत्रोऽथ शापतः ॥ मैत्रावरुणिरित्येवं वासिष्ठो विग्रहान्तरात् ॥ ब्रह्मात्मजात् शक्तिपराशरव्यासशुकादयः ॥ ज्ञेयोऽपि तैत्तस्त्वनयोर्द्वितीयात्कुण्डिनादयः' ॥ अत एव भिन्नगोत्रत्वाद्भिन्न-शरीरावयवत्वाच्च वसिष्ठवासिष्ठयोर्विवाहो भवति ॥ अत्र गोत्रप्रवर्तकाश्च प्राधान्येनाष्टौ मुनयः ॥ ते च अगस्त्याष्टमाः सप्तऋषयः ॥ तथा च बोधायनः विश्वामित्रो जमदग्निर्भरद्वाजोऽथ गौतमः ॥ कश्यपोऽत्रिर्वसिष्ठश्च एते सप्तर्षयः स्मृताः ॥ सप्तानामृषीणामगस्त्याष्टमानां यदपत्यं तद्गोत्रमित्याचक्षते' इति ॥ प्रवरसङ्ग्रहकाराः अष्टादशगणानाहुः 'जामदग्न्यो वीतहव्यो वैन्यो गृत्समदाह्वयः ॥ वाध्रियश्वो गौतमश्च भरद्वाजः कपिस्तथा ॥ हारितो मौद्गलः कण्वो विरूपो विष्णुवृद्धकः ॥ अत्रिविश्वामित्रकौ च वसिष्ठः कश्यपाह्वयः ॥ अगस्त्यश्चेति मुनयो ह्यष्टादशगणाः स्मृता' इति ॥छ ॥ तत्रादौ जामदग्न्यो विविच्यते ॥ जामदग्न्यश्च वत्सश्च श्रीवत्सश्च्यवनाह्वयः ॥ आप्नवानौर्वसावर्णिर्जीवन्तो देवरातकः ॥ वीतशायनजाबाली वैरोहित्यो वटाह्वयः ॥ मण्डुः प्राचीनयोग्यः स्यादार्ष्णिषेणः तनूपगः ॥ एतानि भार्गवाख्यानि दश सप्तोत्तराणि च ॥ जामदग्निगणे त्वस्मिन्न विवाहः परस्परम् ॥१॥ वीतहव्यः ॥ वीतहव्यो यस्क-मौन-मौक-वाधूलसंज्ञकाः ॥ सावेतसः षडेतानि भार्गवाख्यान्वयो गणाः ॥ वीतहव्यस्य चान्योन्यं न कार्यं पाणिपीडनम् ॥२॥ वैन्यः ॥ वैन्यः पार्थश्च गोत्रे द्वे भवतो भार्गवाह्वये ॥ एष वैन्यगणः तत्र चान्योन्यं न करग्रहः ॥३॥ गृत्समदः ॥ उभे गोत्रे गृत्समदे शौनको भार्गवाह्वयः ॥ गणे गृत्समदे तस्मिन् नान्योन्यं पाणिपीडनम् ॥४॥ वाध्र्यश्वः ॥ द्वे वाध्र्यश्वे मित्रयुग्ये गोत्रे भार्गवनामके ॥ वाध्र्यश्वस्य गणे तस्मिन् अनुद्वाहः परस्परम् ॥ जामदग्न्यादयः पञ्च गणा भृगुगणाः

स्मृताः ॥ तथाऽप्येषां गणानां तु विवाहः स्यात्परस्परम् ॥५॥ गौतमः ॥ गौतमोऽयास्यदौचथ्यः कक्षीवानौशिजस्तथा ॥ बृहदुक्थ्यो वामदेवो गोत्राणीमानि सप्त च ॥ गौतमस्य गणस्तस्मिन् विवाहो न परस्परम् ॥६॥ भरद्वाजः ॥ भरद्वाजः कुशःश्चाग्निवैश्य ऊर्जो यमः कतः ॥ शैशिरौक्षीरश्रृङ्गाश्च वन्दनश्च बृहस्पतिः ॥ सर्वंस्तम्बः कपिर्मातवचसो गार्ग्यसैन्यकौ ॥ भरद्वाजगणाः सप्तदश गोत्रमिति स्मृतम् ॥ तस्मिन्परस्परं कार्यं न कन्यापाणिपीडनम् ॥७॥ कपिः ॥ कपिश्च महदक्षीय ऋक्षीयस्त्रीणि केवलम् ॥ अयं कपिगणोऽन्योन्यं तस्मिन्न हि करग्रहः ॥८॥ हारितः ॥ हारितो यौवनाश्वश्च मान्धाता कुत्सनामकः ॥ पिङ्गलः शङ्खदर्भौ च भौमश्च गवनामकः ॥ अम्बरीषो दशैतानि हारितस्य गणः स्मृतः ॥ तस्मिन्परस्परं पाणिग्रहणं न हि शोभनम् ॥९॥ मौद्गल्यः ॥ मौद्गल्यनाक्ष्र्यं भार्म्याश्वाः त्रीणि गौत्राण्यमूनि हि ॥ मौद्गल्यस्य गणस्तत्र न मिथः पाणिपीडनम् ॥१०॥ कण्वः ॥ कण्वोऽजमीढ इत्येते गोत्रे कण्वगणौ स्मृतौ ॥ तस्मिन्परस्परं पाणिग्रहणं न शुभं मतम् ॥११॥ विरूपः ॥ विरूपोऽष्टादंष्ट्रिनामा पृषदश्वश्च मौद्गलः ॥ चत्वारीमानि गोत्राणि विरूपस्य गणः स्मृतः ॥ परस्परं विवाहोऽस्मिन्न विधेय इतीरितः ॥१२॥ विष्णुवृद्धः ॥ विष्णुवृद्धः पौरुकुत्स्यः त्रसदस्युः कतस्तथा ॥ भद्रणोऽभद्रणाख्यश्च बादरायणसंज्ञकः ॥ सत्यकाम्श्च मन्युः च गविः सात्यकितालुकी ॥ निचुन्दश्चेति गोत्राणि त्रयोदशमितानि च ॥ विष्णुवृद्धगणस्तस्मिन्न विवाहः परस्परम् ॥ गौतमादिगणा ह्यष्टौ ये तथाऽङ्गिरसोगणाः ॥ तथाऽप्येषां गणानां तु विवाहः स्यात्परस्परम् ॥१३॥ अत्रिः ॥ तदेतद्गोत्रनवकं मित्रश्चाप्यर्चनानसः ॥ श्यावाश्वो वामरन्धश्च गविष्ठिरधनञ्जयौ ॥ सुमङ्गलोऽतिथिर्बीजवापश्चात्रिगणो ह्ययम् ॥ आत्रेयाख्ये विवाहोऽस्मिन्न विधेयो मिथःशुभम् ॥१४॥ विश्वामित्रः ॥ विश्वामित्रो देवरातो मनुस्तन्तुश्च दौलकिः ॥ वालकिश्च कितोलूकौ याज्ञवल्क्यश्च नारदः ॥ बृहदग्निः कालबवौ शबली बहुलोहितौ ॥ शालङ्कायनसावर्णी कामकायनपूरणौ ॥ शालावतोऽग्निदेवश्च दमनः कौशिकोऽष्टकः ॥ आद्योमधुश्छन्दसश्च देवश्रवधनञ्जयौ ॥ शुङ्गः कतः शैशिरश्च वारिधापोऽघमर्षणः ॥ सूनुः पनश्च धूम्राख्यो जठरस्त्वेकहव्यकः ॥ अष्टत्रिंशच्च गोत्राणि विश्वामित्रगणः स्मृतः ॥ एतस्मिन्नपि चान्योन्यं न कुर्यात्पाणिपीडनम् ॥१५॥ वसिष्ठः ॥ वसष्ठि इन्द्रप्रमद आभरद्वसुसङ्कती। कौण्डिन्यः पूतिमाषश्च गौरवीतः पराशरः ॥ मैत्रावरुणि शक्ती च उपमन्युर्गणः स्मृतः ॥ एकादश वसिष्ठस्य गोत्राण्यस्मिन्न दोर्ग्रहः ॥१६॥ कश्यपः ॥ कश्यपो रेभरैभौ च शाण्डिल्यो देवलोऽसितः ॥ सङ्कतिः पूतिमाषश्च वत्सरो नैध्रुवो दश ॥ गोत्राणि कश्यपगणस्तत्रान्योन्यं न दोर्ग्रहः ॥१७॥ अगस्त्यः ॥ त्रीण्यगस्त्यो बीतवाहो दार्ढ्यच्युत इति स्मृतः ॥ एषोऽगस्त्यगणस्तस्मिन्न विवाहः परस्परम् ॥१८॥ जमदग्निगणस्यापि विश्वामित्रगणस्य च ॥ न देवरातगोत्रेण विवाहः स्यात्परस्परम् ॥ भरद्वाजगणस्यापि विश्वामित्रगणस्य च ॥ कत-शैशिर-शुङ्गैश्च नान्योन्यं पाणिपीडनम् ॥ काश्यपेयगणस्यापि वासिष्ठस्य गणस्य च ॥ सङ्कृतीपूतिमाषाभ्यां विवाहो न परस्परम् ॥ आत्रेयस्य गणस्यापि विश्वामित्रगणस्य च ॥ धनञ्जयाख्यगोत्रेण नान्योन्यं पाणिपीडनम् ॥ भरद्वाजगणस्यापि तथा कपिगणस्य च ॥ विवाहो न विधेयः स्यादन्योन्यं च कदाचन ॥ मौद्गल्यस्य गणस्यापि विरूपस्य गणस्य च ॥ परस्परं न कुर्वीत पाणिपीडनसत्क्रियाम् ॥ इति ॥छ ॥ अनष्टयःशाकुलेयः स्वतयो राजचारकः। सैराश्च नीरजाश्चैव बाहवस्तदनन्तरम् ॥ तथा शामुनयः प्रोक्ताः सैरन्ध्रा राजसेवकाः ॥ खापुलिङ्गाश्च लौगाक्षीस्तथैव शरदम्बकाः ॥ एते त्रयोदशप्रातर्वसिष्ठा निशि कश्यपाः ॥ गायत्रीयोनिसम्बन्धावङ्गीकृत्य प्रवर्तकाः ॥ अहर्वसिष्ठतां रात्रौ कश्यपत्वमिति स्वयम् ॥ तेषां गोत्रद्वयं मुक्त्वा वासिष्ठं काश्यपं तथा ॥ सर्वत्रापि विवाहः स्यादिति वेदविदो विदुः ॥ यत्तु स्मृत्यन्तरे 'सावित्रीं यस्य यो दद्यात्तत्कन्यां न विवाहयेत् ॥ तद्गोत्रे तत्कुले वाऽपि विवाहो नैव दोषकृत् ॥ द्व्यामुष्यायणकाः सर्वे दत्तकक्रीतकादयः ॥ गोत्रद्वयेऽप्यनुद्वाहः शुङ्ग-शैशिरयोस्तथा' इति ॥ विष्णुभट्टास्तु 'एकगोत्रप्रवराणां न विवाहः, भिन्नगोत्रप्रवराणामप्येकगणान्तर्गतानामविवाहः, यथा शुनकगृत्समदानां ॥ भृग्वङ्गिरसां गणेषु भिन्नगोत्रप्रवरेषु अपि अर्धाधिकऋष्यनुवृत्तावविवाहः ॥ गर्गाणां त्र्यार्षेयप्रवरपक्षे अर्धाधिकनामधेयैर्गर्गादिऋष्यनुवृत्यभावेऽपि पञ्चार्षेयप्रवरपक्षे तथादर्शनात् भारद्वाजैरविवाहः ॥ अन्येषां तु सकलप्रवरपक्षेष्वेकऋष्यनुवृत्तावपि न विवाहः ॥ शाण्डिलानां चतुर्थप्रवरमात्रे कश्यपानुवृत्यभावेऽपि त्रिष्वपि प्रवरान्तरेषु दर्शनात्कश्यपैरविवाहः ॥ लोगाक्षीणां द्व्यामुष्यायणत्वात्कश्यपैर्वसिष्ठैरविवाहः' इति ॥ छ ॥ अत्र प्रवराणां स्वरूपं महाप्रवरपाठादवगन्तव्यम ॥ तत्रेमे गोत्रप्रवरा एकद्वित्रिपञ्चार्षेयाः ऊनपञ्चाशदेव अनन्तानामपि

गोत्राणां गणश उच्यते, तावतैव अपेक्षितसिद्धेः ।। यथा ।। वत्सानां भार्गवच्यावनाप्नुवानौर्वजामदग्न्या इति ।। बिदानां भार्गवच्यावनाप्नवानौर्वबैदा इति ।। आर्ष्टिषेणानां भार्गवच्यावनाप्नवानानूपार्ष्टिषेणा इति ।। एते समानप्रवराः, अर्धाधिकऋष्यतुल्यत्वात् ।। यास्कानां भार्गववैतहव्यसावेदसा इति ।। मित्रयुवानां भार्गववाध्र्यश्वदैवोदासा इति ।। वैन्यानां भार्गववैन्यपार्था इति ।। एते भार्गवानुवृत्तावपि न मिथः समानप्रवराः, भृगुं मुक्त्वेति वचनात् ।। शुनकानां शुनकेति गार्त्समदेति वा ।। अत्र गोत्रप्रवरभेदेऽपि गणैकत्वेन पक्षे प्रवरैक्यत्वादविवाहः ।। एते सप्त भृगवः ।।छ ।। अथाङ्गिरसः ।। गौतम-भारद्वाज-शुद्धाश्चेति त्रिविधाः ।। तेषु गौतमास्तावत्, आयास्यानां आङ्गिरसास्यगौतमा इति ।। शारद्वतानां आङ्गिरसशारद्वतगौतमा इति ।। कौमण्डानां आङ्गिरसौचथ्यकाक्षीवतगौतमकौमण्डा इति ।। दीर्घतमानां आङ्गिरसौचथ्यकाक्षीवतगौतमदैर्घ्यतमा इति ।। कारेणुवालानां आङ्गिरसगौतमकारेणुवाला इति ।। वामदेवानां आङ्गिरसगौतमवामदेवा इति ।। औशनसानां आङ्गिरसौशनसगौतमा इति ।। एते सप्त गौतमाङ्गिरसाः समानप्रवराः ।। अर्धाधिकऋषितुल्यत्वात् ।। भारद्वाजानां आङ्गिरसबार्हस्पत्यभारद्वाजा इति ।। रौक्षायणानां आङ्गिरसबार्हस्पत्यभारद्वाजभालन्दनमातवचसा इति ।। गर्गाणां आङ्गिरसबार्हस्पत्यभारद्वाजगार्ग्य शैन्येति ।। आङ्गिरसशैन्यगार्ग्या इति वा ।। त्रय एते भारद्वाजाङ्गिरसाः समानप्रवराः, अर्धाधिकऋषितुल्यवात् ।। गर्गाणां त्र्योर्षेयपक्षे अर्धाधिकऋषितुल्यत्वाभावेऽपि पक्षे समानप्रवरत्वात् भारद्वाजैरविवाहः ।।छ ।। विष्णुवृद्धानां आङ्गिरसपौरुकुत्स्यत्रासदस्या इति ।। कण्वानां आङ्गिरसाजमीढकण्वा इति ।। हारीतानां आङ्गिरसाम्बरीषयौवनाश्वा इति ।। सङ्कतीनां आङ्गिरससाङ्कत्यगौरिवीता इति ।। [illegible]णां आ[illegible]वैरूप राथीतरा इति ।। मुद्गलानां आङ्गिरसभार्म्यश्वमौद्गल्या इति ।। कपीनां आङ्गिरस आमहस्म औरुदया इति ।। एते सप्त शुद्धाङ्गिरसाभिन्नप्रवराः, परस्परं विवाह्याः आङ्गिरसानुवृत्तावप्याङ्गिरसं मुक्त्वेति वचनात् ।।छ ।। अथात्रयः ।। अत्रीणां आत्रेयार्चनानस श्यावाश्वा इति ।। गविष्ठिराणां आत्रेयार्चनानसगाविष्ठिरा इति ।। बाभृतानां आत्रेयार्चनानसबाभृतका इति ।। मुद्गलानां आत्रेयार्चनानसपौर्वातिथा इति ।। ते चत्वारः समानप्रवराः, तुल्यर्षित्वात् न विवाह्याः ।।छ ।। अथ कश्यपाः ।। कश्यपानां-काश्यपावत्सारनैध्रुवा इति ।। रैभाणां काश्यपावत्साररैभ्या इति ।। शण्डिलानां काश्यपावत्सारशाण्डिल्या इति ।। देवलानां काश्यपावत्सारदेवला इति वा, काश्यपावत्सारवासिता इति वा, शण्डिलासितदेवला इति वा देवलासित शाण्डिल्य इति वा ।। इति चतुर्धा प्रवराः ।। एते चत्वारः समानप्रवराः ।। लोगाक्षीणां काश्यपावत्सारवासिष्ठा इति ।। काश्यपानुवृत्तौ शण्डिलानां चतुर्थप्रवरे काश्यपानुवृत्यभावेऽपि त्रिभिः प्रवरै समानप्रवरत्वात् काश्यपैरविवाहः ।। लोगाक्षीणां वसिष्ठपदानुवृत्या द्व्यामुष्याणत्वाद्वसिष्ठैरप्यविवाहः ।।छ ।। अथ वासिष्ठाः ।। वसिष्ठानां वासिष्ठा इति ।। अस्योत्तरैःसहैकगोत्रत्वान्नगणना ।। अत एकोनपंचाशत्संख्याया उपपत्तिः ।। कुण्डिनानां वासिष्ठमैत्रावरुणकौण्डिन्या इति ।। उपमन्यूनां वासिष्ठेन्द्रप्रमदभरद्वाजा इति ।। पराशराणां वासिष्ठसांकृतयपाराशर्या इति ।। एते वसिष्ठाश्चत्वारः समानप्रवराः ।।छ ।। अथ विश्वामित्राः ।। विश्वामित्राणां विश्वामित्रदेवरातऔदला इति ।। लोहितानां वैश्वामित्रअष्टकलोहिता इति ।। कामकायनानां वैश्वामित्रदैवश्रवसदैवतरसा इति ।। रौक्षकाणां वैश्वामित्ररौक्षकरैणवा इति ।। अजानां वैश्वामित्रमाधुच्छन्दसअजा इति ।। धनञ्जयाना वैश्वामित्रमाधुच्छन्दसधनञ्जया इति ।। कतानां वैश्वामित्रकात्योत्कीला इति ।। इन्द्रकौशिकानां वैश्वामित्रेन्द्रकौशिका इति ।। अघमर्षणानां वैश्वामित्राधमर्षणकौशिका इति ।। पौराणानां वैश्वामित्रपौराणां पारिधापय इति ।। एतेषां कुशिकानां दशानां वैश्वामित्रपदानुवृत्या मिथः समानप्रवरत्वम् ।। अतो न विवाहः ।।छ ।। अथागस्त्याः ।। अगस्तीनां आगस्त्यदार्ढ्च्युतदार्भवाहा इति ।। सम्भवानां आगस्त्यदार्ढ्च्युतसाम्भवाहा इति ।। सोमवाहानां अगस्त्यदार्ढ्च्युतसोमवाहा इति ।। यज्ञवाहानां आगस्त्यदार्ढ्च्युतयज्ञवाहा इति ।। अगस्तीनां चतुर्णां सर्वेषां अगस्त्यपदानुवृत्या मिथ. समानप्रवरत्वान्न विवाह ।।छ ।। अत्र सङ्ग्रहः ‘एकोऽपि च मुनिर्येषां प्रवरेषु प्रवर्तते ।।

सगोत्रास्ते मिथो ज्ञेया भृगुमङ्गिरसं विना ।। शुनकाः स्युर्गृत्समदैः कश्यपैः शण्डिला अपि ।। भारद्वाजस्तथा गर्गः पक्षे तुल्यर्षिदर्शनात् ।। यद्वा ।। च्यवनो गौतमोऽगस्त्यो भरद्वाजोऽत्रिकश्यपौ ।। विश्वामित्रो वसिष्ठश्च यद्गणप्रवरेष्वमी ।। वर्तन्ते न सगोत्राः स्युः कश्यपैः शण्डिलास्तथा ।। शुनकाः स्युर्गृत्समदैर्भरद्वाजैश्च गर्गकाः' इति ।। अत्र प्रमादात् विवाहोत्तरं समानगोत्रप्रवरज्ञानोत्तरकाले मातृवदेनां बिभृयात्, गर्भश्चेदुत्पन्नः स तु न दुष्यति, काश्यपो भवति गोत्रतः, ज्ञात्वा गच्छन् गुरुतल्पगः, तत उत्पन्नश्चाण्डालो भवति ।। श्राद्धमपि समानगोत्रप्रवराय न देयमित्याहुः इति ।। प्रवरनिर्णयः ।।छ ।।

अथ कन्याया गर्भाधानादिप्रयोगः ।। यदि कन्याया गर्भाधानादिसंस्काराः स्वस्वकाले न कृताश्चेदिदानीं कालातिपत्तिप्रायश्चित्तपूर्वकं समानतन्त्रेण कृत्वा विवाहं कुर्यात् ।। अथ कर्ता सपत्नीकः कन्यया सह मङ्गलस्नानं कृत्वा, प्रातरौपासनान्तं नित्यकर्म कृत्वा, वैश्वदेवं हुत्वा, शुचौ देशे सपत्नीकः प्राङ्मुख उपविश्य आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम कुमार्या अतिक्रान्तानुसारेण गर्भाधानादि वा जातकर्मादि वा चौलान्तकर्म कर्तुं मम शरीरशुद्ध्यर्थं स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणानि करिष्ये' इति सङ्कल्प्य तत्कृत्वा, 'अनेन स्नानपवनमन्त्राचमनमन्त्रप्रोक्षणकर्मणा श्रीपरमेश्वरः प्रीयताम्' इत्युक्त्वा, 'अथ नान्दीसमाराधनाङ्गतया विहितं स्वस्तिपुण्याहवाचनाख्यं कर्म करिष्ये ।। तदादौ निर्विघ्नतासिद्ध्यर्थं गणपति पूजां करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, 'नान्दीसमाराधनकर्मणः पुण्याहं भवन्तो ब्रुवन्तु' एवं स्वस्ति ऋद्धिमिति वाचयित्वा, 'नान्दीमुखाः पितरः प्रीयन्ताम्' इति वाचयित्वा, प्रोक्षणान्तं कृत्वा, पुनराचमनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य 'मम कुमार्या अद्य करिष्यमाणगर्भाधानपुंसवनसीमन्तविष्णुबलि-जातकर्मनामकरणउपनिष्क्रमणान्नप्राशनकर्णवेधनचौलाङ्गतया विहितं नवग्रहशान्त्यङ्गतया विहितं रात्रौ करिष्यमाणविवाहाङ्गतया विहितं नान्दीसमाराधनं हिरण्येन करिष्ये' इति सङ्कल्प्य तत्कृत्वा, 'अनेन नान्दीसमाराधनकर्मणा श्रीपरमेश्वरः प्रीयताम्' इत्युक्त्वा, अथ कर्माङ्गपुण्याहं कुर्यात् ।। देशकालौ सङ्कीर्त्य 'मम कुमार्या गर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्म कर्तुं नवग्रहशान्तिहोमं कर्तुं पुनस्सन्धानं कर्तुं शान्त्यर्थं पुष्ट्यर्थं तुष्ट्यर्थमित्यादि स्वस्तिपुण्याहवाचनाख्यं कर्म करिष्ये' इति संकल्प्य, 'वेधाः प्रजापतिर्धाता सविता मत्यः सविता सविता सविता श्रोत्रं केशिनः प्रीयन्ताम' इत्यक्तवा, 'आदित्यादिनवग्रहाः प्रीयन्तां,

अग्न्यादयश्च प्रीयन्ताम्' इति पुण्याहं वाचयित्वा, अथ प्रधानसङ्कल्पं कुर्यात् ॥ आचमनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य 'मम कुमार्या बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुः श्रीबलिवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपुंसवन-सीमन्तविष्णुबलिजातकर्मनामकरणोपनिष्क्रमणान्नप्राशनकर्णवेधनचौलकर्माणि मुख्यकालातिपत्तिप्रायश्चित्तपूर्वकं समानतन्त्रेण करिष्ये' इति संकल्प्य, स्थण्डिलोल्लेखनाद्यग्निप्रतिष्ठान्त कृत्वा, सङ्कल्प्य 'गर्भाधानपुंसवन .... चौलकर्मणां मुख्यकालातिपत्तिप्रायश्चित्तहोमं करिष्ये, प्रायश्चित्तहोमः कर्म अपूर्वं तन्त्रं चित्तिर्नामाग्निः चित्तादयो देवता आज्यं हविः आज्यस्य मान्त्रवर्णिक्यो देवता' इत्यादि सङ्कल्प्यान्वाधानादिकं कृत्वा, आज्यस्थालीं स्रुवं चैव स्रुचं च समिधं तथा ॥ कूर्चं प्रोक्षणीपात्रं इत्यासाद्य आज्यसंस्कारान्तं कृत्वा, मिन्दाहुतीहुत्वा, चित्तञ्चेत्यादि त्रयोदश, अग्निर्भूतानामित्यादि रुद्राहुत्यन्तं, ततम्मआपो यत्पाकत्रा मनस्वतीमिन्दाहुतीव्याहृतीश्च हुत्वा, उत्तरपरिषेकान्तं कृत्वा समाप्य, अथ गर्भाधानादि विष्णुबल्यन्तान् मन्त्रान् यथाक्रमं पठित्वा, जातकर्मादिकं तूष्णीं कुर्यात् ॥ प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम कुमार्या बीजगर्भसमुद्भवैनोनिबर्हणपुरस्सरमायुःश्रीबलवृद्धिद्वारा श्रीपरमेश्वरप्रीत्यर्थं गर्भाधानपुंसवन ... चौलकर्माणि तन्त्रेण करिष्ये' इति सङ्कल्प्य, तूष्णीं कुमारीं दृष्ट्वा, तूष्णीमेव षड्वारं स्नापयित्वा, अथ पिता स्वाङ्के कुमारीं संस्थाप्य, तूष्णीं नक्षत्रनान्मा मूर्ध्न्यभिजिघ्रति, यथा - आश्विने, आपभरणे, कार्त्तिके, रौहिणे, मार्गशीर्षे, आर्द्रके, पुनर्वसो, तिष्ये, आश्लेषे, माघे, फाल्गुने, उत्तराफाल्गुने, हस्ते, चैत्रे, स्वाते, विशाखे, अनूराधे, ज्येष्ठे, मूलके, पूर्वाषाढे, उत्तराषाढे, श्रावणे, श्रविष्ठे, शातभिषजे, प्रोष्ठपदे, उत्तराप्रोष्ठपदे, रैवते ॥ अथास्याः कुमार्याः कर्णयोरायुष्मती भवेति जपित्वा, दधिमधुघृतमिति समुदायुत्य हिरण्येन गृहीत्वा, तूष्णीं दशवारं कुमारीं प्राशयित्वा, मुखं प्रक्षाल्य, अतिशिष्टं गोष्ठे निनीय, कुमारीं मातुरङ्क उपवेश्य, स्तनन्धयन्तीं स्मृत्वा, अस्या उच्छिरस्युदकुम्भं तूष्णीं निधाय,

तूष्णीमप्सु विसर्जयेत् ।। अस्य जातकर्मणः सुमुहूर्तमस्त्विवति भवन्तो ब्रुवन्तु, सुमुहूर्तमस्तु इतीतरे ब्रूयुः ।। इति जातकर्मतन्त्रम् ।।छ ।। अथ नामकरणम् ।। कर्ता देशकालौ सङ्कीर्त्य 'मम कुमार्या बीजगर्भ ... श्रीपरमेश्वरप्रीत्यर्थं व्यवहारसिद्ध्यर्थं नामाभिधास्यावहे' इति मातापितरौ सङ्कल्प्य, अथ स्वर्णादिपात्रे सिततण्डुलोपरि हिरण्यशकलेन वा हरिद्राखण्डेन वा पिता नामचतुष्टयं लिखेत् ।। यथा कुलदेवतानाम्ना गणपतिभक्ता ।। मासनाम्ना 'लक्ष्मीः श्रीः कमला भद्रा सीता सत्या च रुक्मिणी ।। माधवी चैत्रिका भूमिस्तुलसी जाह्नवी तथा' इति द्वादशनामानि मार्गशीर्षादिक्रमेण गणयित्वा लिखेत् ।। नक्षत्रनाम्ना आश्विना, आपभराणा, कार्तिका, रौहिणा, मार्गशीर्षा, आर्द्रका, पुनर्वसुः तिष्या, आश्लेषां, माघा, पूर्वाफाल्गुना, उत्तराफाल्गुना, हस्ता, चित्रा, स्वातिः, विशाखा, अनूराधा, ज्येष्ठा, मूलका, पूर्वाषाढा, उत्तराषाढा, श्रावणा, श्रविष्ठा, शातभिपजा, पूर्वाप्रोष्ठपदा, उत्तराप्रोष्ठपदा, रैवता, इति ।। अथ व्यावहारिकनाम्ना रेवती, शारदा इति ।। इति नामचतुष्टयं विलिख्य 'कुलदेवतानाम-मासनाम-नाक्षत्रनाम-व्यावहारिकनामदेवताभ्यो नमः' इति षोडशोपचारान् कृत्वा, दक्षिणां पुष्पाञ्जलिं च दत्वा, दक्षिणाफलताम्बूलादिभिर्ब्राह्मणान् सन्तोष्य, अस्य नामकरणकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, शिवं कर्मास्तु प्रजापतिः प्रीयतामिति भवन्तो ब्रुवन्तु इति वाचयित्वा, कुलदेवतानात्म्ना गणपतिभक्तायै स्वस्ति भवन्तो ब्रुवन्तु ।। गणपतिभक्तायै स्वस्तीति प्रतिवचनम् ।। मासनाम्ना लक्ष्म्यै स्वस्ति भवन्तो ब्रुवन्तु ।। एवं श्रियै, कमलायै, भद्रायै, सीतायै, सत्यायै, रुक्मिण्यै, माधव्यै, चैत्रिकायै, भूम्यै, तुलस्यै, जाह्नव्यै स्वस्ति ब्रुवन्तु ।। नक्षत्रनाम्ना आश्विनायै, आपभरण्यै, कार्तिकायै, रोहिणायै, मार्गशीर्षायै, आर्द्रकायै, पुनर्वसवे, तिष्यायै, आश्लेषायै, माघायै, पूर्वाफाल्गुनायै, उत्तराफाल्गुनायै, हस्तायै, चैत्रायै, स्वातये, विशाखायै, अनूराधायै, ज्येष्ठायै, मूलकायै, पूर्वाषाढायै, उत्तराषाढायै, श्रावणायै, श्रविष्ठायै, शातभिषजायै, पूर्वाप्रोष्ठपदायै, उत्तराप्रोष्ठपदायै, रैवतायै स्वस्ति भवन्तो ब्रुवन्तु ।। व्यावहारिकनाम्ना रैवत्यै, शारदायै स्वस्ति भवन्तो ब्रुवन्तु ।। शारदायै स्वस्तीति इतरे ।। अथ ब्राह्मणाननुज्ञाप्य मातापितरौ कुमार्या दक्षिणकर्णे नामचतुष्टयमुपांशु त्रिस्त्रिः

कथयेताम् ॥ कुलदेवतानाम्ना त्वं गणपतिभक्तासि ॥ मासनाम्ना त्वं लक्ष्म्यसि, श्रीरसि, कमलासि, भद्राऽसि, रुक्मिण्यसि, माधव्यसि, भूमिरसि, तुलस्यसि, जाह्नव्यसि ॥ नक्षत्रनाम्ना आश्विनाऽसि, आपभरणाऽसि, पुनर्वसुरसि, स्वातिरसि, रैवताऽसि इति त्रिः ॥ व्यावहारिकनाम्ना त्वं रेवत्यसि शारदाऽसि इति त्रिः ॥ अथ ब्राह्मणहस्ते अक्षतान्दत्वा, स्वयमुत्थाय अञ्जलिं कृत्वा, कुलदेवतानाम्ना इयं गणपतिभक्ता भवतः सर्वान् ब्राह्मणानभिवादयते, आयुष्मती भवतु गणपतिभक्ता इति प्रतिवचनम् ॥ मासनाम्ना लक्ष्मीर्भवतः सर्वान् ब्राह्मणानभिवादयते, आयुष्मती भवतु लक्ष्मीः इति प्रतिवचनम् ॥ एवं श्रीरित्यादि ॥ नक्षत्रनाम्ना आश्विना भवतः ॥ एवं आपभरणा भवतः सर्वान् ब्राह्मणानित्यादि ॥ व्यावहारिकनाम्ना रेवती भवतः०, शारदा भवतः सर्वान् ब्राह्मणान् अभिवादयते, आयुष्मती भवतु शारदा इति प्रतिवचनम् ॥ नामकरणमुहूर्तः सुमुहूर्तमस्त्विवति भवन्तो ब्रुवन्तु ॥ सुमुहूर्तमस्त्विवति प्रतिवचनम् ॥ नामकरणकर्मणा श्रीपरमेश्वरः प्रीयताम् ॥ इति नामकरणतन्त्रम् ॥छ ॥ अथोपनिष्क्रमणम् ॥ मङ्गलघोषपुरस्सरं गृहाद्बहिर्देवताऽऽयतनानि स्वस्तिपन्थामनुचरेमेति गत्वा देवता अभ्यर्च्य चन्द्रार्कदिगीशान् सम्पूज्य प्रार्थयेत् ॥ 'चन्द्रार्कयोर्दिमीशानां दिशां च गगनस्य च ॥ निक्षेपार्थमहं दद्मि ते मे रक्षन्तु सर्वदा ॥ अप्रमत्तां प्रमत्तां वा दिवारात्रमथापि वा ॥ रक्षन्तु सततं सर्वे देवाः शक्रपुरोगमाः' इति प्रार्थ्य नमस्कृत्य स्वगृहमानयति ॥ इत्युपनिष्कमणतन्त्रम् ॥छ ॥ अथान्नप्राशनम् ॥ दधिमधुघृतजलैरन्नं सम्मिश्य, हिरण्येन गृहीत्वा तूष्णीं षड्वारं प्राशयित्वा, मुखं प्रक्षाल्य तूष्णीमाचमय्य, अस्यान्नप्राशनकर्मणः सुमुहूर्तमस्त्विवति भवन्तो ब्रुवन्तु, सुमुहूर्तमस्त्विवति प्रतिवचनम् ॥ इत्यन्नप्राशनतन्त्रम् ॥छ ॥ अथ कर्णवेधनम् ॥ ब्राह्मणान् सम्पूज्य अस्य कर्णवेधनकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा श्रोत्रं प्रीयतामित्युक्त्वा, सूच्या वा कण्टकेन वा तूष्णीं दक्षिणवामकर्णौ क्रमेण विध्वा अप उपस्पृश्य लोहितसूत्रेण शणसूत्रेण वा बध्वा, परेद्युस्तूष्णीं विसृज्य अप

उपस्पृश्य, अस्य कर्णवेधनकर्मणः सुमुहूर्तमस्त्विवति वाचयित्वा, ईश्वरार्पणं कुर्यात् ॥ इति कर्णवेधनतन्त्रम् ॥छ ॥ अथ चौलम् ॥ केचित् स्त्रीणां चौलं न कुर्वन्ति लौकिकविरोधात्, अतः तत्प्रत्याम्नायत्वेन कृच्छ्रं कुर्यात् ॥ गां हिरण्य वा दद्यात् ॥ इति  चौलतन्त्रम् ॥छ ॥ एभिर्गर्भाधानपुंसवनसीमन्तविष्णुबलिजातकर्म नामकरणोपनिष्क्रमणान्नप्राशन-कर्णवेधनचौलकर्मभिः श्रीपरमेश्वरः प्रीयताम् ॥ इति वेङ्कटेशीये स्त्रीसंस्कारप्रयोगः ॥छ ॥

अथ यस्मिन् दिने नान्दीसमाराधनं कुर्यात्तस्यामेव रात्रावुदकशान्तिप्रतिसरबन्धौ च कृत्वा, विवाहाङ्गपुण्याहं कुर्यात् ॥ यथा कर्ता 'मम कुमार्या विवाहाङ्गभूतं स्वस्तिपुण्याहवाचनं करिष्ये' इति सङ्कल्प्य पुण्याहं वाचयेत् ॥ वरस्तु 'मम विवाहाङ्गभूतं स्वस्तिपुण्याहवाचनं करिष्ये' इति सङ्कल्पयेत् ॥ पुण्याहं वाचयित्वा, उभयत्र 'अग्निः प्रीयताम्' इति विशेषः ॥ प्रोक्षणान्तं कृत्वा, वरः 'ॐ सा मा तनूराविश शिवो मा तनूराविश' इत्यहते मङ्गले वाससी परिधाय आचम्य प्राणानायम्य विवाहसङ्कल्पं कुर्यात् ॥ देशकालौ सङ्कीर्त्य 'मम गृहस्थाश्रमसिद्ध्यर्थं स्त्रियमुद्वहे' इति सङ्कल्प्य ॥ प्रयोगसारे 'भुक्त्वाऽऽदाय प्रतोदकम् ॥ स्थितस्य कुर्यू रक्षार्थं माङ्गल्यं तस्य बान्धवाः' इत्युक्तत्वात् हस्ते प्रतोदकं गृहीत्वा नालिकेरफलं च गृहीत्वा स्त्रीभिः कृतनीराजनो बन्धुभिः सह यथाविभवमश्वं यानं वा समारुह्य वधूगृहं गत्वा तत्र द्वारदेशे प्राङ्मुखः स्थित्वा स्त्रीभिः कृतनीराजनस्ताभिः सह गृहं प्रविश्य तत्र मण्डपे भद्रासने प्राङ्मुख उपविशेत् ॥ अथ कन्यामलङ्कृत्य अहते वाससी परिधाप्य गन्धमाल्यादिभिरलङ्कृत्य भोजनं कारयित्वा हस्ते बाणं फलं च दत्वा देवताग्रे प्राङ्मुखीमुपवेशयेत् ॥  इति वरागमनम् ॥छ ॥

अथ सभापूजा ॥ कर्ता गन्धाक्षतपुष्पव्यजनगुडोदकनानाविधफलताम्बूलानि च स्वपुरतः संस्थाप्य सभापूजां कुर्यात् ॥ यथा ॥ ब्राह्मणेभ्यो महद्भ्यश्च वेदविद्भ्यो विशेषतः ॥ पुराणशास्त्रविद्भ्यश्च सर्वेभ्यो वै नमो नमः ॥१॥ पुत्रोत्सवे मौञ्जिबन्धे कन्यायाः प्रथमार्तवे ॥ विवाहे यज्ञसमये बिन्नहं पञ्चसु स्मृतम् ॥२॥ पूर्वं सभां नमस्कृत्य पश्चादासनपूर्वकम् ॥ कल्पोच्चारं कालीनं सभां स्तोतुं समारभेत् ॥३॥ [illegible] गुरूणां महतामपि ॥ उपचारस्तु कर्तव्यो मङ्गलो

मङ्गलायनैः ॥४॥ अर्चयेदृत्विगाचार्यनृपविद्वत्सुहृद्वरान् ॥ आगतान् स्वगृहं गेही यथाविभवमादरात् ॥५॥ गाम्भीर्यं जलधौ स्थिरत्वमचले तेजोऽधिकं भास्करे शौर्यं शान्तनवे नयः सुरगुरौ त्यागस्तु सूर्यात्मजे ॥ एकैको गुण एव तेषु निहितो युष्मासु सर्वे गुणास्तिष्ठन्त्येव धरामरान् हरिपरान् कः स्तोतुमीशः क्षितौ ॥६॥ भवन्तः सर्वज्ञाः सकलभुवने रूढयशसो वयं तावद्बालाः सरसवचने नैव निपुणाः ॥ तथापीयं वाणी विशतु भवतां कर्णकुहरे किशोरस्यालापः खलु भवति पित्रोरतिमुदे ॥७॥ महत्यागदयायुक्तां सत्यभामासमन्विताम् ॥ सुदर्शनधरां वन्दे सभां विष्णोरिवाकृतिम् ॥८॥ विद्वन्नदीव्रातसहस्रपूर्णं तथा सहस्रप्रभुरत्नपूर्णम् ॥ वेदान्तवाक्यार्थतरङ्गलोलं सभासमुद्रं प्रणमामि मूर्ध्ना ॥९॥ सभामण्डलमित्येके सभारत्नं तु केचन ॥ सभासमुद्रमितरे सदसो लक्षणत्रयम् ॥१०॥ आशीःपूर्वकमित्येके नमःपूर्वं तु केचन ॥ बिन्नहं वेदपूर्वं स्यादिति सर्वैर्विनिश्चितम् ॥११॥ अथ वरे स्वबन्धुभिः सह विवाहार्थं कन्यागृहमागते सति तदा यजमानस्येतिकर्तव्यतामाह आशीःपूर्वकमिति ॥ (आशीर्वादपुरस्सरं विज्ञापना कर्तव्येति केषाञ्चिन्मतम्। नमःपूर्वं तु केचन॥ नमस्कारपूर्वकं विज्ञापना कर्तव्येत्यन्येषां मतम् ॥ बिन्नहं वेदपूर्वं स्यात् ॥ श्रुतिमुखेन विज्ञापना कर्तव्येति सर्वमतम् ॥) तत्रादावाशीःपूर्वकं कथमित्याकाङ्क्षायामाह ॥ स्वस्तीति प्रतिभाषितो मुनिवरैः संस्तूयमानः सुरैः पार्श्वे पद्मजपद्मनाभपुरुहूताद्यैर्जयेत्यर्चितः ॥ अग्रे चाप्सरसां गणैरहरहर्नृत्यद्भिराह्लादितः सन्तुष्टो गिरिजाविवाहसमये स्यात्सम्पदे नो मृडः ॥१२॥ (अस्यार्थः ॥ गिरिजाविवाहसमये गिरिजायाः=पार्वत्याः पाणिग्रहणसमये एतादृशो मृडः=सुखकरः परमेश्वरः सम्पदे=ऐश्वर्याय स्यात्=भूयादित्याशीः ॥ कथम्भूत इत्याकाङ्क्षायां मुनिवरैर्मुनिश्रेष्ठैः स्वस्तीति=मङ्गलमिति प्रतिभाषितः=प्रत्युक्तः ॥ पुनः कथम्भूतः सुरैः=देवैः संस्तूयमानः=कृतस्तोत्रः ॥ पुनः कथम्भूतः पार्श्वे पद्मजपद्मनाभपुरुहूताद्यैर्जयेत्यर्चितः=पद्मजो=ब्रह्मा पद्मनाभो=नारायणः पुरुहूत=इन्द्रस्ते आदिर्येषां ते=पुरुहूताद्याः

समस्तदेवता इत्यर्थः, तैर्जयजयेत्यर्चितः ॥ पुनः कथम्भूतः अग्रे चाप्सरसां गणैरहरहर्नृत्यद्भिराह्लादितः=अहरहः=प्रतिदिनं अप्सरसां गणैः=अप्सरस्त्रीसमूहैः नृत्यद्भिर्नानाविधनर्तन कुर्वद्भिः, आह्लादितः=सन्तोषितः ॥ पुनः कथम्भूतः सन्तुष्टः=अत्यन्तसन्तोषयुक्तः ॥ एवं सूक्तिस्तोत्रजयशब्दनर्तनादिभिरतिसन्तोषितः परमेश्वरः नः सम्पदे भूयादित्याशीःपूर्विका विज्ञापना) ॥ नमस्कारपूर्विका विज्ञापना कथमित्याकाङ्क्षायामाह ॥ सर्वाशापरिपूरणक्षमकरं सर्वोपकारोदयं सन्मार्गाभिरतं समस्ततमसःप्रध्वसि सत्यास्पदम् ॥ ब्रह्मावासमशेषवेदनिलयं विद्याधराराधितं प्रख्यातं भुवि भानवीयमिव वो वन्दे सभामंण्डलं ॥ (अस्यार्थः ॥ एतादृश सूर्यसम्बन्धिमण्डलमिव स्थितं वः सभामण्डलं वन्दे नमस्करोमि ॥ कीदृशमित्याकाङ्क्षायामाह सर्वाशापरिपूरणक्षमकरम् ॥ सर्वेषां मनोरथानां परिपूरणे=पूर्तिकरणे क्षमाः=समर्थाः करा=हस्ता यस्य तत् ॥ अन्यत्र सर्वासां दिशां परिपूर्णे=परिव्याप्तौ समर्था कराः=किरणा यस्य तत् सर्वाशापरिपूरणक्षमकरम् ॥ पुनः कथम्भूतं सर्वोपकारोदयम् ॥ सर्वोपकाराय=समस्तवर्णाश्रमाणां विहिताऽविहितविवेकाऽविवेकोपदेशरूपोपकाराः=उदयाः सभारूपेण वर्तनं यस्य तत् ॥ अन्यत्र सर्वेषां प्राणिनां स्वस्वव्यवहारसिद्धये प्रादुर्भावो यस्य तत् सर्वोपकारोदयम् ॥ पुनः कथम्भूतं सन्मार्गाभिरतम् ॥ सन्मार्गे=श्रुतिस्मृतिपुराणोक्तमार्गे अभिरतं=आसक्तम् ॥ अन्यत्र सत्यमार्गे=श्रेष्ठमार्गे परिवर्तमानम् ॥ पुनः कथम्भूतं समस्ततमसः प्रध्वंसि ॥ समस्ततमसां=समस्ताज्ञानानां प्रध्वसि=ज्ञानोपदेशेन् निवारकम् ॥ अन्यत्र समस्तान्धकाराणां स्वकिरणप्रसरणेन दूरीकुर्वाणम् ॥ पुनः कीदृशं सत्यास्पदम् ॥ सत्यस्य-यथार्थस्य आस्पदमावासस्थानम् ॥ पुनः कीदृशं ब्रह्मावासम् ॥ ब्राह्मणानामावासस्थानम् ॥ अन्यत्र तपसामावासस्थानम् ॥ पुनः कीदृशं अशेषवेदनिलयम् ॥ समस्तवेदानां निलयमावासस्थानम् ॥ अन्यत्र त्रिवेदमूर्तित्वात् वेदानामावासस्थानम् ॥ पुनः कीदृशं विद्याधराराधितम् ॥ चतुःषष्टिकलाविद्याप्रवीणैः सेवितम् ॥ अन्यत्र विद्याधरैर्देवयोनिविशेषैः सेवितम् ॥ पुनः कीदृशं प्रख्यातं-प्रसिद्धम् ॥ एतादृशं वः सभामण्डलं नमस्करोमि ॥ इति नमःपूर्विका विज्ञापना) ॥ वेदपर्व त ॥ ॐ नमः सदसे ॥ नमः सदसस्पतये ॥

नमः सखीनां पुरोगाणां चक्षुषे ॥ नमो दिवे ॥ नमः पृथिव्यै ॥ सप्रथ सभांमे गोपाय ॥ ये च सभ्याः सभासदः ॥ तनिन्द्रियावतःकुरु ॥ सर्वमायुरुपासतां ॥ अहेबुध्निय मन्त्रम्मे गोपाय ॥ यमृषयस्त्रयीविदा विदुः ॥ ऋचः सामानि यजूꣳषि ॥ सा हि श्रीरमृतासताम् ॥ इति वेदपूर्वकं नमस्कृत्य षोडशोपचारैः पूजयेत् ॥ षोडशोपचाराः क इत्याकाङ्क्षायामाह ॥ अभ्युत्थानं स्वासनं स्वागतोक्तिः पाद्यं चार्घ्यं मधुपर्काचमौ च ॥ स्नानं वासो भूषणं गन्धमाल्ये धूपो दीपः सोपहारः प्रणामः ॥१४॥ (अस्यार्थः - अभ्युत्थानं, स्वासनं, स्वागतं, पाद्यं, अर्घ्यं, मधुपर्कः, आचमनं, स्नानं, वासः, भूषणं, गन्धः, माल्यं, धूपं, दीपः, नैवेद्यं, नमस्कारः, इत्येते षोडशोपचाराः) ॥ एतान् कर्तुमशक्तश्चेत् षडुपचारान् वा कुर्यात् ॥ षडुपचाराः क इत्याकाङ्क्षायामाह ॥ अभ्युत्थानमथासिकावितरणं भूयो वचः स्वागतं पाद्यं व्याजनमक्षतं क्रमवशादर्घ्यं निरर्घ्यक्रियम् ॥ केचित्प्राहुरिमान् षडुत्तमतमानत्रोपचारान् परे ब्रूयुर्वन्दनमेकमर्हणविधिं यन्मादृशां तत्क्षमम् ॥१५॥ (अस्यार्थः - अभ्युत्थानं, स्वासनं, स्वागतोक्तिः, पाद्यं, व्यजनं, मधुपर्कः, इत्येते षडुपचाराः सर्वोपचारेषु प्रवराः) ॥ अत्राप्यशक्तश्चेत् पूजां वन्दनमेकमेव ब्रूयुः ॥ तत् कथम् ॥ नास्ति सत्यात्परो धर्मः सन्तुष्टिर्नात्मजात्परा ॥ नान्नदानात्परं दानं वन्दनान्नोपचारकम् ॥१६॥ अस्यार्थः - सत्यादधिको धर्मो नास्ति, पुत्रोत्सवादपरः सन्तोषो नास्ति, अन्नदानादधिकदानं न विद्यते, वन्दनादधिक उपचारो न विद्यते ॥ तस्माद्वन्दनोपचारेणैव सर्वेऽप्युपचाराः कृताः सन्त्विति मदीया विज्ञापना ॥ इत्युक्त्वा नमस्कुर्यात् ॥ अथ सर्वेषां महाजनानां गन्धाः पान्तु ॥ सुमाङ्गल्यं चास्त्विति प्रतिवचनम् ॥ अक्षताः पान्तु ॥ आयुष्यमस्त्विति प्रतिवचनम् ॥ पुष्पाणि पान्तु ॥ सुश्रियमस्तु ॥ ताम्बूलानि पान्तु ॥ ऐश्वर्यमस्तु ॥ दक्षिणाः पान्तु ॥ बहुदेयं चास्तु ॥ इत्युक्त्वा गुडोदकफलताम्बूलानि च दद्यात् ॥ इति

सभापूजा ॥छ ॥

अथ विवाहः ॥ तत्र गुरुः 'गुरुणाऽनुमतः स्नात्वा समावर्त्य यथाविधि ॥ उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्' ॥ कश्यपोऽपि 'दाराधीनाः क्रियाः सर्वा ब्राह्मणानां विशेषतः ॥ दारान् सर्वप्रयत्नेन विशुद्धानुद्वहेदतः' इति ॥ श्रुतिरपि 'जायमानो वै ब्राह्मणस्त्रिर्ऋणवा जायते ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ॥ एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारीवासी इति' ॥ 'देवतानां नमस्कारः पितृणां चोदकक्रियाः ॥ दारतः सम्प्रवर्तन्ते दाराः स्वर्गस्य सङ्क्रमाः' इति ॥ 'देवैश्चापि मनुष्यैश्च तिर्यग्योनिभिरेव च ॥ गृहस्थः सेव्यते यस्मात्तस्माच्छ्रेष्ठो गृहाश्रमी' इति मनुस्मृतेश्च ॥ 'यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र विद्यते इति याज्ञवल्क्यस्मरणाच्च विवाहस्यावश्यकत्वमभिहितम् ॥ अथ कन्यालक्षणम् ॥ स्थूलाऽतिस्थूलगण्डा समुदितवदना पद्मपत्रायताक्षी बिम्बोष्ठी तुङ्गनासा मदगजगमना दक्षिणावर्तनाभिः ॥ स्निग्धाङ्गी चारुकेशी मृदुपृथुजघना कोकिलालापवाणी तस्या भर्ता क्षितीशो भवति शुभफला चाष्टपुत्रा सुनारी ॥ अथ वर्ज्या आह ॥ पिङ्गाक्षी कूपगण्डा खरपरुषरवा स्थूलजङ्घोर्ध्वकेशी रक्ताक्षी रक्तकेशा प्रमृदितवदना कृष्णताल्वोष्ठजिह्वा ॥ शुक्लाङ्गी सङ्गतभ्रू विषमकुचयुगा वामना चातिदीर्घा सर्वाङ्गीया सलोमा शुभकररहिता सर्वदा वर्जनीयाः' इति ॥ अथ वरलक्षणम् ॥ तत्र गृह्यम् 'बुद्धिमते कन्यां प्रयच्छेत्' इति वासिष्ठे 'अत्यासन्नेऽतिदूरे च अत्याढ्ये चातिदुर्बले ॥ वृत्तिहीने च मूर्खे च षट्सु कन्या न दीयते' ॥ यमोऽपि 'कुलं च शीलं च वपुर्वयश्च वित्तं च विद्यां च सनाथतां च ॥ एतान् गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम्' ॥ तथा 'दूरस्थानामवेद्यानां मोक्षमार्गानुसारिणाम् ॥ शूराणां च निवृत्तानां न देया कन्यका बुधैः' इति ॥ पराशरोऽपि 'कन्यां यच्छति वृद्धाय नीचाय धनलिप्सया ॥ कुरूपाय कुशीलाय स प्रेतो जायते नरः' इति ॥ अथ परिवित्तिविषये 'आज्ञया न दोषः' इत्याह सुमन्तुः ॥ 'ज्येष्ठो भ्राता यदा तिष्ठेदाधानं नैव चाश्रयेत् ॥ अनुज्ञातस्तु कुर्वीत शङ्खस्य वचनं यथा' ॥ अनुज्ञयाऽपि आधानमेव न विवाहः ॥ तदाह हारीतः 'सोदराणां तु सर्वेषां परिवेत्ता कथं भवेत् ॥ दारैस्तु परिविद्यन्ते नाग्निहोत्रेण नेज्यया' इति ॥ क्वचिद्दोषापवादमाह कार्ष्णाजिनः 'उन्मत्तः पतितः क्लीबः कुष्ठी काणो निरिन्द्रियः ॥ राजयक्ष्माऽऽमयग्रस्तो नार्हत्यस्य प्रतीक्षितुम्' इति ॥ कन्यकाया अपि 'विवाह नाधिकारी स्याज्ज्येष्ठकन्या स्थिता यदा ॥ तदनुज्ञां विना वाऽपि कनिष्ठामुद्वहेत्तदा ॥ कालप्रतीक्षणे तस्या रजोदृष्टिर्न तिष्ठति' इति ॥ कात्यायनोऽपि 'देशान्तरस्थक्लीबैकवृषणांश्च सहोदरान् ॥ वेश्यानिष्ठांश्च पतिताञ्छूद्रतुल्यातिरोगिणः ॥ जडमूकान्धबधिरकुब्जवामनकुष्ठकान् ॥ अतिवृद्धानभार्यांश्च कृषिसक्तान्नृपस्य च ॥ धनवृद्धिप्रसक्तांश्च कामतोऽकारिणस्तथा ॥ कुटिलोन्मत्तरोगांश्च परिविन्दन्नदुष्यति' इति ॥ देशान्तरस्थे ज्येष्ठे भ्रातरि विशेषमाह गर्गः 'प्रोषितं तु प्रतीक्षेत वर्षत्रयमपि त्वरन् ॥ प्रोषितं यद्यश्रृण्वानस्त्र्यब्दादन्ते समाचरेत् ॥ आगते तु पुनस्तस्मिन् पादमाशुद्धये चरेत्' इति ॥ पादं=पादकृच्छ्रम् ॥छ ॥ अथ विवाहमध्ये नान्दीश्राद्धानन्तरं दीर्घकालाशौचे प्राप्ते सूतकाभावो वक्ष्यते ॥ तत्र याज्ञवल्क्यः 'ऋत्विजां दीक्षितानां च याज्ञियं कर्म कुर्वताम् ॥ सत्री व्रती ब्रह्मचारी दातृब्रह्मविदां तथा ॥ दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे ॥ आपद्यपि च कष्टायां सद्यः शौचं विधीयते' इति ॥ पैठीनसिरपि 'विवाहोत्सवयज्ञेषु यात्रायां तीर्थकर्मणि ॥ न तत्र सूतकं कुर्यात्कर्म यज्ञादि कारयेत्' । षट्त्रिंशन्मते 'विवाहोत्सवयज्ञेषु त्वन्तरा मृतसूतके ॥ परैरन्नं प्रदातव्यं भोक्तव्यं च द्विजोत्तमैः' इति ॥ विष्णुः अपि 'व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे ॥ प्रारब्धे सूतकं न स्यादनारब्धे तु सूतकम्' इति ॥ प्रारम्भः ॥ पूर्वमेवोक्तः ॥ 'प्रारम्भाभावेऽपि कन्याया अधार्यत्वे सन्निहितलग्नान्तराभावेऽपि विवाहः कार्यः' इति विष्णुराह ॥ 'अनारब्धविशुद्ध्यर्थं कूष्माण्डैर्जुहुयाद्घृतम् ॥ गां दद्यात्पञ्चगव्याशी ततः शुद्ध्यति सूतकी' ॥ इति विवाहादावाशौचापवादः ॥छ ॥ अथ वधूगृहगमनम् ॥ शौनकः 'पुण्ये मुहूर्ते कुर्वीत विवाहं विधिवद्द्विजः ॥ तत्राभ्युदयिकं श्राद्धं कुर्यात्स्वस्ति च वाचयेत् ॥ अपरेद्युः कृतस्नानो धृतधौताम्बरो वरः ॥ भूषितो गन्धमाल्याद्यैः शकुनेन समन्वितः ॥ ब्राह्मणान् भोजयित्वान्ते कृतपुण्याहवाचनः ॥ कृतकौतुकबन्धश्च मित्रबान्धवसंयुतः ॥ यानं यथार्हमारुह्य यातव्यं च वधूगृहम् ॥ तस्य द्वाराद्बहिः स्थित्वा प्राङ्मुखोऽभिमुखागतैः ॥ गृहीतपूर्णकुम्भादिपाणिभिर्वनिताजनैः ॥

कृताभ्युद्गमनो गेहं प्रविशेत्सह बन्धुभिः' इति ।।छ।। अथ रात्रावपि कन्यादानाधिकारो दानखण्डे 'रात्रौ दानं प्रशंसन्ति विना त्वभयदक्षिणाम्।। विद्यां कन्यां द्विजश्रेष्ठो दीपमन्नं प्रतिश्रयम्'।। देवलोऽपि 'राहुदर्शनसङ्क्रान्तिविवाहोत्पत्तिवृद्धिषु।। स्नानदानादिकं कार्यं निशि काम्यव्रतेषु च' इति।। इति रात्रौ दानविधिः।।छ।। अथ वाग्दानविधिः।। कश्यपसंहितायाम् 'अथातः सम्प्रवक्ष्यामि कन्यावरणमुत्तमम्।। सम्यक्तस्याः प्रदानं च पुत्रपौत्रप्रवर्धनम्।। पञ्चाङ्गशुद्धदिवसे चन्द्रताराबलान्विते।। विवाहोक्तेषु ऋक्षेषु कुजवर्जितवासरे।। मासाद्यदिवसं रिक्तामष्टमीं नवमीं तिथिम्।। त्यक्तवाऽन्यदिवसे गन्धस्रक्ताम्बूलैः फलान्वितैः।। सहवृद्धद्विजगणो वरयेत्कन्यकां सतीम्।। तथेति तत्पिता कन्यावरणोक्तर्क्षवासरे।। कुर्यात्प्रदानं कन्यायाः स्वस्तिवाचनपूर्वकम्।। कुलशीलगुणोपेतसुरूपाय वराय च।। ततस्तस्मै कन्यकां च शुक्लाम्बरविभूषणाम्।। दद्यान्मङ्गलघोषैश्च विप्राशीर्वचनैः सह।। आदौ कृत्वा शचीपूजां पश्चात्सर्वं समाचरेत्।। सुवर्णवर्णां कञ्जाक्षीं दिव्यस्रग्गन्धशोभिताम्।। सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम्।। अनर्घमणिमालाभिर्भासयन्तीं दिगन्तरम्।। विलासिनीसहस्रौघैः सेव्यमानामहर्निशम्।। ध्यात्वा प्रणम्य तां देवीं कुमारीं प्रार्थयेदिति।। देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि।। वैवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे'।। नक्षत्राणि ज्योतिर्निबन्धे 'विश्वर्क्षपूर्वात्रययुग्मस्वाती त[illegible] विवाहभैर्वा।। प्रत्यङ्मुखः सन्वरयेत्कुमारीं फलादिभिः प्राग्वदनां सुवेषाम्' इति।। गृह्यपरिशिष्टे 'कन्यां वरयमाणानामेषधर्मो विधीयते।। प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः।। तिष्ठेत्पूर्वमुखो दाता वरः प्रत्यङ्मुखो भवेत्।। मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम्' इति।।छ।।

अथ मुख्यब्राह्मविवाहाङ्गभूतवाग्दानविधिरुच्यते।। अथ कन्यायाचनार्थं सुहृदो ब्राह्मणांश्चत्वारोऽष्टौ वा समसङ्ख्याकान् वरान् प्रहिणोति।। वरो वदति 'ॐ प्रसुग्मन्ता धियसानस्य सक्षणि वरेभिर्वराँ अभिषुप्रसीदत।। अस्माकमिन्द्र उभयं जुजोषति यत्सौम्यस्यान्धसो बुबोधति'।। अथ गच्छतस्तान् पश्यन् जपति 'ॐ अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्ति नो वरेयम्।। समर्यमा सम्भगो नो निनीयात्सञ्जास्पत्यँ सुयममस्तु देवाः' इति।। अथ ते ब्राह्मणाः सुवासिनीभिः सह मङ्गलवस्त्राभरणफलताम्बूलादीनि गृहीत्वा, वधूगृहं गत्वा, भद्रासनादिषूपविश्य, अथ सालङ्कारां कन्यां प्राङ्मुखीमुपवेश्य, कन्याहस्ते फलताम्बूलादीनि दत्वा, अथ वरपितरं प्राङ्मुखं प्रत्यङ्मुखं वा उपवेश्य, गणपतिस्मरणपूर्वकं कन्यां वृणीरन्।। यथा।। 'श्रीमद्यजुःशाखाबोधायनसूत्रान्वितकाश्यपावत्सारनैध्रुवेतिर्त्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवाय केशवशर्मणः प्रपौत्राय नारायणशर्मणः पौत्राय माधवशर्मणः पुत्राय शिवशर्मणे

वराय, श्रीमद्यजुःशाखाबौधायनसूत्रान्वितविश्वामित्राघमर्षणकौशिकेतित्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रोद्भवां अमुकशर्मणः प्रपौत्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं गौरीनाम्नीं कन्यां भार्यात्वाय वृणीमहे' इति ब्राह्मणैः त्रिरुक्ते, अथ दाता वृद्धबन्ध्वाद्यनुमतिं कृत्वा 'वृणीध्वम्' इति त्रिर्वदेत्, 'प्रदास्यामि' इत्युच्चैस्त्रिः ब्रूयात्॥ ततो ब्राह्मणाः 'ॐ सुमङ्गलीरियं वधूरिमा॒ समेत पश्यत॥ सौभाग्यमस्यै दत्वा याथास्तं विपरेतन॥ ॐ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः॥ ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्॥ ॐ अहेबुध्निय मन्त्रं मे गोपाय॥ यमृषयस्त्रयीविदा विदुः॥ ऋचस्सामानि यजूꣳषि॥ सा हि श्रीरमृता सताम्' इत्याशीर्वदेत्॥ अथ दाता कन्यावामतः प्राङ्मुख उपविश्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम कुमार्याः करिष्यमाणविवाहाङ्गभूतं वाग्दानमहं करिष्ये॥ तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजां करिष्ये' इति सङ्कल्प्य तत्कृत्वा, महीद्यौरिति वरुणपूजां च कृत्वा, गङ्गे च यमुने चेति कलशपूजां कृत्वा, अथ कन्यादाता वरपितरं प्राङ्मुखमुपवेश्य, स्वयं तत्पुरतः प्रत्यङ्मुख उपविश्य, तं गन्धपुष्पादिभिरलङ्कृत्य, हरिद्राखण्डपूगीफलनाळिकेरखण्डताम्बूलानि च गृहीत्वा गन्धादिभिरलङ्कृत्य, काश्यपावत्सारनैध्रुवेतित्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवाय अमुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्मणे वराय, विश्वामित्राघमर्षणकौशिकेतित्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रोद्भवां अमुकशर्मणः प्रपौत्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं अमुकनाम्नीं कन्यां ज्योतिर्विदादिष्टे सुमुहूर्ते दास्ये, वाचा सम्प्रददे 'अव्यङ्गेऽपतितेऽक्लीबे दशदोषविवर्जिते॥ इमां कन्यां प्रदास्यामि देवाग्निद्विजसन्निधौ' (कुलहीनता, शीलराहित्यं, वपुषोऽसौन्दर्यं, अतिवयस्कता, विद्याशून्यत्वं, दारिद्यं, पित्रादिपोषकहीनत्वं, अबान्धव्यं, रोगित्वं, दौर्लक्षण्यं इत्येते दशदोषाः सूत्रोक्ताः) इत्युक्त्वा, वरपितृवस्त्रप्रान्ते पूगीफलादीनि निक्षिप्य ग्रन्थिं कृत्वा गन्धाक्षतादिभिरभ्यर्च्य, अथ वरपिता पूर्ववत्पूगीफलादीनि गृहीत्वा 'काश्यपगोत्रयज्ञशर्मवरविषये भवन्तो निश्चिता भवन्तु' इति कन्यादातृवस्त्रप्रान्ते

निक्षिप्य ग्रन्थिं कृत्वा, पूर्ववदभ्यर्च्य ततो दाता 'वाचा दत्ता मया कन्या पुत्रार्थं स्वीकृता त्वया ।। कन्यावलोकनविधौ निश्चितस्त्वं सुखी भव' इति वरपितरं प्रतिवदेत् ।। अथ वरपिता 'वाचा दत्ता त्वया कन्या पुत्रार्थं स्वीकृता मया ।। वरावलोकनविधौ निश्चितस्त्वं सुखी भव' इति दातारं प्रतिवदेत् ।। भ्रात्रादौ स्वीकर्तरि भ्रात्रर्थं मित्रार्थमित्यादि ऊहः कार्यः ।। 'ॐ आयुराशास्ते ... नमो देवेभ्यः' इत्यन्तं अग्निरायुष्मानिति पञ्चमन्त्रांश्च पठित्वा, अथ दाता सिततण्डुलपुञ्जेषु कलशोपरि शचीमावाह्य, षोडशोपचारान् कृत्वा 'सुवर्णवर्णां कञ्जाक्षीं दिव्यस्रग्वस्त्रशोभिताम् ।। सर्वलक्षणसंयुक्तां सर्वाभरणभूषिताम् ।। अनर्घमणिमालाभिर्भासयन्तीं दिगन्तरम् ।। विलासिनीसहस्रौघैः सेव्यमानामहर्निशम् ।। ध्यात्वा प्रणम्य तां देवीं कुमारी प्रार्थयेदिति[१]' इति ध्यात्वा, षोडशोपचारान् कृत्वा, तां कन्यैवं प्रार्थयेत् 'देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ।। वैवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे' इति प्रार्थ्य, ब्राह्मणान् सम्पूज्य, आशिषो वाचयेत् ।। 'अनेन वाग्दानकर्मणा श्रीपरमेश्वरः प्रीयताम्' इतीश्वरार्पणं कुर्यात् ।। इति वाग्दानविधिः ।।छ ।।

अथ विवाहानुक्रमणिका 'मधुपर्को निरीक्षां च कन्यादानं तथैव च ।। अक्षतारोपणं कण्ठसूत्रबन्धः क्रमेण तु ।। पूगीफलादि वस्त्रान्ते पुरोधाग्रन्थिबन्धनम् ।। पाणिग्रहः सप्तपदी वेद्यामानयनं ततः ।। विप्राणामर्चनं पश्चादाशीर्वादस्त्वनन्तरम्' इति ।।छ ।। तत्रादौ मधुपर्कप्रयोगः ।। दधि, मधु, घृतमापः, पयो, वस्त्रयुगं, कुण्डलयुगं, गौः गोदोहनपात्रं, स्रगलङ्करणानि, कांस्यपात्रं, सापिधानं, पञ्चसप्तनवसङ्ख्यैर्वा दर्भैः कृतकूर्चत्रयं, इति सम्पाद्य वरशाखोक्तविधानेन मधुपर्कं कुर्यात् ।। तथा च गृह्यपरिशिष्टे 'वरस्य या भवेच्छाखा तच्छाखा गृह्यचोदितः ।। मधुपर्कः

[१] इति = वक्ष्यमाणेन ''देवेन्द्राणि'' इति श्लोकमन्त्रेण इत्यर्थः ।।

प्रदातव्यो ह्यन्यशाखेऽपि दातरि' इति ॥ कूर्चलक्षणमुक्तं सिङ्गाभट्टीये 'कूर्चं तु त्रिविधं प्रोक्तमुत्तमाधममध्यमम् ॥ नवभिः पञ्चभिर्दर्भैः सप्तभिर्ग्रन्थिसंयुतम्' इति ॥ मध्वाद्यलाभे दानखण्डे 'दध्यलाभे पयः कार्यं मध्वलाभे तथा गुडः ॥ घृतप्रतिनिधिं कुर्यात्पयो वा दधि वाऽनघ' इति ॥छ॥ अथ शुच्यागारमध्ये ह्युदीचीनाग्रमासनं निधाय, तत्राहतं वास उत्तरदशं बहुगुणमास्तीर्य, तत्र वरः प्राङ्मुख उपविशति। अथ कर्ता द्विराचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'विवाहार्थमागतायास्मै स्नातकाय वराय कन्यादानाङ्गभूतं मधुपर्कं करिष्ये' ॥ द्वितीयादिविवाहे तु 'विवाहार्थमागत वरं मधुपर्केणार्हयिष्ये' इति सङ्कल्प्य ॥ गृहस्येशानदिग्भागे प्रागग्रान् दर्भान् सꣳस्तीर्य तेष्वर्घ्यद्रव्याण्यासादयति ॥ दधि मधु घृतमापः पय इति पृथक्पृथक्पात्रेष्वासाद्य तत्रास्तृत दर्भेषु कांस्यपात्रं सापिधानं सकूर्चमित्यासाद्य ॥ अत्र विश्वपतिप्रयोगे प्रोक्षणी पात्रासादनमुक्तं तस्य मूलं चिन्त्यं, गृह्यसूत्रे विष्णुभट्टीयप्रयोगे अप्यनुक्तत्वात्, तूष्णीꣳसꣳस्कृता-भिरद्भिरित्युक्तत्वाच्च ॥ अत एवासंस्कृतदोषः सूत्रे उक्तः 'असंस्कृताभिरद्भिः प्रोक्षणीः प्रोक्षणीभिरप्रोक्षित पात्रैः होमश्चासम्मार्जितैः स्रुक्स्रुवैः नाधिश्रितपक्वैराज्येन प्रचरेद्यातुधाना असुरा रक्षाꣳसि पिशाचा यज्ञं ग्राहयेयुरिति' इति ॥ अथ पवित्रे कृत्वा, तूष्णीꣳसꣳस्कृताभिरद्भिरुत्तानानि पात्राणि कृत्वा, त्रिः प्रोक्ष्य, कूर्चे कांस्यपात्रं निधाय, तस्मिन्नुदगग्रे पवित्रे निधाय, मध्वानयति ॥ दधि पयो वा द्वितीयं सद्विवृत् ॥ घृतं तृतीयं सत्रिवृत् ॥ यद्द्वितीयं तच्चतुर्थ सचतुर्वृत् ॥ आपः पञ्चमी सपाङ्क्ताः ॥ यद्द्वितीयं तच्चतुर्थमित्यत्र दधि द्वितीयं चेत् पयश्चतुर्थं, पयो द्वितीयं चेत् दधि चतुर्थमिति ज्ञेयम् ॥ मधुदधिघृतपयोजलानीति क्रमेणानीय स्थूलकांस्यपात्रेणापिधाय, अथ कर्ता वराय आसनार्थं कूर्च इति कूर्चं ददाति ॥ ततो वर उदङ्मुखो द्विराचम्य सुकूर्च इति प्रतिगृह्य प्रदक्षिणं परिभ्राम्य उदगग्रमासने निधाय उपविशति 'ॐ राष्ट्रभृदस्याचार्यासन्दी मा त्वद्योषम्' इति ॥ अथ कर्ता उदपात्रं कूर्चाभ्यामधस्ताच्चोपरिष्टाच्च परिगृह्य पाद्या आप इति प्राह ता वरोऽभिमन्त्रयते 'ॐ (अत्र-''अस्मिन् राष्ट्रे ÷ इति ऋचं पठन्ति) ॥ आपः पादावनेजनीर्द्विषन्तं नाशयन्तु मे ॥

अस्मिन् कुले ब्रह्मवर्चस्यसानि' इति ॥ दक्षिणं पादं पूर्वं स्त्री प्रक्षालयति पुमानभिषिञ्चति ॥ अन्ये तु पुमान् प्रक्षालयति पत्न्यभिषिञ्चतीति प्राहुः ॥ नियमात्पत्नीयजमानौ जङ्घे धावयतः ॥ अथ वर आचम्य अवनेजकस्य पाणिद्वयं सम्मृशति 'ॐ मयि महो मयि भगो मयि भर्गो मयि यशः' इति, अप उपस्पृश्य, आत्मन उरोऽभिमृशति 'ॐ मयीन्द्रियं वीर्यम्' इति, अप उपस्पृश्य, ततो व्रीहिभिर्यवैर्वा मिश्रिता आपः पात्रान्तर आनीय कूर्चाभ्यां परिगृह्य 'अर्हणीया आप' इति प्राह, ता वरोऽभिमृश्य जपति 'ॐ आ म आगाद्वर्चसा यशसा सꣳसृज पयसा तेजसा च ॥ तं मा प्रिय प्रजानां कुर्वधिपतिं पशूनाम्' इति तदेकदेशमञ्जलावानीयमानमनुमन्त्रयते 'ॐ विराजोऽसि विराजो दोहमशीय मम पद्याय विराजा' इति ॥ तदतिशिष्टाः पराचीर्निनीयमाना अनुमन्त्रयते 'ॐ समुद्रं वः प्रहिणोम्यक्षिताः स्वां योनिमपिगच्छत ॥ अच्छिद्रः प्रजया भूयासं मा परासेचिमत्पयः' इति पुनरपि पात्रान्तरेऽप आनीय कूर्चाभ्यां परिगृह्य, उपस्तरणीया आप इति प्राह, ताः पिबति 'ॐ अमृतोपस्तरणमसि' इति सकृन्मन्त्रमुक्त्वा त्रिः पिबेत् ॥ मुखं त्रिः परिमृजेत्, द्विरित्येके, अथाचमनशेषं समाप्य, तथैव कूर्चाभ्यां मधुपर्कपात्रं परिगृह्य, मधुपर्क इति प्राह, ततो वरो मधुपर्कं प्रोक्तमनुमन्त्रयते 'ॐ त्रय्यै विद्यायै यशोऽसि यशसो यशोऽसि ब्रह्मणो दीप्तिरसि ॥ तं मा प्रियं प्रजानां कुर्वधिपतिं पशूनाम्' इति तमुभाभ्यां हस्ताभ्यां प्रतिगृण्हाति 'ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि' इति ॥ तस्मिन् पतितं यत्किञ्चित्तृणादिकं अङ्गुष्ठानामिकाभ्यां परिगृह्य, नैर्ऋत्यां दिशि निरस्यति 'ॐ नेष्टा विद्धं कृन्तामि

या ते घोरा तनूस्तया तमाविश योस्मान्द्वेष्टि यं च वयं द्विष्मः’ इति, अथाप उपस्पृश्य, सर्वाभिरङ्गुलीभिस्समुदायुत्य प्राश्नाति ‘ॐ यन्मधुनो मधव्यं परममन्नाद्यं वीर्यम्।। तेनाहं मधुनो मधव्येन परमेणान्नाद्येन वीर्येण परमोऽन्नादो मधव्योऽसानि’ इति सकृन्मन्त्रमुक्त्वा, त्रिः प्राश्य, ततः पात्रेण त्रिः पीत्वा, शेषमात्मनः प्रियाय दद्यात्।। अथ दाता पात्रान्तरे जलमादाय कूर्चाभ्यां परिगृह्य, अपिधानीया आप इति प्राह, ता आपो वरः पिबति ‘ॐ अमृतापिधानमसि’ इति सकृन्मन्त्रमुक्त्वा त्रिः पीत्वा, मुखं त्रिः परिमृज्य, आचमनशेषं समाप्य, अथ दाता गौः इति गां दर्शयति, वरस्तामनुमन्त्रयते ‘ॐ गौरस्यपहतपाप्माऽपपाप्मानं नुद।। माधवशर्मणो मम च नारायणशर्मणोमुष्य च’ इति स्वनाम यजमाननाम च षष्ठ्यन्तमुक्त्वा तां गामुत्सृजति ‘ॐ गौर्धेनुभव्या माता रुद्राणां दुहिता वसूनाꣳस्वसादित्यानाममृतस्य नाभिः।। प्रणुवोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट।। पिबतूदकं तृणान्यत्तु।। ओमुत्सृजत’ इति।। अथास्मै पिष्टान्नं लड्डुकादिसिद्धं कर्ता भूतं इति प्राह, वरः सुभूतं इत्युक्तवा तदभिमन्त्रयते ‘ॐ भूतꣳसा विराट् तन्माक्षायि तन्मेशीय तन्म ऊर्जन्धाः।। ॐ कल्पयत’ इति।। ततो वरः ‘चतुरो नानागोत्रान् ब्राह्मणान् भोजयत’ इति ब्रूयात्।। तेषु भुक्तवत्सु अन्नमस्मै वरायोपहरति तत्प्राश्नाति ‘ॐ विराडसि विराडन्नं विराड् विराजो मयि धेहि’ इति।। अथ वस्त्रयुगं कुण्डलयुगं गां स्रजमलङ्करणं य[1]ज्ञोपवीतद्वयं च वराय दद्यात्।। अत्र सुभूतमित्यादिमन्त्रान् वरो जपेत् न भोजनमिति विष्णुभट्टः।। सूत्रे ‘अन्नं भक्षणयोग्यद्रव्यम्’ इत्युक्तत्वेन भोजनमेव युक्तमिति प्रतिभाति।।छ।। अत्र मधुपर्के मांस[2]स्यावश्यकत्वमुक्तं सूत्रे ‘मेषमजं वाऽऽलभेताऽरण्येन वा मांसेन नत्वेवामांसोऽर्घः स्यादशक्तो पिष्टान्नꣳसꣳसिध्येत्’

---

१ ‘‘उपवीतं फलं पुष्पं वासांसि विविधानि च।। देय वराय वरणे कन्याभ्रात्रा द्विजेन वा’’ इति निर्णयसिन्धुवचनं शिष्टैरादृतमिति ज्ञेयम्।।

२ इदं विप्रभिन्नानामेवेति व्यवस्थापितं धर्मशास्त्रे।।

इति (अमांसः अर्घः मधुपर्को न स्यादेवेत्यर्थः) ॥ आश्वलायनोऽपि 'नामांसो मधुपर्को भवति' इति (मधुपर्काङ्गभोजनममांसं न भवतीत्यर्थः) ॥ गोरूपोपाकरणपक्षे तन्मांसेन भोजनम् ॥ उत्सर्जनपक्षे मांसान्तरेण ॥ कलौ गवालम्भस्य निषेधात् ॥छ ॥ अत्र सङ्ग्रहश्लोकः 'कूर्चपाद्यार्हणीयोपस्तरणीयाः क्रमेण तु ॥ मधुपर्कोऽपिधानीयं गौर्भूतं वस्त्रकुण्डले' ॥ इति मधुपर्कप्रयोग ॥छ ॥

अथ निरीक्षा ॥ 'आरुह्य राशिं सिततण्डुलानामन्योन्यवक्त्राभिविलोकनेन ॥ प्रत्यङ्मुखः पूर्वमुखीं सुलग्ने वरो वरेण्यां वरयेत्कुमारीम्' इति ॥ कारिकायाम् 'स्नातालङ्कृतकन्यायाः प्राङ्मुख्याः प्रत्यगाननः ॥ ईक्षेत तण्डुलस्थाया वरस्तस्य मुखं च सा ॥ मुहूर्ते शोबने सम्यक् क्षिपेतां मुखयोर्मिथः ॥ सजीरकगुडां कन्यां वृणुयादथ तां वरः' इति ॥ व्यासः 'वरगोत्रं समुच्चार्यं प्रपितामहपूर्वकम् ॥ नाम सङ्कीर्तयेद्विद्वान् कन्यायाश्चैवमेव हि' इति ॥ स्मृत्यर्थसारे 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् ॥ नाम सङ्कीर्तयेद्विद्वानन्यत्र पितृपूर्वकम्' इति ॥ नान्दीमुख इत्यथर्वणशाखाविषयम् । तेषां श्राद्धप्रकरणे तथैवोक्तत्वात् ॥

अथ शिष्टाचारः ॥ मण्डपमध्ये रङ्गवल्यादिभिर्भूमिमलङ्कृत्य, तन्मध्ये सिततण्डुलराशिद्वयं कृत्वा, पूर्वराशौ तण्डुलगुडजीरकहस्तः पश्चिमाभिमुखो वरस्तिष्ठति, पश्चिमराशौ गुडजीरकादिहस्ता कन्यातिष्ठति ॥ राश्योर्मध्ये कुङ्कुमादिभिः कृतस्वस्तिकलाञ्छनं वस्त्रमुत्तरदशं गृहीत्वा अथ कन्या ..ता पत्नीसहितोऽलङ्कृतां तण्डुलगुडजीरकहस्तां कन्यां 'ॐ देवीं वाचमजनयन्त देवाः ॥ तां विश्वरूपाः पशवो वदन्ति ॥ सा नो मन्द्रेषमूर्जं दुहाना ॥ धेनुर्वागस्मानुपसुष्टुतैतु ॥ ॐ ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ॥ ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम्' इति वरपुरतः पश्चिमराशौ प्राङ्मुखीमवस्थाप्य, अथ वरपित्रादय एवं ब्रूयुः 'श्रीमद्यजुःशाखाबोधायनसूत्रान्वित काश्यपावत्सारनैध्रुवेतित्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवाय शिवशर्मणः प्रपौत्राय विष्णुशर्मणः पौत्राय शङ्करशर्मणः पुत्राय यज्ञशर्मणे वराय श्रीधररूपाय धर्मप्रजासम्पत्यर्थमिमां कन्यां वृणीमहे' ॥ अथ कन्यापित्रादयः

'श्रीमद्यजुःशाखाबोधायनसूत्रान्वित विश्वामित्राघमर्षणकोशिकेतित्र्यार्षेयप्रवरान्वितविश्वामित्रगोत्रोद्भवां अमुकशर्मणः प्रपौत्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं गौरीनाम्नीं श्रीरूपां धर्मप्रजासम्पत्यर्थमिमां कन्यां वृणीध्वम्' ।। इति त्रिवारमुक्त्वा, अथ ज्योतिर्विद्भिर्मङ्गलपद्ये पठिते सुमुहूर्तमित्युक्ते यवनिकावस्त्रमुदगपसृत्य, अथ कन्या पुष्पमालिकां वरकण्ठे प्रतिमुञ्चति, वरोपि मालिकां वधूकण्ठे प्रतिमुञ्चति ।। एवमेव क्रमेण परस्परं तण्डुलगुडजीरकावकिरणं च कुर्याताम् ।। अथ वरः कन्यामीक्षते 'ॐ अभ्रातृघ्नीं वरुणापतिघ्नीं बृहस्पते ।। इन्द्रापुत्रघ्नीं लक्ष्म्यन्तामस्यै सवितुः सुव' इति ।। तया वध्वा ईक्ष्माणो जपति 'ॐ अघोरचक्षुरपतिघ्येधि शिवा पशुभ्यः सुमनाः सुवर्चाः ।। जीवसूर्देवकामा स्योना शन्नो भव द्विपदे शं चतुष्पदे' इति।। अथ वध्वा भ्रुवोर्मध्येऽङ्गुष्ठानामिकाभ्यां गृहीतदर्भेण सम्मार्ष्टि 'ॐ इदमहं या त्वयि पतिघ्न्यलक्ष्मीस्तान्निर्दिशामि' इति सम्मृज्य दर्भं प्रतीचीनिरस्य, अप उपस्पृश्य, ततः प्रत्यङ्मुखो वरः प्रदक्षिणमावृत्य, पश्चिमराशिस्थपीठे प्राङ्मुख उपविशति ।। एवमेव वधूः पूर्वराशिस्थ पीठेप्रत्यङ्मुख्युपविशति, पुरोधास्तु वरदक्षिणत उदङ्मुख उपविश्य, अथ दाता वधूवरयोर्दक्षिणतः सपत्नीक उदङ्मुख उपविश्य, द्विराचम्य, पत्न्यपि तूष्णीं द्विराचम्य, पवित्रपाणिर्जलशुद्धिं कुर्यात् ।।छ ।। भूमौ दर्भानास्तीर्य, तत्र जलपूर्णकलशं निधाय, व्रीहि यवानोप्य गन्धपुष्पादिभिरभ्यर्च्य, दूर्वापल्लवैराच्छाद्य आपोहिष्ठेत्यभिमन्त्र्य, गङ्गे च यमुने चेति तीर्थानावाह्य, नमस्कुर्यात् ।। इति जलशुद्धिः ।।छ ।।

अथ कन्यादानसङ्कल्पकारिका ।। पारिजाते संवर्तः 'तिलराशिः कृतो यावद्दिवाकरसमुच्छ्रितः ।। वर्षान्ते गृह्यते तस्य तिलराशेस्तु यावता ।। सङ्क्षयो लभते तावद्ब्रह्मलोकेऽस्य निश्चितः' ।। लैङ्गे 'यावन्ति सन्ति लोमानि कन्यायाश्च तनौ पुनः ।। तावद्वर्षसहस्राणि रुद्रलोके महीयते' ।। अत्रिः 'वालुकाभिः कृतो राशिर्यावत्सप्तर्षिमण्डलम् ।। गते वर्षसहस्रे तु लवमेवं विशीर्यते ।। क्षयस्य दृष्टिस्तस्यापि कन्यादानेन विद्यते ।। ज्योतिष्टोमातिरात्राणां शतं शतगुणात्कृतम् ।। प्राप्नोति कन्यकां दत्वा होममन्त्रैश्च संस्कृताम्' इति ।।छ ।।

अथ सङ्कल्पः ।। कर्ता आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'एवं गुणविशेषणविशिष्टायां शुभतिथौ

गङ्गावालुकाभिः कृतराशेर्वर्षसहस्रावसाने एकैकवालुकापकर्षक्रमेण सर्वराश्यपकर्षसम्मितकाले ब्रह्मलोके निवाससिद्ध्यर्थं, यवैश्चन्द्रमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकयवापकर्षक्रमेण सर्वराश्यपकर्षसम्मितकाले ब्रह्मलोके निवाससिद्ध्यर्थं, तिलैः सूर्यमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकतिलापकर्षक्रमेण सर्वराश्यपकर्षसम्मितकाले ब्रह्मलोके निवाससिद्ध्यर्थं, कृत्तगोलोमभिः सप्तर्षिमण्डलपर्यन्तं कृतराशेर्वर्षसहस्रावसाने एकैकलोमापकर्षक्रमेण सर्वराश्यपकर्षसम्मितकाले ब्रह्मलोके निवाससिद्ध्यर्थं, शतगव्यूतिगणगणानां त्रिगुणीकृताग्निष्टोमातिरात्राश्वमेधशतफलसिद्ध्यर्थं, आङ्गिरसबार्हस्पत्यभारद्वाजोजेतित्र्यार्षेयप्रवरान्वितभारद्वाज-गोत्रोत्पन्नस्य यज्ञशर्मणो मम कुलोत्पन्नानां सर्वेषामतीतपितॄणां मया सह दशपूर्वेषां दशापरेषां मद्वंश्यानां नरकादुत्तीर्य निरतिशयसानन्दब्रह्मलोकावाप्त्यादि कन्यादानकल्पोक्तफलावाप्तये अनेनैव वरेण अस्यां कन्यायामुत्पादयिष्यमाण-सन्तत्या द्वादशाऽवरान् द्वादशपरान् पुरुषान् पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये ब्राह्मविवाहविधिना यथासम्भवं सालङ्कृतकन्यादानमहं करिष्ये' इति दर्भाक्षतजलहस्तः सङ्कल्प्य 'तदङ्गत्वेन वधूवरपूजां करिष्ये' इति सङ्कल्प्य, गणपतिं संपूज्य अथ दाता पयसा घृतेनाऽद्भिरिति प्रत्येकं तयोः पादौ प्रक्षालयति ॥ 'ॐ अस्मिन्राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः ॥ दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं दधामि ॥ सव्यं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं वर्धयामि ॥ पूर्वमन्यमपरमन्यं पादाववनेनिजे ॥ देवा राष्ट्रस्य गुप्त्या अभयस्यावरुध्यै ॥ आपः पादावनेजनीद्विषन्तं निर्दहन्तु मे' इति तयोः पादौ प्रक्षाल्य, अप आचमय्य, गन्धमाल्यादिकं सर्वं 'श्रीलक्ष्मीनारायणस्वरूपाय नमः' इति दत्वा, तैजसपात्रे गव्यक्षीरं घृतं च निक्षिप्य, प्रक्षालिततण्डुलान् पात्रान्तरे निधाय, अथ वरः प्रक्षालितपाणिः प्रक्षालितवध्वञ्जलौ

तैजसपात्रस्थं साज्यक्षीरं स्वहस्तद्वयमध्यमानामिकाभ्यां द्विरुपस्तीर्य, द्विवारं तण्डुलानोप्य द्विरभिघारयति, अथ दाता वराञ्जलिमप्येवमेव पूरयति, अथ तण्डुलपूर्णकन्याञ्जलौ सुवर्णं निधाय, तदञ्जलिं वराञ्जल्युपरि निधाय, पूर्वमर्चितकलशमिडादेवहूरित्यादाय तिष्ठन्वोपविश्य वा स्वदक्षिणस्थितभार्याहस्ते प्रदाय 'कन्यां कनकसम्पन्नां सर्वाभरणभूषिताम् ।। दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ।। विश्वम्भराः सर्वभूताः साक्षिणः सर्वदेवताः ।। इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ।। श्रीरूपैषा मया दत्ता तुभ्यं श्रीधररूपिणे ।। ॐ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रे ।। भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरति दीर्घमायुः' इत्युक्त्वा, तदञ्जल्योरधः कांस्यपात्रं निधाय, तदञ्जलौ भार्याहस्तस्थकलशमादाय, तेन जलेन धारामनवच्छिन्नां क्षिपन् वदेत्, यथा कांस्यपात्रे जलं पतेत् 'ॐ पुण्याहं दीर्घमायुरस्तु, शिवा आपः सन्तु, सौमनस्यमस्तु, अक्षतं चारिष्टं चास्तु, सहिरण्यं कन्या तारयतु, स्वस्तिदक्षिणाः पान्तु, बहुदेयं चास्तु, पुण्यं वर्धतां, शान्तिरस्तु, पुष्टिरस्तु, तुष्टिरस्तु, वृद्धिरस्तु, अविघ्नमस्तु, आयुष्यमस्तु, आरोग्यमस्तु, शिवं कर्मास्तु, कर्मसिद्धिरस्तु, इष्टसम्पदस्तु, पुण्याहं भवन्तो ब्रुवन्तु, स्वस्ति भवन्तो ब्रुवन्तु, ऋद्धिं भवन्तो ब्रुवन्तु, श्रीरस्त्विति भवन्तो ब्रुवन्तु ।। आङ्गिरसबार्हस्पत्यभारद्वाजेतित्र्यार्षेयप्रवरान्वित-भारद्वाजगोत्रोत्पन्नः केशवशर्माऽहं मम कुलोत्पन्नानां सर्वेषामतीतपितॄणां निरतिशयब्रह्मलोकावाप्त्यादिकन्यादान-कल्पोक्तफलावाप्तये, अनेनैव वरेण अस्यां कन्यायां उत्पादयिष्यमाणसन्तत्या द्वादशावरान् द्वादशपरान्पुरुषान् पवित्रीकर्तुमात्मनश्च श्रीलक्ष्मीनारायणप्रीतये, काश्यपावत्सारनैध्रुवेतित्र्यार्षेयप्रवरान्वितकाश्यपगोत्रोद्भवाय अमुकशर्मणः प्रपौत्राय अमुकशर्मणः पौत्राय अमुकशर्मणः पुत्राय अमुकशर्मणे वराय, आङ्गिरसबार्हस्पत्यभारद्वाजे-तित्र्यार्षेयपेवरान्वितभारद्वाजगोत्रोद्भवां अमुकशर्मणः प्रपौत्रीं अमुकशर्मणः पौत्रीं अमुकशर्मणः पुत्रीं अमुकनाम्नीं कन्यां वरार्थिनीं श्रीरूपां प्रजापतिदैवत्यां प्रजासहत्वकर्मभ्यः प्रजोत्पादनार्थं तुभ्यमहं सम्प्रददे श्रियै न मम' ।। एवमेकवारं

त्रिवारं वा दत्वा 'कन्यां प्रतिगृह्णातु भवान्' इति वरहस्ते सकुशाक्षतजलं क्षिपेत्॥ वरः 'ॐ स्वस्ति' इति वदेत्॥ अथ वधूवरयोरञ्जलिस्थानक्षतान् वधूवस्त्रप्रान्ते बध्वा, तदवशिष्टानक्षतानन्योन्यं शिरसि विकिरतः॥ ततो वरः कन्याया दक्षिणस्कन्धमभिमृश्य ब्रूयात् 'ॐ देवस्य त्वा ... हस्ताभ्यां प्रतिगृह्णामि॥ राजा त्वा वरुणो नयतु देवि दक्षिणे प्रजापतये कन्याम्॥ तयाऽमृतत्वमश्याम्॥ वयो दात्रे॥ मयो मह्यमस्तु प्रतिगृहीत्रे॥ क इदं कस्मा अदात्॥ कामः कामाय॥ कामो दाता॥ कामः प्रतिगृहीता॥ कामः समुद्रमाविश॥ कामेन त्वा प्रतिगृह्णामि॥ कामैतत्ते॥ एषा ते कामदक्षिणा॥ उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु॥ धर्मप्रजासम्पत्यर्थं कन्यां प्रतिगृह्णामि'॥ ततो दाता 'गौरीं कन्यामिमां विप्र यथाशक्तिविभूषिताम्॥ गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय।' कन्ये ममाग्रतो भूयाः कन्ये मे देवि पृष्ठतः॥ कन्ये मे पार्श्वतो भूयास्त्वद्दानान्मोक्षमाप्नुयाम्॥ मम वंशकुले जाता पालिता वत्सराष्टकम्॥ तुभ्यं विप्र मया दत्ता पुत्रपौत्रप्रवर्धिनी'॥ यदि न्यूनाधिकवयस्का तदा 'पालिता वर्षसप्तकम्' 'पालिता नववत्सरम्' इत्याद्यूहः कार्यः (आदिपदेन दशसङ्ख्याप्रभृतिसङ्ख्या गृह्यन्ते॥ ताश्च त्रिंशत्पर्यन्ता यथा - दश, रुद्र, रवि, विश्व, मनु, तिथि, नृप, सूप, धृति, धूप, नख, खेट, खुर, लेख, जिन, तत्व, तरु, सुर, हर, धर, नल, इत्येवं 'नव' शब्दस्थाने योज्याः)॥ 'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्' इति दाता॥ 'नातिचरामि' इति वरः॥ 'सह धर्मश्चर्यताम्' इति दाता॥ 'चरिष्यामि' इति वरः॥ ततः 'कन्यादानसाङ्गतासिद्ध्यर्थं यथाशक्ति हिरण्यं तुभ्यमहं सम्प्रददे' इति दद्यात्॥ 'ॐ उत्तानस्त्वाङ्गीरसः प्रतिगृह्णातु' इति प्रतिगृह्णीयात्॥ एवं भोजनपात्रं जलपात्रं गां दासीमित्यादि यथाशक्ति दद्यात्॥ अथ दाता 'कृतस्य कन्यादानकर्मणः साङ्गतासिद्ध्यर्थं यथाशक्ति ब्राह्मणान् भोजयिष्ये' इत्युक्त्वा 'अनेन कन्यादानकर्मणा

श्रीलक्ष्मीनारायणः प्रीयताम्' ॥ इति कन्यादानम् ॥छ ॥

अथ वधूवरयोरायुर्वर्धनार्थं परस्परमक्षतारोपणं कुरुतः ॥ 'तां प्रतिगृह्णीयात्प्रजापतिः स्त्रियां यशः इत्येताभिः षड्भिः अनुच्छन्दसाम्' इति सूत्रम् ॥ कुमारस्वामिकारिकायाम् 'प्रजापतिस्त्रियामाद्यैः षड्भिः स्त्रीं प्रत्यृचं स्पृशेत्' ॥ अक्षतारोपणपूर्वकं स्पृशेत् इत्यर्थः मङ्गलार्थत्वात् ॥छ ॥ अथ वरः वध्वञ्जलिं साज्यक्षीरेण द्विरुपस्तीर्य द्विवारं तण्डुलानोप्य द्विरभिघारयति ॥ ततो दाता वराञ्जलिं द्विरुपस्तीर्य द्विवारं तण्डुलानोप्य अभिघार्य तदञ्जलौ सुवर्णं निधाय कन्याञ्जल्युपरि वराञ्जलिं निधाय द्वितीयं कलशजलधारां सिञ्चन् वदेत् ॥ 'ॐ शान्तिरस्तु ॥ पुष्टिरस्तु ॥ तुष्टिरस्तु ॥ वृद्धिरस्तु ॥ अविघ्नमस्तु ॥ आयुष्यमस्तु ॥ आरोग्यमस्तु ॥ ॐ प्रजापतिः स्त्रियां यशः ॥ मुष्कयोरदधात्सपम् ॥ कामस्य तृप्तिमानन्दम् ॥ तस्याग्ने भाजयेह मा ॥ मोदः प्रमोद आनन्दः ॥ मुष्कयोर्निहितः सपः ॥ सृत्वेव कामस्य तृप्याणि ॥ दक्षिणानां प्रतिगृहे ॥ मनसश्चित्तमाकूतिम् ॥ वाचः सत्यमशीमहि ॥ पशूनाꣳ रूपमन्नस्य ॥ यशः श्रीः श्रयता मयि ॥ यथाहमस्या अतृपꣳ स्त्रियै पुमान् ॥ यथा स्त्री तृप्यति पुꣳसि प्रिये प्रिया ॥ एवं भगस्य तृप्याणि ॥ यज्ञस्य काम्यः प्रियः ॥ ददामीत्यग्निर्वदति ॥ तथेति वायुराह तत् ॥ हन्तेति सत्यं चन्द्रमाः ॥ आदित्यः सत्यमोमिति ॥ आपस्तत्सत्यमाभरन् ॥ यशो यज्ञस्य दक्षिणाम् ॥ प्रजा मे कामः समृद्ध्यताम्' इति ॥ अथ वराञ्जलिस्थतण्डुलान् वधूशिरस्यावपेत् ॥ वध्वपि तथैव वरशिरस्यावपेत् ॥ पुनः पूर्ववत्पूरयित्वा[1] पूर्ववत्कलशोदकधारां सिञ्चन् शान्तिरस्त्वित्यादिसप्तकमुक्त्वा, प्रजापतिस्त्रियामित्यनुवाकान्ते पशवो मे कामः समृद्ध्यतां इति वधूपूर्वकमक्षतान् शिरसि विकीर्य ॥ एवमेव तृतीयपर्याये कलशोदकधारां सिञ्चन् शान्तिरस्त्वित्यादिसप्तकमुक्त्वा, प्रजापतिरित्यनुवाकान्ते

---

[1] अत्र ''द्वितीयपर्याये वराञ्जल्युपरि कन्याञ्जलिस्थापनम् ॥ तृतीये प्रथमवत् ॥ चतुर्थे द्वितीयवत्'' इति शिष्टाचारो ज्ञेयः ॥

यज्ञो मे कामः समृद्ध्यतां इति वरपूर्वकम् ।। चतुर्थपर्याये पूर्ववत्पूरयित्वा तूष्णीं कलशजलधारामभिषिच्य, तूष्णीमेव सर्वो मे कामः समृद्ध्यतां इति वधूपूर्वकं शिरसि विकिरेत् ।। इत्यक्षतारोपणम् ।।छ ।। अथ कण्ठसूत्रं स्वर्णादिकं सूत्रे प्रोत्य, गन्धपुष्पादिभिरभ्यर्च्य वरो वधूकण्ठे बध्नाति ।। 'माङ्गल्यतन्तुनानेन मम जीवनहेतुना ।। कण्ठे बध्नामि सुभगे त्वं जीव शरदां शतम्' इति बध्वा ।।छ ।। ततो गुडजीरकाक्षतहरिद्राखण्डपञ्चपूगीफलानि च पीठादौ निधाय वरः 'मम विवाहव्रतस्य निर्विघ्नतासिध्यर्थं गणपतिपूजां करिष्ये' इति सङ्कल्प्य, गणानान्त्वेति षोडशोपचारान् कृत्वा, तान्याचार्यः पृथक्पृथग्वधूवरयोरुत्तरीयवस्त्रप्रान्ते बध्वा, व्रतसमाप्तिपर्यन्तं न विसृजेत् ।। 'ॐ नीललोहिते भवतः कृत्यासक्तिर्व्यज्यते ।। एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम्' इति वधूवरयोर्वस्त्रप्रान्तौ मिथो बध्वा ।।छ ।। अथैनां त्वरो दक्षिणे हस्ते गृण्हाति 'मित्रोऽसि' इति ।। स्त्रीणामुपनयनं पाणिग्रहाख्यः संस्कारः ।। उक्तश्च 'पाणिग्रहो विधिः स्त्रीणामौपनायनिकः स्मृतः' इति ।। चिन्तामणौ तु 'मित्रोऽसि गृण्हाति च दक्षहस्तं तामर्पयेतां पितरौ सुलग्ने' ।।छ ।। अथ सप्तपदक्रमणार्थं उदगपवर्गान् सप्ततण्डुलराशीन् कृत्वा, तेषु[1] वधू दक्षिणपादं क्रमेण निधापयति 'ॐ एकमिषे विष्णुस्त्वान्वेतु ।। ॐ द्वे ऊर्जे विष्णुस्त्वान्वेतु ।। ॐ त्रीणि व्रताय विष्णुस्त्वान्वेतु ।। ॐ चत्वारि मायोभवाय विष्णुस्त्वान्वेतु ।। ॐ पञ्च पशुभ्यो विष्णुस्त्वान्वेतु ।। ॐ षड्रायस्पोषाय विष्णुस्त्वान्वेतु ।। ॐ सप्त सप्तभ्यो होत्राभ्यो विष्णुस्त्वान्वेतु' इति ।।

---

[1] गृह्यसूत्रे ''सहिरण्यतण्डुलपुञ्जेषु सप्तपदानि प्रक्रामयिष्यन् वरो वधूं दक्षिणहस्ते गृण्हाति 'मित्रोऽसि' इति'' इत्युक्तत्वेन सप्तपदक्रमणकालेऽपि वरो वधूं दक्षिणहस्ते गृण्हीयादेव ।। तथैव शिष्टाचारात् ।।

सप्त[१]मं पदमुपसङ्ग्रह्य जपति 'ॐ सखायः सप्तपदा अभूम ॥ सख्यं ते गमेयम् ॥ सख्यात्ते मा योषम् ॥ सख्यान्मे मा योष्ठाः' इति ॥ ततः पूर्ववदुपविश्य अथ ब्राह्मणा अस्मे देवास इत्यनुवाकं मङ्गलसूक्तं पठेयुः ॥ ततो बान्धवा मङ्गलवस्त्राणि दद्युः ॥ सुवासिन्य आरार्तिक्यं कुर्युः ॥ ततः सभापूजां कृत्वा, ताम्बूलदक्षिणादिभिः सन्तोष्य आशिषो गृहीत्वा, होमार्थं गच्छेत् ॥छ ॥ अथेदानीं वाऽरुन्धतीदर्शनात्परं वा वधूवरौ देवतायतनं गत्वा, सौभाग्याद्यभिवृद्ध्यर्थं महालक्ष्मीं शचीं गौरीं च पूजयेत् ॥ प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम सौभाग्यादिप्राप्त्यर्थं महालक्ष्मीशचीगौरीपूजां करिष्ये' इति संकल्प्य 'श्रीमहालक्ष्म्यै नमः श्रीशच्यै नमः श्रीगौर्यै नमः' इति षोडशोपचारान् कृत्वा प्रार्थयेत् ॥ 'सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधके ॥ शरण्ये त्र्यम्बके देवि नारायणि नमोऽस्तु ते ॥ देवेन्द्राणि नमस्तुभ्यं देवेन्द्रप्रियभामिनि ॥ वैवाहं भाग्यमारोग्यं पुत्रलाभं च देहि मे' इति प्रार्थ्य, सुवासिनिभ्यो मङ्गलद्रव्यं फलदानानि च दत्वा, अथ वूधवरौ मङ्गलघोषेण देवयजनं गच्छेताम् ॥ तत्रोपवेशनक्रमः ॥ 'संस्कारकस्तु सर्वत्र तिष्ठेदुत्तरतः सदा ॥ संस्कार्यः पुरुषो वाऽथ स्त्री वा दक्षिणतः सदा ॥ इयं व्यवस्था निर्णीता कपर्दिप्रमुखैरिह ॥ स्मार्तकर्मसु सर्वत्र तस्मादेवं हि कारयेत्' इति ॥छ ॥

अथ विवाहहोमः ॥ अथ देवयजनस्य पश्चादुदग्दशेन वाससाऽस्तीर्णे भद्रासने प्राङ्मुख उत्तरतो वरो दक्षिणतो वधूरिति क्रमेण वधूवरावुपविश्य, द्विराचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'विवाहहोमं कर्तुं स्थलशुद्ध्यर्थं स्थण्डिलोल्लेखनाख्यं कर्म करिष्ये' इति सङ्कल्प्य तत्कृत्वा, तत्र लौकिकाग्निं प्रतिष्ठाप्य, तस्मिन्नात्मन्यारोपितमग्निं 'ॐ उपावरोह जातवेदः पुनस्त्वम् ॥ देवेभ्यो हव्यं वह नः प्रजानन् ॥ आयुः प्रजाꣳ रयिमस्मासु धेहि ॥ अजस्रो दीदिहि नो दुरोणे ॥ ॐ भूर्भुवःसुवरों अग्निं प्रतिष्ठापयामि' इत्यग्निं प्रतिष्ठाप्य, प्राणानायम्य देशकालौ सङ्कीर्त्य 'प्रतिगृहीतायामस्यां वध्वां भार्यात्वसिद्धये गृह्याग्निसिद्धये च अनया नवोढया वध्वा सह विवाहहोमं करिष्ये, विवाहहोमः कर्म आघारवत्तन्त्रं

---

१ सप्तमं पदं – सप्तपदाख्याक्रमणानन्तरं वध्वाः पादद्वयमपि उपसङ्गृह्य = सम्मेल्य (तत्रैवेति शेषः) जपति = वा इत्यर्थः ॥

पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ योजको नामाग्निः प्रजापतिर्देवता लाजा हविः अग्निः स्विष्टकृत् आज्यस्य मान्त्रवर्णिक्यो देवता अङ्गदेवताः प्रधानदेवताः ताः सर्वाः सन्निहिताः सन्तु - एवं साङ्गेन कर्मणा सद्यो यक्ष्ये ।। तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य तत्कृत्वा, पात्रासादनकाले आज्यस्थाली स्रुवं प्रणीताप्रणयनं शूर्पं प्रोक्षणीं इध्मा बर्हिरिध्मप्रव्रश्चनानि स्फ्यं मेक्षणं दृषदं चेति पात्राणि सादयित्वा, प्रणीतासादनान्तं कृत्वा, अथ पवित्रे आदाय अग्नेः पश्चाद्दर्भेषु शूर्पं निधाय, तस्मिन् प्रागग्रे पवित्रे निधाय 'ॐ देवस्य त्वा ... हस्ताभ्यां प्रजापतये जुष्टं निर्वपामि' इति त्रिर्लाजान्निरूप्य तूष्णीं चतुर्थम् ।। 'ॐ देवस्य त्वा ... हस्ताभ्यां प्रजापतये वो जुष्टं प्रोक्ष्यामि' इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य, अथाग्नेः पश्चादाज्यस्थाल्यामुदगग्रे पवित्रे निधाय, आज्यं विलाप्य, तत्पात्र आनीय, उत्तरतः अङ्गारान्निरूह्य, तेष्वधिश्रित्य अभिद्योतनकुशद्वयमग्नौ प्रज्वाल्य अभिद्योत्य, अप उपस्पृश्य, द्वे दर्भाग्रे प्रच्छिद्य, अप उपस्पृश्य, प्रक्षाल्य, आज्येप्रत्यस्य तावेव दर्भौ पुनः प्रज्वाल्य अभिद्योत्य, अप उपस्पृश्य, पुनर्दर्भद्वयं प्रज्वाल्य, लाजानाज्यं च त्रिः पर्यग्निकृत्वा, वर्त्मकरणादिकं सर्वं पूर्ववत्कृत्वा, मेक्षणं संस्कृत्य शूर्पे निधाय, दर्वीकार्यमापन्नमपि नाञ्जलिं सम्मार्ष्टि, अथ वध्वामन्वारब्धायां वरः प्रागादि प्रदक्षिणमग्निं परिसमूहति ।। जुषस्वन इत्याद्यग्निमुखान्तं कृत्वा, अथ स्वयमुत्थाय, उत्थिताया वध्वा दक्षिणस्कन्धे स्वदक्षिणं बाहुं निधाय हृदयमभिमृशति ।। अत्र विश्वपतिप्रयोगे 'आसीनायाः स्त्रियास्तिष्ठन् गृभ्णामीत्यग्निमन्तरा ।। गृह्णीयात्पाणिमुत्तानं साङ्गुष्ठाङ्गुलिदक्षिणम्' इति विश्वप्रकाशकारिकावचनमुदासहृतं, तदापस्ताम्बाश्वलायनपरं, तेषां स्वयमुत्थितः सन्नासीनायाः पाणिं गृह्णीयादित्युक्तत्वात् ।। बोधायनानां तु मम हृदय इत्यस्मात् प्रागेव द्वयोरुत्थानमुक्तं विश्वामित्रकारिकायाम् 'हुते त्वग्निमुखे स्थित्वा तिष्ठन्त्या बाहुके करम् ।। निधाय स्वीयमस्यास्तु हृदयं संस्पृशन् जपेत् ।। ममादिमन्त्रान् तस्यास्तु कर्णे मां ते

मनो जपेत् ।। तस्या हस्तं तु साङ्गुष्ठं गृह्णात्युत्तानकारितम् ।। गृभ्णामित इति ह्युक्त्वा वह्निं पर्याणयेच्च ताम् ।। परित्वाग्न इति प्रोच्य तथोपविशतस्ततः' इति ।। 'ॐ मम हृदये हृदयं ते अस्तु मम चित्ते चित्तमस्तु ते ।। मम वाचमेकमनाः शृणु मामेवानुव्रता सहचर्यामयाभव' इति ।। अथाप उपस्पृश्य, अथास्या दक्षिणे कर्णे जपति ।। 'ॐ मां ते मनः प्रविशतु मा चक्षुर्मामुते भगः ।। मयि सर्वाणि भूतानि मयि प्रज्ञानमस्तु ते ।। मधुहे मध्वगाहे जिह्वा मे मधुवादिनी ।। मुखे मे सारघं मधु दत्सु संवननं कृतम् ।। चाक्रवाकꣳसंवननं यन्नदीभ्य उदाहृतम् ।। यद्वित्तौ देवगन्धर्वौतेन संवनिनौ स्वः ।। स्पृशामि तेऽहमङ्गानि वायुरापश्च मा परः ।। मां चैव पश्य सूर्यं च मा चान्येषु मनः कृथाः ।। सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।। तृतीयो अग्निष्टे पतिस्तुरीयस्ते मनुष्यजाः ।। सोमोऽददद्गन्धर्वाय गन्धर्वोऽददग्नये ।। रयिं च पुत्राꣳश्चादादग्निर्मह्यमथो इमाम् ।। सरस्वति प्रेदमव सुभगे वाजिनीवति ।। तां त्वा विश्वस्य भूतस्य प्रगायामस्यग्रतः' इति जपित्वा, अथास्या दक्षिणमुत्तानꣳसाङ्गुष्ठं स्वस्य नीचाहस्तेन लोमाभिमुखं गृह्णाति 'ॐ गृभ्णामि ते सुप्रजास्त्वाय हस्तं मया पत्या जरदष्टिर्यथासः ।। भगो अर्यमा सविता पुरन्धिर्मह्यं त्वाऽदुर्गार्हपत्याय देवाः' इति ।। अथ वधू सब्रह्माणमग्निं प्रदक्षिणं पर्याणयति 'ॐ परित्वाग्ने पुरं वयं विप्रꣳसहस्य धीमहि ।। धृषद्वर्णं दिवे दिवे भेत्तारं भङ्गुरावतः' इति ।। अत्र कारिका 'सोमायाज्याहुतेः पूर्वं सब्रह्माग्नेः प्रदक्षिणम् ।। लाजानामाहुतीनां तु ब्रह्माऽप्येको बहिर्भवेत्' इति ।। अथ यथापूर्वमुपविश्य अन्वारब्धायां एकादशोपयमनीर्जुहोति ।। ॐ अग्ने शर्ध महते सौभगाय तव द्युम्नान्युत्तमानि सन्तु ।। सञ्जास्पत्यꣳसुयममाकृणुष्व शत्रूयतामभितिष्ठामहाꣳसि स्वाहा ।। अग्नये शर्धायेदम् ।।१।। ॐ सोमाय जनिविदे स्वाहा ।। सोमाय जनिविद इदम् ।।२।। ॐ गन्धर्वाय जनिविदे स्वाहा ।। गन्धर्वाय जनिविद इदम् ।।३।। ॐ अग्नये

जनिविदे स्वाहा ॥ अग्नये जनिविद इदम् ॥४॥ ॐ कन्यलापितृभ्यो यती पतिलोकमवदीक्षामदास्थ स्वाहा ॥ वध्वै सूर्याया इदम् ॥५॥ ॐ प्रेतो मुञ्चातिनामुतः सुबद्धाममुतस्करत् ॥ यथेयमिन्द्रमीढ्वः सुपुत्रा॰सुभगासती स्वाहा ॥ इन्द्राय मीढुष इदम् ॥६॥ ॐ इमां त्वमिन्द्र मीढ्वः सुपुत्रा॰सुभगा कृणु ॥ दशास्यां पुत्रानाधेहि पतिमेकादशं कृधि स्वाहा ॥ इन्द्राय मीढुष इदम् ॥७॥ ॐ अग्निरैतु प्रथमो देवताना॰सोऽस्यै प्रजा मुञ्चतु मृत्युपाशात् ॥ तदय॰राजा वरुणोऽनुमन्यता यथेय॰स्त्री पौत्रमघ नरोदात्स्वाहा ॥ अग्नये वरुणाय राज्ञ इदम् ॥८॥ ॐ इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ॥ अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभिप्रबुद्ध्यतामिय॰स्वाहा ॥ अग्नये गार्हपत्यायेदम् ॥९॥ ॐ मा ते ग्रहे निशि घोष उत्थादन्यत्र त्वद्रुदत्यः संविशन्तु ॥ मा त्वं विकेश्युर आवधिष्ठाजीव पत्नी पतिलोके विराज पश्यन्ती प्रजा॰सुमनस्यमाना॰स्वाहा ॥ प्रजापतय इदम् ॥१०॥ अप्रजस्तां पौत्रमृत्युं पाप्मानमुतवाघम् ॥ शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाश॰स्वाहा ॥ अग्नय इदम् ॥११॥ अथ वधूमुत्थाप्य आत्माग्न्योः पश्चान्नीत्वा उत्तरेणाग्निं दक्षिणेन पदाऽश्मानमास्थापयति 'ॐ आतिष्ठेममश्मानमश्मेव त्व॰स्थिरा भव ॥ अभितिष्ठ पृतन्यतः सहस्व पृतनायतः' यथैतमानीय यथास्थानं तिष्ठन्त्या अञ्जलौ वर उपस्तृणीते, अथ तस्याः सोदर्यो भ्राता अन्यो वा भ्रातृस्थाने पितृव्यपुत्रो वा मातुलपुत्रो वा तत्सन्निहितो वा गन्धादिभिरर्चितः शूर्पस्थान् लाजान् समेक्षणेन हस्तेन पूर्वार्धादवदाय वध्वञ्जलावावपति, अथापरार्धादवदाय तथैवावपति, पश्चावत्तिनां तु मध्यात्पूर्वार्धादपरार्धादिति

त्रिरवदाय त्रिरावपति, वरः अवत्तान् लाजानभिघार्य शूर्पस्थान् लाजानवत्तदेशक्रमेण प्रत्यज्य पुरस्तात्स्रुवाहुतिं हुत्वा, वध्वञ्जलिं हस्ताभ्यां गृहीत्वा, अङ्गुलेर्वामपार्श्वेन दर्व्यैव जुहोति ॥ अत्र विश्वप्रकाशकारिका 'वध्वञ्जलावुपस्तीर्य लाजानोप्याभिघारयेत् ॥ त्रिर्जामदग्न्यस्यावापो द्विरन्येषामिति स्थितिः ॥ अङ्गुल्यग्रैर्न होतव्यं तथा नाञ्जलिभेदतः ॥ अङ्गुलेर्वामपार्श्वेन लाजहोमो विधीयते' इति ॥ ॐ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती ॥ दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतों३ इयं नार्युपब्रूतेऽग्नौ लाजानावपन्ती ॥ दीर्घायुरस्तु मे पतिर्जीवातु शरदः शतꣳस्वाहा ॥ प्रजापतय इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, अत्र इयं नारीति मन्त्रं याज्यानुवाक्यार्थमेकश्रुत्या द्विरुच्चार्य, पूर्वमन्त्रस्यान्त्यस्वरादिस्थाने त्रिमात्रं प्रणवमुक्त्वा, उत्तरस्यार्धर्चेऽवसाय अपरमर्धर्चमुक्त्वा, स्वाहाकारेणाञ्जलिमभिन्दन्नुत्तरभागेन दर्व्यैव जुहोति ॥ अथैनां प्रदक्षिणं ब्रह्मवर्ज्यमग्निं पर्याणयति 'ॐ तुभ्यमग्ने पर्यवहन्त्सूर्यां वहतुना सह ॥ पुनः पतिभ्यो जायान्दा अग्ने प्रजया सह' इति ॥ पुनः पूर्ववदश्मानमास्थापयति 'ॐ आतिष्ठेमम्' इति, पुनः पूर्ववदागत्य पूर्ववत्स्थित्वा, पूर्ववदुपस्तीर्य अपरार्धादवदाय पूर्वार्धादवद्यति इति द्वितीयाद्यवदाने विशेषः, अभिघारयति प्रत्यनक्ति, पुरस्तात्स्रुवाहुतिं हुत्वा, 'ॐ इयं नार्युपब्रूते०' इति पूर्ववद्धुत्वा, अथैनां पुनः पूर्ववत्पर्याणयति 'ॐ पुनः पत्नीमग्निरदादायुषा सह वर्चसा ॥ दीर्घायुरस्यायः पतिः स एतु शरदः शतम्' इति ॥ पुनः पूर्ववदश्मानमास्थापयति 'ॐ आतिष्ठेमम्' इति, पुनः पूर्ववत् आनीय तथैव जुहोति 'इयं नार्युपब्रूते०' इति, तृतीयमग्निं पर्याणयति 'ॐ विश्वा उत त्वया वयं धारा उदन्या इव ॥ अतिगाहेमहि द्विषः' इति ॥ एवंत्रिवारमश्मास्थापनं लाजहोमं प्रदक्षिणं च कृत्वा, पुनरुपस्तीर्य उत्तरार्धात्सकृदवदाय द्विरभिघार्य, पञ्चावत्तिनां तु त्रिरभिघारणम् ॥ वत्सा बिदा आर्ष्णिषेणा जामदग्न्या इत्येते पञ्चावत्तिनः ॥ न प्रत्यनक्ति अञ्जलिमन्तःपरिधौ निधाय, व्याहृतीर्हुत्वा, पुरस्तात्स्रुवाहुतिं हुत्वा, 'ॐ अग्नये स्विष्टकृते स्वाहा ॥ अग्नये स्विष्टकृत

इदम्' इतीशानभागे स्विष्टकृतं हुत्वा, लाजानामन्यत्र चतुर्थीहोमादिषु हव्यवाहमिति पुरोनुवाक्यामनूच्य, स्विष्टमग्न इति याज्यया जुहोति॥ [1]पक्कवत्स्वेव स्विष्टवतीभ्यां स्विष्टकृद्धोमः, अन्यत्र नाममन्त्रेणेति सूत्रात्॥ अथ मेक्षणमग्नौ प्रहृत्य, अञ्जलावुदकं पूरयित्वा, वैश्वानरेहविरिदमित्यादि सर्वं पूर्ववत्॥ दर्वीकार्यं सर्वमप्यञ्जलिनैव कुर्यात्॥ अथ जयप्रभृति प्रायश्चित्तहोमान्तं हुत्वा, पूर्णाहुतिं विना उत्तरपरिषेकादि ब्रह्मोद्वासनं प्रणीताविमोचनं च कृत्वा, दम्पती प्रोक्ष्य, शेषं समापयेत्॥ इति विवाहहोमप्रयोगः ॥छ॥

अथ गृहप्रवेशः॥ बोधायनानां सामगानां च न गृहप्रवेशहोमः॥ किन्तु मन्त्रपठनमेव॥ 'यदा वरो वधूमात्मगृहं नयति तदैतमग्निं प्रत्यक्षमनुनयति' इति सूत्रात्॥ अत्र कारिका 'अथासीनां वधूमङ्के पितृभ्रात्रादिकस्य तु॥ हस्ते गृहीत्वा निष्क्रामेद्ये वध्वश्चन्द्रमीरयन्॥ अथ कश्चित्तमग्निं तु प्रत्यक्षं सन्तमाहितम्॥ आदाय वरवध्वोस्तु पृष्ठतोऽनुव्रजेत्सह' इति॥ अत्र शिष्टाचारः॥ ये वध्व इत्युदूहनादि-पञ्चमेऽहनि स्थालीपाकपर्यन्तं श्वशुरगृह एव कुर्वन्ति॥

तस्य प्रयोगः॥ अथ विवाहहोमानन्तरमेनां वधूं पित्र्याद्यङ्के स्थितां दक्षिणे हस्ते गृहीत्वा उद्वाहयति॥ प्राणानायम्य देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह गृहप्रवेशं करिष्ये' इति सङ्कल्प्य, वधूदक्षिणहस्ते गृहीत्वा, उदूह्यमानो जपति 'ॐ ये वध्वश्चन्द्रं वहतुं यक्ष्मा यन्ति जनाँ अनु॥ पुनस्तान् यज्ञिया देवा नयन्तु यत आगताः' अथैनां स्ववाहनमारोप्य स्वान् गृहानानयति 'ॐ पूषा त्वेतो नयतु हस्तगृह्याश्विनौ त्वा प्रवहताँ रथेन॥ गृहान् गच्छ गृहपत्नी यथासो वशिनी त्वं विदथमावदासि' इति॥ अथ पन्थानं प्राप्य अनुमन्त्रयते 'ॐ सुगं पन्थानमारुक्षमरिष्टँ स्वस्ति वाहनम्॥ यस्मिन् वीरो नरिष्यत्यन्येषां विन्दते वसु' इति॥ अथ यदि पथि गच्छन् ओषधिवनस्पतिनदीवनानि वा प्राप्नोति तदा यथालिङ्गं जपति 'ॐ या ओषधयो या वनस्पतयो या नद्यो यानि धन्वानि ये वना। ते त्वावधु प्रजावतीं

---

[1] ''केचित्स्विष्टवतीभ्यां तु लाजान् जुह्वति नापर'' इति गृह्यसङ्ग्रहोदाहृतवचनं - केचित्पक्षस्तु न बौधायनीयः किन्तु सत्याषाढीयः॥ तेषां विवाहप्रकरणे तथैवोक्तत्वात्॥

प्रत्वे मुञ्चत्व॒ꣳहसः' इति ॥ अथ जायां दक्षिणपादपुरस्सरं स्वगृहान् प्रापयति 'ॐ भद्रान् गृहान् सुमनसः प्रपद्येवीरघ्नी वीरवतः सुवीरान् ॥ इरां वहतो घृतमुक्षमाणास्तेष्वहꣳसुमनाः संविशानि' इति ॥ अथैनां वधूं कल्याणीं वाचं वाचयति 'ॐ प्रजावती पशुमती रयिमती पुष्टिमती तेजस्विनी गृहमेधिनी यशस्विनी ब्रह्मवर्चस्विनी भूयासम्' इति ॥ अथ लोहितमनडुहं चर्म प्राचीनग्रीवमुत्तरलोमकं गृहमध्य आस्तीर्य तस्मिन् वधूमुपवेशयति 'ॐ इह गावः प्रजायध्वमिहाश्वा इह पुरुषाः ॥ इहो सहस्रदक्षिणो रायस्पोषो निषीदतु' इति ॥ अथ अमात्याः तोकमान्यारोपयन्ते इति सूत्रम् ॥ (अमात्याः = पित्रादयः आभ्यां दम्पतीभ्यां तोक्मानि = हरिद्वर्णान् अङ्कुरार्पणकृतानलङ्कारान् आरोपयन्ते = अलङ्कुर्वते इत्यर्थः) ॥ अथ दम्पती नक्षत्रदर्शनपर्यन्तं वाचं विसृजेताम् ॥ अथहोरात्रयोः सन्धिमीक्षमाणामनुमन्त्रयते 'ॐ नीललोहिते भवतः कृत्यासक्तिर्व्यज्यते ॥ एधन्तेऽस्या ज्ञातयः पतिर्बन्धेषु बध्यताम्' इति ॥ अथोदितेषु नक्षत्रेषु उभौ दम्पती वाचं विसृज्य वत्समन्वारभ्योत्तिष्ठतः 'ॐ उदायुषास्वायुषोदोषधीनाꣳरसेनोत्पर्जन्यस्य शुष्मेणोदस्थाममृताꣳअनु' इति ॥ अथ प्राचीमुदीचीं वा दिशमुपनिष्क्रम्य ध्रुवमरुन्धतीं च वधूं दर्शयति ॥ 'ॐ ध्रुवोऽसि ध्रुवक्षितिध्रुवमसि ध्रुवतः स्थितः ॥ त्वं नक्षत्राणां मेथ्यसि समापाहि पृतन्यतः' इति ध्रुवम् ॥ 'ॐ सप्तऋषयः प्रथमां कृत्तिकानामरुन्धतीं यद्ध्रुवताꣳह निन्युः ॥ षट्कृत्तिकामुख्ययोगं वहन्तीयमस्माकमेधत्वष्टम्यरुन्धतीम्' इत्यरुन्धतीं वधूं दर्शयित्वा व्रतग्रहणं कुर्यात् ॥ इति गृहप्रवेशप्रयोगः ॥छ ॥

अथाग्नेः पश्चादुभावुपविश्य, स्त्रियान्वारब्धः प्राणानायम्य, देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह विवाहव्रतग्रहणं करिष्ये' इति सङ्कल्प्य, अन्वाधानं कृत्वा, परिसमूह्य पर्युक्ष्य परिस्तीर्य, जुषस्वन इत्याद्यग्न्यलङ्करणान्तं

कृत्वा, अथ पालाशीश्चतस्रः समिध आर्द्राः सपलाशाः सप्रारोहाः प्रादेशमात्रा अप्रतिशुष्काग्रा घृतान्वक्ता अभ्याधापयन् वाचयति यज्ञवृक्षसमिधो वा ॥ ॐ अग्ने व्रतपते वैवाहं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता.स्वाहा ॥ अग्नये व्रतपतय इदम् ॥१॥ ॐ वायो व्रतपते वैवाहं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता.स्वाहा ॥ वायवे व्रतपतय इदम् ॥२॥ ॐ आदित्य व्रतपते वैवाहं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता.स्वाहा ॥ आदित्याय व्रतपतय इदम् ॥३॥ ॐ व्रतानां व्रतपते वैवाहं व्रतं चरिष्यामि तच्छकेयं तन्मे राध्यता.स्वाहा ॥ व्रतानां व्रतपतय इदम् ॥४॥ पुनर्जुषस्वन इत्यादि ॥ 'अनेन व्रतोपक्रमहोमकर्मणा श्रीपरमेश्वरः प्रीयताम्' इति व्रतग्रहणं कृत्वा, 'त्रिरात्रं व्रतं चरतः ॥ अक्षारलवणाशिनावधःशायिनौ ब्रह्मचारिणावासाते, अहतानां च वाससां परिधान.सायं प्रातश्चालङ्करणं इषुप्रतोदयोश्च धारणं अग्निपरिचर्या च' इति सूत्रम् ॥ अत्र ब्रह्मचर्यं नामाष्टाङ्गमैथुनवर्ज्यम् ॥ तल्लक्षणमाह बृहस्पतिः 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ विपरीतं ब्रह्मचर्यं तदेवाष्टाङ्गलक्षणम्' इति ॥ अत्र स्नानवर्ज्यं त्रिरात्रं वसतः ॥ तयोः शय्याया अधः पुरुषमात्रं औदुम्बरदण्ड इति विष्णुभट्टः ॥ अरत्निमात्रं इति प्रयोगरत्ने 'बन्धे व्रतेऽग्निं परिषिच्य सम्यगौदुम्बरं दण्डमरत्निमात्रम् ॥ वस्त्रेण सूत्रैरथवा परीतमधः क्षिपेदास्कर एरकायाः' इति ॥ अरत्निमात्रमौदुम्बरं दण्डं सूत्रवेष्टितं गन्धानुलिप्तं शय्याया अधः स्थापयित्वा व्रतविसर्जनपर्यन्तं नोद्धरेत् ॥ इति व्रतग्रहणं कृत्वा औपासनं कुर्यात् ॥छ ॥

अथ औपासनम् ॥ तस्य कालनिर्णयः ॥ आश्वलायनधर्मे 'रात्रावहनि वा दानं कन्यायाः स्वीकृतिर्यदा ॥ तदानीमेव होमः स्याद्विवाहस्य च सिद्धये ॥१॥ विवाहश्चेद्भवेद्रात्रौ सार्धयामद्वयादधः ॥ तदैवौपासनं कुर्यात्केचित् गृह्यविदो विदुः ॥२॥ नित्यहोमे तु कालः स्याद्रात्रौ नाडीनवात्मकः ॥ द्विगुणः स्याद्विवाहे तु प्रवदन्ति महर्षयः ॥३॥ इति ॥ स्मार्तप्रदीपिकायाम् 'रात्रिं त्रेधा विभज्य आदिमभागद्वये विवाहहोमसमाप्तिश्चेत्तदानीमेवौपासनारम्भः कार्यः, अन्यथा परेद्युरेव' इति ॥ प्रयोगदर्पणे 'प्रदोषान्तो होमकालः' इति ॥ सूत्रे 'सङ्गवान्तः' इति च ॥ 'प्रदोषो नवनाडिकः' इति स्मृतेश्च ॥ शौनकस्तु 'पश्चादस्तमयात्कालो यो भवेत्त्रिमुहूर्तकः ॥ स सायं होमकालश्च प्रदोषान्त उदाहृतः ॥ यत्तु षण्णाडिकः कालः पश्चादेवोदयाद्रवेः ॥ स होमकालो विप्राणां सङ्गवान्त इति स्मृतः' इति ॥ रात्रौ प्रदोषो मुख्यः स्यादिति वेदविदो विदुः' इति च ॥ (प्रदोषो = रजनीमुखं इत्यमरकोशः) ॥ इदं नित्यहोमपरम् ॥ प्रथमारम्भस्तु अष्टादशघटिकामध्ये विवाहहोमसमाप्तिश्चेत्तदानीमेवौपासनारम्भः, अन्यथा परेद्युरेवेति ॥ इत्यौपासनकालनिर्णयः ॥छ ॥

अथौपासनप्रयोगः ।। अथ प्रथमौपासने व्रतग्रहणानन्तरमग्नेः पश्चाद्दर्भेषु सपत्नीको वरः प्राङ्मुख उपविश्य, द्विराचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'औपासनारम्भं कर्तुं स्वस्तिपुण्याहवाचनं करिष्ये, तदङ्गत्वेन गणपतिपूजां करिष्ये' इति सङ्कल्प्य तत्कृत्वा, अस्यौपासनारम्भकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, शिवं कर्मास्तु अग्निसूर्यप्रजापतयः प्रीयन्तामिति विशेषः ।। एवं पुण्याहं वाचयित्वा, पूर्ववदुपविश्य आचमनप्राणायामौ कृत्वा, पत्न्यान्वारब्धो देशकालौ सङ्कीर्त्य 'ममोपात्तदुरितक्षयद्वारा श्रीपरमेश्वरप्रीत्यर्थं पय आदिष्वौपासनद्रव्येषु अन्यतमद्रव्येण यावज्जीवं सायं प्रातरौपासनं करिष्ये ।। तत्रेदानीं सायमौपासनाहुतीः व्रीहिभिर्होष्यामि' इति सङ्कल्प्य, जुष्टोदमूना इत्युपस्थाय अथैनं प्रदक्षिणमग्निं परिसमूह्य पर्युक्ष्य परिस्तीर्य, तदुत्तरतः पात्रे हवनीयद्रव्यं निधाय, दर्भद्वयमग्नौ प्रज्वाल्य, होमद्रव्यं प्रागादि त्रिः प्रदक्षिणं पर्यग्निकृत्वा, उदक् निरस्य, अप उपस्पृश्य, अग्नेः पश्चाद्दर्भेष्वासाद्य 'ॐ जुषस्व नः समिधमग्ने अद्य शोचा बृहद्यजतं धूममृण्वन् ।। उपस्पृश्य दिव्यꣳसानस्तूपैः सꣳरश्मिभिस्ततनः सूर्यस्य' इति ।। अथैनं प्रदक्षिणमग्निं परिषिच्य 'ॐ अदितेऽनुमन्यस्व' इति दक्षिणतः प्राचीनं, ॐ अनुमतेऽनुमन्यस्व' इति पश्चादुदीचीनं, 'ॐ सरस्वतेऽनुमन्यस्व' इत्युत्तरतः प्राचीनं, 'ॐ देवसवितः प्रसुव' इति समन्तं प्रदक्षिणं प्रागादि परिषिच्य, 'ॐ अग्नये नमः, 'ॐ जातवेदसे०, 'ॐ सहोजसे०, 'ॐ अजिराप्रभवे०, 'ॐ वैश्वानराय०, 'ॐ नर्यापसे०, 'ॐ पङ्क्तिराधसे०, 'ॐ विसर्पिणे नमः' इत्यष्टनामभिरष्टदिक्षु गन्धाक्षतादिभिरलङ्कृत्य, 'अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।। सुवर्णवर्णमनलं समिद्धं विश्वतोमुखम्' इति नमस्कृत्य, तूष्णीमेकां समिधमग्नौ निधाय, तस्यामादीप्तायां तत्पश्चिमभागे होमद्रव्यं गृहीत्वा, हस्तबिलेन प्राङ्मुखं प्रबाहुग्जुहोति ।। ॐ अग्नये स्वाहा ।। अग्नय इदम् ।।१।। पुनः पूर्वाधिकं गृहीत्वा, तां दक्षिणतोऽतिहाय समिध्येव पूर्वभागे प्रत्यग्घस्तबिलेनासंस्पृष्टं प्रतिमुखं प्रबाहुङ्मनसैव जुहोति ।। ॐ प्रजापतये स्वाहा ।। प्रजापतय

इदम् ।।२।। आहुतिप्रमाणमुक्तं सूत्रे 'व्रीहीणां वा यवानां वा शतमाहुतिरिष्यते' इति ।। निर्वापणसंस्रावणलाजहोमनित्यहोमांश्च कायतीर्थेन कुर्यात् ।। कनिष्ठिकामूलदेशः कायतीर्थमित्युच्यते ।। पुनर्जुषस्वन इत्यादि पूर्ववत्परिषिञ्चति ।। 'ॐ अदितेऽन्वम्ँस्थाः ।। ॐ अनुमतेऽन्वम्ँस्थाः ।। ॐ सरस्वतेऽन्वम्ँस्थाः ।। ॐ देव सवितः प्रासावीः' इति परिषिच्य, तूष्णीमेकां समिधं निधाय, उत्थाय अथैनमुपतिष्ठते 'ॐ यत्ते अग्ने तेज' इति त्रिभिः पर्यायैः, 'ॐ मयि मेधां मयि प्रजाम्' इति तिसृभिः ।। अथोपविश्य 'मानस्तोक' इत्युपस्थाय, अग्नेरुत्तरभागे पूर्वभागे वा अनामिकया भस्म गृहीत्वा, 'ओजोऽसि' इति सप्तभिः सप्तस्थानानि स्पृष्ट्वा, 'श्रद्धां मेधाम्' इत्यग्निमाशिषः प्रार्थयित्वा, स्वगोत्रप्रवरमुक्त्वा, अभिवाद्य अग्निं प्रदक्षिणीकृत्य 'ॐ अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् ।। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम' ।। 'प्रवः शुकाय' इत्यादीनुक्त्वा नमस्कुर्यात् ।। यदि परिस्तृणाति न तान्प्रहरति धारयत्येव ।। इति सायमौपासनम् ।।छ ।। अथ प्रातरौपासनम् ।। प्राणायामादिकं कृत्वा, 'प्रातरौपासनाहुती तण्डुलैर्होष्यामि' इति सङ्कल्प्य, व्रीहिभिर्वा तत्राग्निस्थाने 'ॐ सूर्याय स्वाहा ।। सूर्यायेदम्' ।। तामुत्तरतोऽतिहाय द्वितीयामाहुतिं पूर्वतो भूयसीमवदाय तद्वदेव प्रतिमुखं प्रबाहुग्जुहोति 'ॐ प्रजापतये स्वाहा' इति मनसा ।। शेषं समानम् ।। अनेन प्रातरौपासनकर्मणा श्रीपरमेश्वरः प्रीयताम् ।। इत्यौपासनप्रयोगः ।।छ ।।

अथ सायमौपासनान्तरं दम्पत्योः सहभोजनमुक्तम् ।। हेमाद्रौ गालवः 'विवाहकाले यात्रायां पथि चोरसमाकुले ।। असहायो भवेद्विप्रस्तदाकार्यं द्विजन्मभिः ।। एकासनसमारोहमेकपात्रे च भोजनम् ।। विवाहे पथि यात्रायां कृत्वा विप्रो न दोषभाक् ।। अन्यथा दोषमाप्नोति पश्चाच्चान्द्रायणं चरेत्' इति ।। स्मृत्यर्थसारे 'विवाहे दम्पती स्यातां त्रिरात्रं ब्रह्मचारिणौ ।। अलङ्कृतौ वधूश्चैव सहशय्यासनाविति' ।। क्षारलवणं वर्जयित्वा, त्रिरात्रमेवं व्रतं कृत्वा, चतुर्थ्यां पक्वहोमादिकं कुर्यात् ।।छ ।।

अथ चतुर्थीप्रयोगः ॥ अथ चतुर्थ्यां रात्रेरपरभागे बुध्वा, वधूवरौ हस्तपादौ प्रक्षाल्य, द्विराचम्य प्राणानायम्य, तदुत्तरतः, स्थण्डिलोल्लेखनादिकं कृत्वा, तमेवाग्निं प्रतिष्ठाप्य, पुनः प्राणानायम्य, देशकालौ सङ्कीर्त्य 'श्रीपरमेश्वरप्रीत्यर्थं अनया नवोढया वध्वा सह चतुर्थ्यां रात्रौ पक्वहोमं करिष्ये ॥ चतुर्थीपक्वहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ पक्वमोदनं पायसं वा हविः जातवेदोनामाग्निः जातवेदोऽग्निर्देवता अग्निःस्विष्टकृदाज्यस्य मान्त्रवर्णिक्यो देवता अङ्गदेवता' इत्याद्युक्त्वा 'एवं साङ्गेन कर्मणा सद्यो यक्ष्ये, तदङ्गमन्वाधानं करिष्ये' इति सङ्कल्प्य तत्कृत्वा, पात्रासादनकाले 'आज्यस्थालीं स्रुवं चैव दर्वीं च स्रुचमेव ॥ प्रणीतां प्रोक्षणीं चैव चरुस्थालीं समेक्षणाम् ॥ इध्मं च बर्हिषं चैव यैरन्यैश्च प्रयोजनम्' इत्यासाद्य आप्रणीताभ्यः कृत्वा, तिरः पवित्रं चरुस्थाल्यां तण्डुलान्निर्वपति ॥ ॐ देवस्य त्वा ... हस्ताभ्यां जातवेदसेऽग्नये जुष्टं निर्वपामि' इति त्रिर्मन्त्रेण तूष्णीं चतुर्थम् ॥ 'ॐ देवस्य त्वा ... हस्ताभ्यां जातवेदसेऽग्नये वो जुष्टं प्रोक्ष्यामि' इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य, अग्नावधिश्रित्य अथाज्यमधिश्रित्य, उभयं त्रिः पर्यग्निकृत्वा, मेक्षणं स्रुवं स्रुचंदर्वींच सम्मृज्य, अथैनं चरुꣳश्रपयित्वा, अभिघार्य उदञ्चमुद्वास्य प्रतिष्ठितमभिघारयति, परिधानप्रभृत्यग्निमुखान्तं कृत्वा, स्रुवेण दर्व्यामुपस्तीर्य, पूर्वार्धाच्चरोरवदाय, अपरार्धादवद्यति अभिघारयति प्रत्यनक्ति, पुरस्तात्स्रुवाहुतिं हुत्वा, ॐ यस्त्वा हृदा कीरिणा मन्यमानो मर्त्यं मर्त्यो जोहवीमि ॥ जातवेदोयशो अस्मासु धेहि प्रजाभिरग्ने अमृतत्वमश्यों३यस्मै त्वꣳसुकृते जातवेद उ लोकमग्ने कृणवस्योनम् ॥ अश्विनꣳसपुत्रिणं वीरवन्तं गोमन्तꣳरयिन्नशते स्वस्ति स्वाहा ॥ जातवेदसेऽग्नय इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, पुनर्दर्व्यामुपस्तीर्य, उत्तरार्धात्सकृच्चरुमवदाय द्विरभिघार्य अन्तःपरिधौ निधाय, अथाज्याहुतीरुपजुहोति ॥ ॐ अग्ने प्रायश्चित्ते त्वं देवानां प्रायश्चित्तिरसि ब्राह्मणस्त्वा नाथकामः प्रपद्ये यास्यां पतिघ्नी तनूः प्रजाघ्नी पशुघ्नी लक्ष्म्यघ्नी

जारघ्नीमस्यैतां कृणोमि स्वाहा ॥ अग्नये प्रायश्चित्तय इदम् ॥१॥ ॐ वायो प्रायश्चित्ते त्वं देवानां० ॥ वायवे प्रायश्चित्तय इदम् ॥२॥ ॐ आदित्य प्रायश्चित्ते त्वं देवानां० ॥ आदित्याय प्रायश्चित्तय इदम् ॥३॥ ॐ प्रजापते प्रायश्चित्ते त्वं देवानां० ॥ प्रजापतये प्रायश्चित्तय इदम् ॥४॥ व्याहृतीर्हुत्वा, पुरस्तात्स्रुवाहुतिं हुत्वा ॥ ॐ हव्यवाहं ... आयुः स्वाहा ॥ अग्नये स्विष्टकृत इदम् ॥ उपरिष्टात्स्रुवाहुतिं हुत्वा, मेक्षणमग्नौ प्रहृत्य, परिध्यपां निनयनाद्युत्तरपरिषेकात् प्राक्कृत्वा, अथ वधूमूर्ध्नि हिरण्यमन्तर्धाय आज्यशेषेण सꣳस्रावं जुहोति ॥ ॐ भूः स्वाहा ॥ अग्नय इदम् ॥ ॐ भुवः स्वाहा ॥ वायव इदम् ॥ ओꣳसुवः स्वाहा ॥ सूर्यायेदम् ॥ ॐ भूर्भुवःसुवः स्वाहा ॥ प्रजापतय इदम् ॥ ओꣳस्वाहा ॥ ब्रह्मण इदम् ॥ अत्र कारिका 'आज्यशेषेण जुहुयाद्व्याहृतिप्रणवैः क्रमात् ॥ हिरण्यमन्तर्धायैव मूर्ध्नि वध्वा यथोत्थितः' इति ॥ प्रयोगरत्ने 'तिष्ठन् प्राक् परिषेकतोऽथ निहितस्वर्णे वधूमूर्धनि' इति ॥ उपविश्य मूर्ध्नि सꣳस्राव जुहोतीति केचित् ॥ तिष्ठन्निति कुमारस्वामिकारिकायाम् ॥ तिष्ठन्निति शिष्टाचारः ॥ अथैनां प्रदक्षिणमग्निं पर्याणयति 'ॐ अर्यम्णो अग्निं परियन्तु क्षिप्रं प्रतीक्षन्ताꣳश्वश्रुवो देवराश्च' इति ॥ अथाग्नेः पश्चात्पूर्ववदुपविश्य जुषस्वन इत्याद्युत्तरपरिषेकं प्रणीताविमोकं ब्रह्मोद्वासनं च कुर्यात् ॥ इति चतुर्थीहोमः ॥छ ॥

अथ व्रतविसर्जनम् ॥ प्राणानायम्य देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह् चतुर्थ्यं रात्रौ विवाहव्रतविसर्जनहोमं करिष्ये' इति सङ्कल्प्य, तत्र 'अग्निवाय्वादित्यव्रतपतयो देवता आज्याक्तपालाशसमिधो द्रव्यं सद्यो यक्ष्ये' इत्युक्त्वा, अन्वाधानं कृत्वा, अग्न्यलङ्करणान्तं सर्वं पूर्ववत्कृत्वा, पूर्वोक्ताः समिधो घृतान्वक्ता अभ्याधापयन् वाचयति ॥ ॐ अग्ने व्रतपते वैवाहं व्रतमचारिषं तदशकं तन्मे राधि स्वाहा ॥ ॐ वायो व्रतपते वैवाहं० ॥ ॐ आदित्य

व्रतपते वैवाहं० ।। ॐ व्रतानां व्रतपते वैवाहं० ।। पूर्ववदुद्देशत्यागः ।। जुषस्वन इत्यादि सर्वं पूर्ववत् ।। इति व्रतं विसृज्य, अथ शय्यायां दन्डं उत्थापयति 'ॐ ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह ।। त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषामदेम' इति ।। अथैनं दण्डं वध्वै प्रयच्छति 'ॐ प्रजाया त्वा सꣳसृजामि मासरेण सुरामिव' इति ।। तं वधूः प्रतिगृह्णाति 'ॐ प्रजावती भूयासम्' इति ।। अथैनं वराय प्रयच्छति 'ॐ प्रजया त्वा सꣳसृजामि मासरेण सुरामिव' इति ।। तं वरः प्रतिगृह्णाति 'ॐ प्रजावान्पशुमान्भूयासम्' इति ।। अथैनं स्थूणादेशे निदधाति (स्तम्भोपरि निदधातीत्यर्थः) ।। ऊर्ध्वं श्रौताधानपर्यन्तं गृह्याग्निरजस्रो नित्यो धार्यः, अथवा समारोप्य कर्मण्युपावरोह्य धारयेत् ।। तत्र कुमारस्वामिकारिका 'विवाहाग्नेरजस्रत्वं यावद्ब्रह्मौदनं पचेत् ।। अजस्रधारणाशक्तौ गृह्यग्नेरपि वा गृही ।। याज्ञिक्यां समिधि स्यात्तमारोप्यायन्त इत्यृचा ।। होमकाले क्षिपेदग्नौ लौकिके समिधं तु ताम् ।। आजुह्वानोत्तमन्त्राभ्यां कुर्यात्कर्माणि तत्र तु ।। औपासनादि गृह्याणि कुर्वीतैवं पुनः पुनः' इति ।। शिष्टास्तु पञ्चमेऽहनि पार्वणस्थालीपाकहोमानन्तरं समारोपणं कुर्वन्ति ।।छ ।।

अथोपसंवेशनम् ।। तत्र कारिका 'होमदेशात्ततो गच्छेदागारं सर्वशोभनम् ।। कुड्ये लिखितपद्मं त्रिः स्वस्तिकादिविभूषितम् ।। मूर्धदेशोपरिक्षिप्तसादर्शं पूर्णकुम्भकम् ।। घृतवर्तिप्रदीपैश्च दीप्तं प्रतिदिशं कृतैः ।। गन्धपुष्पाढ्यतल्पस्थां वधूमनुनिषिद्य सः' इति ।। गृह्यसूत्रे 'अथ श्रीमन्तमागारꣳसम्मृष्टोपलिप्तं गन्धवन्तं पुष्पवन्तं धूपवन्तं दीपवन्तं तल्पवन्तꣳसाधिवासं दिक्षु सर्पि सूत्रेन्धनप्रद्योतितमुदकुम्भादर्शोच्छ्रिरसं प्रपद्य, तस्मिन्नेनाꣳसंवेश्य तस्यान्तिके उपविश्य जपति' इति ।। दिक्षु सर्पि सूत्रेन्धनप्रद्योतितमित्यस्य आज्याक्तसूत्राणि काष्ठानामग्रेषु संयोज्य प्रज्वाल्य चतुर्दिक्षु स्थापयेदित्यर्थः ।। एवं पूर्वोक्तप्रकारेण नानाविधमङ्गलैरुपशोभितं वितानवन्तमागारं प्रविश्य, वधूं शय्यायां शाययित्वा, तस्याः समीपे स्वयमुपविश्य जपति 'ॐ उदीर्ष्वातो विश्वावसो नमसेडामहे त्वा ।। अन्यामिच्छ प्रफर्व्यꣳसञ्जायां

पत्या सृज ।। उदीर्ष्वातः पतिवती ह्येषा विश्वावसुं नमसा गीर्भिरीट्टे ।। अन्यामिच्छ पितृषदं व्यक्ताꣳस ते भागो जनुषा तस्यविद्धि' इति ।। अथास्या योनिं विवृणोति 'ॐ प्रजायै त्वा सꣳसृजामि मासरेण सुरामिव' इति ।। अथैनामुपसंवेशयति (संयोगं करोतीत्यर्थः) ।। 'प्रजापतिः स्त्रियां यशः' इत्येतमनुवाकमुक्त्वा मिथुनीभूय, सा यद्यश्रु कुर्यात्तमनुमन्त्रयते 'ॐ जीवाꣳरुदन्ति विमयन्ते अध्वरे दीर्घामनुपेसिति दीधियुर्नरः ।। वामं पितृभ्यो य इꣳसमेरिरे मयः पतिभ्यो जनयः परिष्वजे' इति ।।छ ।। अथ वरः प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम ताम्बूलचर्वणयोग्यतासिद्ध्यर्थं श्रीलक्ष्मीनारायणप्रीत्यर्थं ताम्बूलदानं करिष्ये' इति सङ्कल्प्य, ब्राह्मणान् सम्पूज्य, दक्षिणासहितं ताम्बूलं गृहीत्वा 'ताम्बूल श्रीकरं भद्रं ब्रह्मविष्णुशिवात्मकम् ।। तस्मादस्य प्रदानेन अतः शान्ति प्रयच्छ मे' इति दत्वा, एवमेव स्त्रीभ्यश्च दद्यात् ।। अथ आचार्यः स्त्रियश्च तयोर्मध्ये ताम्बूलानि विकिरन्ति ।। तानि वधूवरौ सङ्गृह्य भक्षणं कुरुतः ।। तत आरार्तिकं कृत्वा, ब्राह्मणा मन्त्राक्षतान् दद्युः ।। अत्र योनिविवृणनादिकं न कुर्वन्ति शिष्टैरनाचरितत्वात् लौकिकविरोधाच्च ।। किन्तु मन्त्रावृत्तिरेव ।। इति चतुर्थी प्रयोगः समाप्तः ।।छ ।।

अथ पञ्चमेऽहनि स्थालीपाकप्रयोगः ।। गन्धाक्षतपुष्पलाजपिष्टादिकं गृहीत्वा, यत्रैकमूल उदुम्बरो वृक्षस्तिष्ठति (एकमूलः=तरुणवृक्ष इत्यर्थः वृद्धवृक्षस्य बहुमूलत्वात्) तत्र गत्वा, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'मम पञ्चमेऽहनि विवाहाङ्गतया विहितां उदुम्बरपूजां करिष्ये ।। तदङ्गत्वेन गणपतिपूजां करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, अथौदुम्बरस्येशानीमारभ्य प्रदक्षिणं परिसमूह्य पर्युक्ष्य प्रदक्षिणं गन्धैरनुलिम्पन् जपति 'ॐ यथा त्वं वनस्पते ऊर्जाभ्युत्थितः शतवल्शो विरोहस्येवमहं पुत्रैश्च पशुभिश्च सहस्रवल्शा विवयꣳरुहेम्' इति ।। तस्य मूलं पुष्पैः प्रच्छादयति

‘ॐ यथा त्वं वनस्पते फलवानस्येवमहं पुत्रैश्च पशुभिश्च फलवन्तो भवानि’ इति, तत्रैव त्रिवृदन्नैन बलिमुपहरति ॥ तल्लक्षणं तु ‘अन्नं चापि त्रिवृद्विद्याद्वलौ ब्राह्मणभोजने ॥ भक्षं भोज्यं च पेयं चेत्येतत्समुदितं त्रिवत्’ इति ॥ ‘ॐ ऊर्जस्वान् पयस्वान् पयसा पिन्वमानोऽस्मान् वनस्पते पयसाऽभ्याववृत्स्व’ इति ॥ गन्धपुष्पधूपदीपनैवेद्यनमस्कारान्तं कृत्वा ‘अथौदुम्बरपूजाकर्माङ्गतयाविहितं स्वस्ति पुण्याहवाचनं करिष्ये’ इति सङ्कल्प्य, अस्यौदुम्बरपूजाकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, वनस्पतिः प्रीयतामिति विशेषः ॥ एवं पुण्याहं वाचयित्वा, शौनकोक्तवसन्तं पूजयेत् ॥ यथा ॥ उदुम्वरमूलेऽष्टदलपद्मं विलिख्य कुङ्कुमोदकपूर्णं हरिद्रोदकपूर्णं वा कलशं निधाय, प्राणानायम्य ‘मम विवाहाङ्गतयाविहितां पञ्चमेऽहनि वसन्तपूजां करिष्ये’ इति सङ्कल्प्य ‘कनकारुणमासुरं प्रपन्नं हयवक्त्रं मदनस्य साहचर्यम् ॥ द्विभुजं धृतपल्लवप्रसूनं भजतामिष्टदमर्चयेद्वसन्तम्’ इति ध्यात्वा ‘वसन्ताय नमः’ इति ध्यानावाहनादिषोडशोपचारन् कृत्वा, तज्जलं बन्धुभिः सहान्योऽन्यमभिषेकं कुरुतः ॥ ‘इत्थं सम्पूज्य विधिना अभिषेकं समाचरेत् ॥ वसन्तादींश्च सन्तर्प्य दिङ्नागान् दिक्पतीनपि ॥ ब्राह्मणैर्वन्धुभिः सार्धमभिषिञ्चेच्च तज्जलम्’ इति ॥ अथौदुम्बरं प्रदक्षिणीकृत्य पूर्वं स्थूणादेशे स्थापितदण्डमप्सु प्रास्य, अथ तत्रैव जानुदघ्नजलमवतीर्य प्राचीनदशेनाहतेन वाससा मत्स्यान् गृह्णीतः ॥ पिष्टमयानिति कुमारस्वामिः ॥ ‘गृह्णीतः पैष्टिकानत्र मत्स्यान् प्राग्दशवाससा’ इति कारिकायाम् ॥ पिष्टमयान्वा मत्स्यान् जलपूर्णपात्रे स्थापयित्वा, ब्रह्मचारिणं पश्येत्युक्त्वा, अथ दम्पती पृच्छतः ॥ ‘ब्रह्मचारिन् किं पश्यसि’ इति स पृष्टः प्रतिब्रूयात् ‘पुत्रा꣡ꣳश्च पश्यामि’ इति ॥ अथैतान् मत्स्यानुदुम्बरमूले बकानां बलिमुपहरति ‘ॐ दीर्घायुत्वाय वर्चसे’ इति ॥ अत्रैव निर्माल्यानि परिभुक्तानि वासाꣳसि प्रतिसराꣳश्च विसृज्यौदुम्बरशाखायां सꣳसृज्य नापितकर्म [1]कुर्वन्ति तस्मै पयोदनं दत्वा, क्षौरनखकृन्तनादिकं कृत्वा, जलसमीपं

[1] नापितकर्मेति-कुर्वन्तीति प्रयोगो लेट्लकारः केवलं वरएवतत्रकर्ता ॥ कवचिद्देशे वरःस्वाकस्थिताया वध्वाः केशान्किंचिदिव कर्ततीति-शिष्टाचारः श्रूयते। परन्तु लौकिकविशेधात् तन्नयुक्तमिति भाति ॥

गत्वा 'ॐ प्रतियुतो वरुणस्य पाशः प्रत्यस्तो वरुणस्य पाशः' इत्यपोऽवगाह्य उत्तीर्यान्योऽन्यमलङ्कृत्य, रक्तानि वासाꣳसि परिधाय, अहतानि वा, द्विराचम्य गृहमागत्य, पादौ प्रक्षाल्य, आचम्य, स्थालीपाकं कुर्यात् ।।छ ।। अथ कर्ता प्राणानायम्य करिष्यमाणस्थालीपाककर्मणो निर्विघ्नतासिद्ध्यर्थं गणपतिपूजां करिष्ये' इति सङ्कल्प्य तत्कृत्वा, पुनः प्राणानायम्य 'पञ्चमेऽहनि स्थालीपाकहोमं कर्तुं शान्त्यर्थमित्यादि स्वस्तिपुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, स्थालीपाककर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, अग्निः प्रीयतामिति विशेषः, प्रोक्षणान्तं कृत्वा, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह पञ्चमेऽहनि आग्नेयस्थालीपाकं करिष्ये' इति सङ्कल्प्य, स्थण्डिलोल्लेखनादिकं कृत्वा, तमेवौपासनाग्निं प्रतिष्ठाप्य 'आग्नेयस्थालीपाकहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ अग्निर्मूर्धा नामाग्निः अग्निर्देवता अग्निःस्विष्टकृत् आज्यस्य मान्त्रवर्णिक्यो देवता' इत्यादि सङ्कल्प्य, अन्वाधानाद्याप्रणीताभ्यः कृत्वा, तण्डुलान्निर्वपति ।। 'ॐ देवस्य त्वा ... हस्ताभ्यां अग्नये जुष्टं निर्वपामि' इति त्रिस्तूष्णीं चतुर्थम् ।। 'ॐ देवस्य त्वा ... हस्ताभ्यां अग्नये वो जुष्टं प्रोक्ष्यामि' इति सकृन्मन्त्रेण द्विस्तूष्णीं प्रोक्ष्य, त्रिः प्रक्षाल्य, स्थाल्यां तिरः पवित्रं निधाय, अपः पयो वा आनीय अग्नावधिश्रित्य, तिरः पवित्रं तण्डुलानोप्य, अधिश्रयति, अथाज्यं निरूप्य, पर्यग्निकरणाद्यभिघारणान्तं कुर्यात् ।। अथ स्रुवेण दर्व्यामुपस्तीर्य, पूर्वार्धाच्चरोरवदाय, अपरार्धादवद्यत्यभिघारयति प्रत्यनक्ति, पुरस्तात्स्रुवाहुतिं हुत्वा ।। ॐ अग्निमूर्धा दिवः ककुत्पतिः पृथिव्या अयम् ।। अपाꣳरेताꣳसि जिन्वतोꣳ३भुवो यज्ञस्य रजसश्च नेता यत्रानियुद्भिः सचते शिवाभिः ।। दिवि मूर्धानं दधिषे सुवर्षां जिह्वामग्ने चकृषे हव्यवाहꣳस्वाहा ।। अग्नय इदम् ।। अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय व्याहृतीर्हुत्वा, स्विष्टकृदादि सर्वं

पूर्ववत् ।। इति स्थालीपाकप्रयोगः ।।छ ।।

अथ समारोपणम् ।। पालाशीमाश्वत्थीमौदुम्बरीं खादिरीं वा समिधमादाय, पत्न्यान्वारब्धः 'ॐ अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।। तं जानन्नग्नं आरोहाथानो वर्धयारयिम्' इति समारोप्य, अथास्तमित आदित्ये स्थण्डिलोल्लेखनादिकं कृत्वा, लौकिकाग्निं प्रतिष्ठाप्य, आजुह्वान उद्बुध्यस्वाग्न इति द्वाभ्यामारोपितसमिधमग्नौनिधाय, सायमौपासनं हुत्वा, समारोपयेत् ।। अथ वधूवरावन्योन्यमलङ्कृत्य, वाग्यतौ शय्यां गच्छतः ।। तत्र वरो वधूमभिमन्त्रयते 'ॐ सुमङ्गलीरियं वधूरिमाꣳसमेत पश्यत ।। सौभाग्यमस्यै दत्वा याथास्तं विपरेतन' इति ।। अथैतस्याः सर्वसुरभिपुष्पमालाः शिरसि युनक्ति 'ॐ सन्नान्मः सꣳहृदयानिवः ।। सन्नाभिः सन्तनुत्वचः ।। सन्त्वा कामस्य योक्त्रेण ।। युञ्जाम्यविमोचनाय' इति ।। इति पञ्चमेऽहनि स्थालीपाकादि प्रयोगः ।।छ ।।

अथ गृहप्रवेशः ।। तत्रादौ कालनिर्णयः निर्णयसिन्धौ ।। सङ्ग्रहे 'विवाहमारभ्य वधूप्रवेशो युग्मे तिथौ षोडशवासरान्तः ।। ऊर्ध्वं ततोऽब्दे युजि पञ्चमाब्दादतः परस्तान्नियमो न चास्ति' ।। नारदः 'समवर्षे समे मासि यत्र नारी गृहं व्रजेत् ।। आयुष्यं हरते भर्तुः सा नारी मरण व्रजेत्' ।। सङ्ग्रहे 'विवाहादिचतुर्थ्यन्तं षोडशे दिन एव वा ।। युग्माश्च तिथयो वृद्धिप्रवेशे मङ्गलप्रदाः ।। षष्ठेऽष्टमे वा दशमे दिने वा विवाहमारभ्य वधूप्रवेशः ।। पञ्चाङ्गसंशुद्धदिनं विनाऽपि विधेयमाहुर्मुनयः प्रशस्तम् ।। मासदोषश्चादिवर्षे वर्षदोषो द्वितीयके ।। गृहप्रवेशे वैवाहे न चतुर्न च षष्ठके ।। वधूप्रवेशः प्रथमे च वर्षे तृतीयवर्षेऽपि शुभप्रदः स्यात् ।। द्वितीयवर्षेऽप्यथवा चतुर्थे षष्ठे प्रवेशोऽपि च भर्तृनाशः ।। नृपप्रवेशोऽपि न रात्रिकाले वधूप्रवेशो हि दिवा न शस्तः ।। दिवा च रात्रौ च गृहप्रवेशं प्रवेशभेषु प्रवदन्ति सन्तः' ।। युग्मवर्षनिषेधस्तु पञ्चमाब्दादर्वाग्वेदितव्यः, अत ऊर्ध्वं न दोषः ।। तथा हि ।। 'उद्वाहाच्चतुरष्टषट्दशदिने श्रेष्ठं वधूवेशनं मासेष्वष्टमषट्चतुर्थदशके श्रीसम्पदायुःक्षयम् ।। वर्षेषु द्विचतुष्टयं भयंकरं पञ्चाब्दमुख्यं परे वर्षाः सर्वमनोहराः शुभकारा वध्वाः प्रवेशे शुभाः ।। मासेऽधिके शून्यहरिप्रसुप्ते द्वितीयवर्षे प्रतिशुक्रमूढे ।। नवोढजा यन्न क[1]रोति मन्दिरं विवाह एतन्मुनयो वदन्ति' ।। लल्लः 'स्वभवनपुरप्रवेशे देशानां विप्लवे तथोद्वाहे ।। नववध्वा गृहगमने प्रतिशुक्रविचारणा नास्ति' ।। माण्डव्यः 'नित्ययाने गृहे जीर्णे प्राशनान्तेषु सप्तसु ।। वधूप्रवेशे माङ्गल्ये न मौढ्यं गुरुशुक्रयोः ।। कश्यपेषु वसिष्ठेषु भृग्वत्र्यङ्गिरगौतमाः ।। भरद्वाजेषु वत्सेषु प्रतिशुक्रो न विद्यते' ।। बादरायणः तस्य कालमाह 'नीहारांशुघनो-त्तरा-दिति-गुरु-ब्रह्मा-नुराधा-श्विनी-शक्रा-हस्कर-वायु-विष्णु-वरुण-त्वाष्ट्रे प्रशस्ते तिथौ ।। कुम्भाजालिगते रवौ शुभकरे प्राप्तोदये भार्गवे जीवज्ञोशनसां दिने नववधूवेश्मप्रवेशः शुभः' ।। (नीहारांशुघनः = मृगशिरः) ।। व्यवहारतत्वे 'पौष्णात्कभाच्चश्वणाच्च तथाच युग्मे हस्तत्रये मूलमघोत्तरासु ।। पुष्ये च मैत्रे च वधूप्रवेशो

---

[1] करोति = प्रविशतीत्यर्थः ।।

रिक्तेतरे व्यर्कि कुजे च शस्तः' ॥ पौष्णाद्युग्मे=रेवत्यश्विन्यौ ॥ काद्युग्मे=रोहिणी मृगशिरसी ॥ श्रवणाद्युग्मे=धनिष्ठाशतभिषजौ ॥ अनेन भरणीकृत्तिकार्द्राश्लेषपूर्वाफल्गुनीविशाखापूर्वाषाढप्रौष्ठपदा इत्यष्टौ वर्ज्याः, अन्याः शुभाः इति फलितम् ॥ प्रयोगदर्पणे 'वधूप्रवेशः प्रथमे तृतीये शुभप्रदः पञ्चमकेऽथवाऽह्नि ॥ द्वितीयके वाऽपि चतुर्थके वा षष्ठे वियोगामयदुःखदः स्यात् ॥ शुभांशे शुभवारेषु शुभदृष्टे स्थिरांशके ॥ दिवाप्रवेशः सम्पत्यै निशि वा शोभनो भवेत्' ॥ अत्र वर्ज्यमासानाह बृहस्पतिः 'कुलीरकन्याकुम्भेषु दिनेशे न विशेद्गृहम् ॥ ग्रामं वा नगरं वाऽपि पत्तनं वा नराधिपः' इति ॥ ज्योतिःप्रकाशे 'वामे शुक्रे नवोढायाः सुखं हानिः स्वदक्षिणे ॥ धन धान्यं च पृष्ठस्थे सर्वनाशः पुरस्थिते' इति ॥ ग्रामान्तरप्रवेशे शुक्रविषये विशेषो वक्ष्यते 'पृष्ठस्थं दक्षिणस्थं वा भृगुं कृत्वा विशेत्सदा ॥ पुरतो वामतो वाऽपि प्रतिशुक्रं न चाविशेत्' ॥ इति निर्णयः ॥छ ॥

अथ प्रयोगः ॥ स्थालीपाकहोमानन्तरं शुभे दिने वधूप्रवेशं कुर्यात् ॥ यथा ॥ पत्न्याऽन्वारब्ध औपासनाग्निं समारोप्य हस्ते गृहीत्वा, बन्धुजनैः सह मङ्गलघोषपुरस्सरं स्वगृहं गत्वा, देहल्या वहिरुपविश्य, आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'मम सर्वसौभाग्यप्राप्त्यर्थं समस्तमाङ्गल्यप्राप्त्यर्थं अनया नवोढया वध्वा सह गृहप्रवेशं करिष्ये ॥ तदङ्गत्वेन गणपतिक्षेत्रपालवास्तोष्पतिपूजां करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, क्षेत्रस्य पतिना वयमिति क्षेत्रपालं, वास्तोष्पते वास्तोष्पते इति द्वाभ्यां वास्तोष्पतिं च देहल्यां सम्पूज्य, भद्रान् ग्रहानिति गृह प्रविश्य, अथैनां कल्याणीं वाचं वाचयति 'प्रजावती पशुमती' इति ॥ एनामानडुहे चर्मण्युपवेशयति 'इह गावः प्रजायध्वम्' इत्युपविश्य, गणपतिस्मरणपूर्वकं लक्ष्मीं ग्रहदेवतां च सम्पूज्य, गृहप्रवेशाङ्गपुण्याहं कुर्यात् ॥ आचम्य प्राणानायम्य, देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह गृहप्रवेशाङ्गभूतं स्वस्तिपुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, गणपतिं सम्पूज्य, अस्य गृहप्रवेशकर्मणः पुण्याहं स्वस्त्यृद्धिमिति वाचयित्वा, प्रजापतिः प्रीयतामिति विशेषः ॥ ब्राह्मणान् सम्पूज्य, आशिषो वाचयेत् ॥ इति गृहप्रवेशप्रयोगः ॥छ ॥

**अथ वैश्वदेवरम्भः बलिहरणविधिश्च** ॥ [illegible] दिनादर्वा[illegible]प्रवेशः तदा गृ[illegible]प्रवेशानन्तरं वैश्वदेवारम्भः ॥ दशदिना[illegible]गतश्चेत् श्वशुरगृह एव वैश्वदेवं कृत्वा, पुनः कालान्तरेगृहप्रवेशं कुर्यात ॥ अत्र सूत्रम् 'प[illegible] स्थालीपाक होमानन्तरं शोभूते वैश्वदेवेन प्रतिपद्यते' इति ॥ प्रयोगरत्ने 'अथ दशमेऽहनि जुहुयाद्विश्वेदेवा

इति द्वाभ्याम्' इति ॥ कारिकायाम् 'दशमेऽह्नि सम्प्राप्ते वैश्वदेवं तु नैत्यकम्॥ आरभेत तथा श्राद्धं [1]मत्स्यस्यानन्तरेऽह्नि वा ॥ षष्ठेऽह्नि वैश्वदेवं चेत्कृष्णपक्षे पितृक्रिया' इति ॥ कृष्णपक्षे पितृक्रिया इत्यनेन मासिश्राद्धं कर्तव्यमिति विवक्षितम्॥ गृह्यसूत्रेऽपि 'श्वोभूते वैश्वदेवेन प्रतिपद्यते मासिश्राद्धेन चापरपक्षः' इति ॥ विवाहात् षष्ठेऽष्टमे दशमेऽह्नि वा वैश्वदेवारम्भः ॥ अस्य विवाहशेषत्वान्नान्दीश्राद्धं कृताकृतम् ॥छ ॥ अथ षष्ठेऽहनि प्रातरौपासनान्तं नित्यकर्म कृत्वा, सपत्नीकः कर्ता पवनादिकं कृत्वा, गणपतिं सम्पूज्य 'वैश्वदेवारम्भं कर्तुं पुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, वैश्वदेवारम्भकर्मणः पुण्याहं स्वस्ति ऋद्धिमिति वाचयित्वा विश्वेदेवाः प्रीयन्तामिति विशेषः ॥ अथ स्थण्डिलोल्लेखनादिलौकिकाग्निं प्रतिष्ठाप्य, आजुह्वान उद्बुध्यस्वाग्न इत्यारोपितसमिधमग्नावाधाय, प्राणानायम्य देशकालौ सङ्कीर्त्य 'अनया नवोढया वध्वा सह वैश्वदेवारम्भहोमं करिष्ये, वैश्वदेवारम्भहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ आवसथ्यो नामाग्निः विश्वेदेवा देवता चरुर्हविः अग्निःस्विष्टकृत् आज्यस्य मान्त्रवर्णिक्यो देवताः' इत्यादि सङ्कल्प्य, अन्वाधानाद्याप्रणीताभ्यः कृत्वा, विश्वेभ्यो देवेभ्यो जुष्टं निर्वपामीति चरुन्निरूप्य प्रोक्ष्य, अग्निमुखान्तं कृत्वा पक्वाज्जुहोति ॥ ॐ विश्वेदेवा ऋतावृध ऋतुभिर्हवनः श्रुतः ॥ जुषन्तां युज्यं पयों३विश्वेदेवाः श्रृणुतेम्ँहवं मे ये अन्तरिक्षे य उपद्यविष्ठ ॥ ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वँस्वाहा ॥ विश्वेभ्यो देवेभ्य इदम् ॥१॥ अथ स्विष्टकृतमवदाय अन्तःपरिधौ निधाय, देवकृतस्यैनस इत्यादिभिरष्टौ समिध आदधाति इति धर्मप्रश्न उक्तम् ॥ यथा ॥ ॐ देवकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥१॥ ॐ मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥२॥ ॐ पितृकृतस्यैनसो-ऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥३॥ ॐ आत्मकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥४॥ ॐ अन्यकृतस्यैनसोऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥५॥ ॐ अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा ॥ अग्नय इदम् ॥६॥ ॐ यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ अग्नय इदम् ॥७॥ ॐ यत्स्वपन्तश्च

१ मब्स्यस्येति = मत्स्यग्रहणोपलक्षितस्य पञ्चमदिनस्येत्यर्थः ॥

जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा ॥ अग्नय इदम् ॥८॥ इत्यष्टसमिधो हुत्वा, चरुशेषं पात्रान्तर आनीय, प्रभूतमाज्यमानीय हस्तेनैव जुहोति ॥ ॐ अग्नये स्वाहा ॥ अग्नय इदम् ॥१॥ ॐ सोमाय स्वाहा ॥ सोमायेदम् ॥२॥ ॐ ध्रुवाय स्वाहा ॥ ध्रुवायेदम् ॥३॥ ॐ ध्रुवाय भूमाय स्वाहा ॥ ध्रुवाय भूमायेदम् ॥४॥ ॐ ध्रुवक्षितये स्वाहा ॥ ध्रुवक्षितय इदम् ॥५॥ ॐ अच्युतक्षितये स्वाहा ॥ अच्युतक्षितय इदम् ॥६॥ ॐ ईशानाय स्वाहा ॥ ईशानायेदम् ॥७॥ ॐ जयन्ताय स्वाहा ॥ जयन्तायेदम् ॥८॥ ॐ धर्माय स्वाहा ॥ धर्मायेदम् ॥९॥ ॐ घर्मरुचये स्वाहा ॥ घर्मरुचय इदम् ॥१०॥ ॐ धान्वन्तराय स्वाहा ॥ धान्वन्तरायेदम् ॥११॥ ॐ विद्यायै स्वाहा ॥ विद्याया इदम् ॥१२॥ ॐ अम्बिकायै स्वाहा ॥ अम्बिकाया इदम् ॥१३॥ ॐ हरये स्वाहा ॥ हरय इदम् ॥१४॥ ॐ गणेभ्यः स्वाहा ॥ गणेभ्य इदम् ॥१५॥ ॐ गणपतिभ्यः स्वाहा ॥ गणपतिभ्य इदम् ॥१६॥ ॐ पर्षद्भ्यः स्वाहा ॥ पर्षद्भ्यः इदम् ॥१७॥ ॐ विश्वेभ्यो देवेभ्यः स्वाहा ॥ विश्वेभ्यो देवेभ्य इदम् ॥१८॥ ॐ साध्येभ्यो देवेभ्यः स्वाहा ॥ साध्येभ्यो देवेभ्य इदम् ॥१९॥ ॐ सर्वेभ्यो देवेभ्यः स्वाहा ॥ सर्वेभ्यो देवेभ्य इदम् ॥२०॥ ॐ सर्वाभ्यो देवताभ्यः स्वाहा ॥ सर्वाभ्यो देवताभ्य इदम् ॥२१॥ ॐ भूः स्वाहा ॥ अग्नय इदम् ॥२२॥ ॐ भुवः स्वाहा ॥ वायव इदम् ॥२३॥ ओꣳसुवः स्वाहा ॥ सूर्यायेदम् ॥२४॥ ॐ भूर्भुवःसुवः स्वाहा ॥ प्रजापतय इदम् ॥२५॥ इति पञ्चविंशत्याहुतीर्हुत्वा, ‘ॐ [1]अग्नये स्विष्टकृते स्वाहा ॥ अग्नये

[1] अयं स्विष्टकृधोमः नित्य वैश्वदेवहोमे एव, उत्तरत्रास्मिन् स्विष्टकृद्धोमस्याभिधानात् ॥

स्विष्टकृत इदम्' इतीशान्यभागे हुत्वा, बलिहरण कुर्यात् ॥छ ॥ अथाग्नेः पश्चाद्भूमौ चतुरस्रमण्डलं कृत्वा, तत्तत्स्थानेषु पत्न्या गन्धपुष्पाक्षतैः परिसमूह्य पर्युक्ष्य अभ्यर्चितेषु स्वयं पुरस्तादुपरिष्टाच्चोभयतः परिषेकं कृत्वा, वक्ष्यमाणप्रकारेण बलिहरणं कुर्यात् ॥ तत्रादौ चतुर्दिक्षु मध्ये च पञ्च बलयः ॥ ॐ धर्माय स्वाहा, ॐ अधर्माय स्वाहा, ॐ कद्रुवे नागमात्रे स्वाहा, ॐ सर्पेभ्यः स्वाहा, ॐ ब्रह्मणे स्वाहा ॥५॥ इति पञ्च ॥ अथ ईशानमारम्य प्रदक्षिणाकारेण एकविंशतिबलयः ॥ ॐ अचलायै देव्यै स्वाहा, ॐ वास्तुपाल्यै सगणायै स्वाहा, ॐ अद्भ्यः स्वाहा, ॐ वरुणाय स्वाहा, ॐ प्रजापतये स्वाहा, ॐ परमेष्ठिने स्वाहा, ॐ ऋषभाय स्वाहा, ॐ रुद्राय स्वाहा, ॐ रुद्राण्यै स्वाहा, ॐ ओषधिवनस्पतिभ्यः स्वाहा, ॐ रक्षोदेवजनेभ्यः स्वाहा, ॐ कामाय स्वाहा, ॐ भगाय स्वाहा, ॐ श्रियै स्वाहा, ॐ विष्णवे स्वाहा, ॐ ग्रहाय स्वाहा, ॐ ग्रहराजाय स्वाहा, ॐ धनधान्याभ्याᳫंस्वाहा, ॐ वैश्रवणाय स्वाहा, ॐ श्रियै स्वाहा, ॐ पुष्ट्यै स्वाहा ॥२१॥ इति एकविंशतिः ॥ पुनरपीशानादि पूर्ववत्पञ्चदश ॥ ॐ उलूखलमुसलाभ्याᳫंस्वाहा, ॐ दृषदुपलाभ्याᳫंस्वाहा, ॐ समूहन्यै देव्यै स्वाहा, ॐ गृह्याभ्यः स्वाहा, ॐ अवसानेभ्यः स्वाहा, ॐ अवसानपतिभ्यः स्वाहा, ॐ सर्पदेवजनेभ्यः स्वाहा, ॐ सर्वभूतेभ्यः स्वाहा, ॐ अन्तरिक्षाय स्वाहा, ॐ अवान्तरिक्षाय स्वाहा, ॐ धात्रे स्वाहा, ॐ विधात्रे स्वाहा, ॐ भूत्यै स्वाहा, ॐ प्रभूत्यै स्वाहा, ॐ यदेजति जगति यच्च चेष्टति नाम्नो भागोऽयं नाम्ने स्वाहा ॥१५॥ इति पञ्चदश ॥ अथ मण्डलमध्ये प्रागपवर्गाश्चचतुस्त्रिंशद्बलयः ॥ ॐ जेष्ठाभ्यांᳫंस्वाहा, ॐ करस्कराभ्याᳫंस्वाहा, ॐ श्रियै स्वाहा, ॐ विष्णवे स्वाहा, ॐ रुद्राय स्वाहा, ॐ पशुभ्यः स्वाहा, ॐ पशुपतये स्वाहा, ॐ वास्तोष्पतये स्वाहा, ॐ पृथिव्यै स्वाहा, ॐ अन्तरिक्षाय स्वाहा, ॐ दिवे स्वाहा, ॐ सूर्याय स्वाहा, ॐ चन्द्रमसे स्वाहा, ॐ नक्षत्रेभ्यः स्वाहा, ॐ अद्भ्यः स्वाहा, ॐ ओषधीभ्यः स्वाहा, ॐ वनस्पतिभ्यः स्वाहा, ॐ चराचरेभ्यः स्वाहा, ॐ परिप्लवेभ्यः स्वाहा, ॐ सरीसृपेभ्यः स्वाहा, ॐ देशेभ्यः स्वाहा, ॐ कालेभ्यः स्वाहा, ॐ लोकेभ्यः स्वाहा, ॐ वेदेभ्यः स्वाहा, ॐ देवेभ्यः स्वाहा, ॐ ऋषिभ्यः स्वाहा, ॐ वसुभ्यः स्वाहा, ॐ रुद्रेभ्यः

स्वाहा, ॐ आदित्येभ्यः स्वाहा, ॐ इन्द्राय स्वाहा, ॐ बृहस्पतये स्वाहा, ॐ प्रजापतये स्वाहा, ॐ ब्रह्मणे स्वाहा, ॐ आयतनवते स्वाहा ॥३४॥ इति चतुस्त्रिंशत् ॥ अथ दक्षिणभागे दर्भेषु प्राचीनावीती ॥ ॐ पितृभ्यः स्वधा नमः स्वाहा, ॐ पितामहेभ्यः स्वधा०, ॐ प्रपितामहेभ्यः स्वधा०, ॐ मातृभ्यः स्वधा०, ॐ पितामहीभ्यः स्वधा०, ॐ प्रपितामहीभ्यः स्वधा०, ॐ मातामहेभ्यः स्वधा०, ॐ मातुः पितामहेभ्यः स्वधा०, ॐ मातुः प्रपितामहेभ्यः स्वधा०, ॐ मातामहीभ्यः स्वधा०, ॐ मातुः पितामहीभ्यः स्वधा०, ॐ मातुः प्रपितामहीभ्यः स्वधा नमः स्वाहा ॥ अथ अप उपस्पृश्य यज्ञोपवीती, उदग्दिशि ॥ ॐ नमो रुद्राय पशुपतये स्वाहा ॥ अथ दिक्षु ॥ ॐ प्राच्यै दिशे स्वाहा, ॐ दक्षिणायै दिशे स्वाहा, ॐ प्रतीच्यै दिशे स्वाहा, ॐ उदीच्यै दिशे स्वाहा, ॐ ऊर्ध्वायै दिशे स्वाहा, ॐ अधरायै दिशे स्वाहा ॥ आग्नेयादिविदिक्षु ॥ ॐ अग्नये स्वाहा, ॐ निर्ऋतये स्वाहा, ॐ वायवे स्वाहा, ॐ ईशानाय स्वाहा ॥ उदग्दिशि ॥ 'ॐ ये भूताः प्रचरन्ति दिवा बलिमिच्छन्तो वितुदस्य प्रेष्याः ॥ तेभ्यो बलिं पुष्टिकामो हरामि मयि पुष्टिं पुष्टिपतिर्दधातु स्वाहा' इति दिवा ॥ [1]'नक्तं बलिमिच्छन्त' इति नक्तम् ॥ 'ॐ नमो रुद्राय भौमाय स्वाहा' इति ॥ अथ प्रक्षालितपाणिपाद अप आचम्य, अग्नेः पश्चाद्दर्भेषूपविश्य, दर्भान्धारयमाणः प्राणानायम्य, गायत्रीं दशवारं जपित्वा, वेदादीन् जपित्वा ॥ ॐ अग्निर्मूर्धा दिवः ... जिन्वति ॥ 'ॐ यद्देवादेवहेडनम्' इति सानुषङ्गं कूष्माण्डीयं 'नमो ब्रह्मण' इति त्रिरनूच्य, अप उपस्पृश्य, 'देवयज्ञेन यक्ष्ये' इति सङ्कल्प्य ॥ ॐ विद्युदसि विद्य मे पाप्मानमृतात्सत्यमुपैमि शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य ॥ परिसमूह्य, 'ॐ अदितेऽनुमन्यस्व' इत्यादिभिः परिषिच्य, 'ॐ देवेभ्यः स्वाहा ॥ देवेभ्य इदम्' इति समिधं हुत्वा, 'ॐ अदितेऽन्वमꣳस्थाः' इत्यपसव्यं परिषिच्य, यज्ञोपवीती ॥ भूतयज्ञेन यक्ष्ये ॥ 'ॐ विद्युदसि०'

[1] नक्तमिति-रात्रौ वैश्वदेवबलिहरणयोः नित्यं करणपक्षमाश्रिवत्योक्तं ॥ समानतन्त्रेण दिवैव करण पक्षेतु दिवानक्त, - इति यथाध्ययन पाठः ॥

इत्युक्त्वा, अग्नेरुत्तरतः उत्तराग्रान् दर्भान् सङ्स्तीर्य, पूर्ववत्परिषिच्य, 'भूतेभ्यो नम' इत्यन्नं फलं पुष्पं वा दत्वा, पुनः परिषिच्य, 'ॐ वृष्टिरसि०' इत्यपः स्पृष्ट्वा, इति भूतयज्ञः ।। मनुष्ययज्ञेन यक्ष्ये ।। ॐ विद्युदसि० ।। ॐ मनुष्येभ्योहन्ता, इत्यतिथये अन्नं दत्वा अभावे भूमौ वा दद्यात्। ॐ वृष्टिरसि० ।। एष मनुष्ययज्ञः ।। ब्रह्मयज्ञेन यक्ष्ये ।। पूर्ववत् ।। ततः 'इष्टेभ्यः स्वाहा' इत्यादिभिरष्टभिर्हुत्वा, स्विष्टकृत्प्रभृति वरदानान्तं कृत्वा, 'अनेन वैश्वदेवबलिहरणकर्मणा श्रीपरमेश्वरः प्रीयताम् ।। दशममहस्सञ्ज्ञकश्राद्धं कृताकृतम् ।। 'श्राद्धं कुर्वीत वा न वा' इति कुमारस्वामिकारिकावचनात् ।। ततो वरः सपत्नीकः वस्त्राभरणादिभिरलङ्कृत्य बाह्यदेवतायतनानि गत्वा देवताः सम्पूज्य गृहं गत्वा वृद्धान्नमस्कृत्य प्रतोदमिषुं च ब्राह्मणेभ्यो दत्वा नमस्कुर्यात् ।। इति वैश्वदेवारम्भबलिहरणविधिः ।।छ ।।

अथ कुलदेवताउत्थापनम् ।। कन्याविवाहे चतुर्थीहोमानन्तरं यथावकाशं वरविवाहे औदुम्बपूजानन्तरं यथावकाशं ।। उपनयने सुश्रवसः पूजानन्तरं यथावकाशं देवकोत्थापनं कुर्यात् ।। तत्र कालः 'समे च दिवसं नेष्टं मुक्त्वा पञ्चमसप्तमौ' इति ।। (अस्यार्थः ।। समे षष्ठं दिनं नेष्टं ।। अन्यानि श्रेष्ठानि, विषमे पञ्चमसप्तमौ श्रेष्ठौ अन्ये वर्ज्याः देवप्रतिष्ठादिनादारभ्येत्यर्थः) ।। इत्युक्तशुभदिने वरः सपत्नीको मण्डपमध्य उपविश्य आसनप्राणायामौ कृत्वा 'मम विवाहाङ्गत्वेन स्थापितदेवकोत्थापनं मण्डपोद्वासनं च करिष्ये' इति सङ्कल्प्य, तदङ्गत्वेन पुण्याहं वाचयित्वा, कुलदेवतां सम्पूज्य नमस्कारान्तं कृत्वा 'ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे ।। उपप्रयन्तु मरुतः सुदानवः ।। इन्द्र प्राशूर्भवासचा' इत्युद्वास्य, ब्राह्मणान् सम्पूज्य नमस्कृत्य, आशीर्गृह्णीयात् ।। इति कुलदेवतोद्वासनम् ।।छ ।।

अथ विवाहप्रायश्चित्तप्रकरणम् ।। अथ यदि विवाहहोमानन्तरमौपासनारम्भात्प्रागग्निरुद्वातश्चेत्पुनर्विवाहहोम

एवाग्निसिद्ध्यर्थं कार्यः ॥ अथ विवाहव्रतमध्येऽग्निरुद्वातः तदा उपनयनप्रकरणोक्तं अग्न्युद्वातप्रा[१]श्चित्तं कार्यम् ॥छ ॥

---

[१] अत्र प्रसङ्गात् कानिचित्प्रायश्चित्तानि विवाहकाण्डे उपयुक्तानि लिख्यन्ते ॥ मङ्गलवस्त्रनाशदाहच्छेदेषु = ''विवाहात्सप्तमादन्तः धृतवस्त्रं विनश्यति ॥ दह्यते छिद्यते वाऽपि दम्पत्योर्दुःखमाप्नुयात् ॥१॥ तद्दोषपरिहारार्थं प्रायश्चित्तं कथं भवेत् ॥ सत्वं त्वमग्न मन्त्राभ्यां प्राजापत्येन होमयेत् ॥२॥ आवहन्तीति मन्त्रेण आप्यायस्वेति मन्त्रतः ॥ गायत्र्याऽष्टशतं हुत्वा मिन्दाव्याहृतिभिर्हुनेत् ॥३॥ तद्वस्त्रं द्विजवर्याय दत्वाऽन्यद्धारयेद्बुधः'' इति गृह्यसङ्ग्रहे ॥*॥ शुभिकास्रजादिदाहादिषु = विश्वामित्रकारिकायाम् ''विवाहव्रतमध्ये तु स्रजादिर्दह्यते यदि ॥ मूषकैश्छिद्यते चौरैर्हियते क्लिद्यतेऽपि वा ॥१॥ तद्दोषपरिहातार्थं प्रायश्चित्तं कथं भवेत् ॥ पुण्याहवाचनं कृत्वा कलशं स्थापयेततः ॥२॥ लक्ष्मीसूक्तश्रीसूक्ताभ्यां कलशं चाभिमन्त्रयेत् ॥ स्थण्डिलोल्लेखनं कृत्वा प्रतिष्ठाप्य हुताशनम् ॥३॥ अन्वाधानाद्यग्निमुखं कृत्वा होमं समाचरेत् ॥ त्र्यायुषेतिमन्त्रेण मृत्युसूक्तेन चैव हि ॥४॥ त्र्यम्बकेतिमन्त्रेण तिलहोमं समाचरेत् ॥ गायत्र्याऽष्टशतं हुत्वा होमशेषं समापयेत् ॥५॥ कुर्वीत मङ्गलस्नानं कलशाद्भिः ततः परम् ॥ नवं स्रजादि सम्पूज्य मातृहस्तेन धारयेत् ॥६॥ नीराजनं च दम्पत्योः ब्राह्मणाशीर्वचस्तथा ॥ धृतस्रजादि सन्त्यक्त्वा ब्राह्मणाय प्रदापयेत् ॥७॥ तिलदानं प्रकुर्वीत पश्चादाज्यावलोकनम्'' इति प्रयोगतिलके ॥*॥ व्रतसमिधनाशे=प्रयोगसङ्ग्रहे ''शरसङ्घ्याादिनादन्तः कटमध्यस्थितेन्धनम् ॥ नश्यते भ्रश्यते चैव दह्यते वाऽवलुम्प्यते ॥१॥ तत्र कर्म कथं कुर्यात् तस्मिन्नग्नौ वरः स्वयम् ॥ प्रायश्चित्ताहुतीः कुर्यात् मन्त्रैरेतैः स्रुवेण तु ॥२॥ आभिर्गीर्भिस्त्वनाज्ञातं यत्पाकत्रा मनस्त्विमम् ॥ पाहिनस्तन्तुमत्याद्या महाव्याहृतयस्ततः ॥३॥ मिन्दाद्वयं हुनेतत्र वह्नौ सप्तदशाहुतीः ॥ यज्ञाङ्गमिन्धनं चान्यं नवं पूर्वोक्तलक्षणम् ॥४॥ कार्पाससूत्रेणावेष्ट्य कटमध्ये क्षिपेत् पुनः ॥ कर्मशेषं चरेद्विद्वान् चतुर्थ्यन्तं यथाविधि ॥५॥'' ''नष्टा दग्धा च भग्ना वा स्थूणादेशे स्थिता समित् ॥ पूर्वोक्तमन्त्रैर्जुहुयात् प्रायश्चित्ताहुतिं शुचौ ॥१॥ कांस्यपात्रे घृतं दत्वा कृच्छ्रमेकं समाचरेत् ॥ व्रतस्य च समाप्तत्वात् मास्तु चान्या समित्ततः ॥२॥ नीराजनादिकं कार्यं शेषं कर्म समाचरेत्'' इति ॥*॥ उपवीतनाशे = विश्वप्रकाशकारिकायाम् ''उपवीतं विनष्टं चेत् विवाहोपनयादिषु ॥ (शुभकर्मसु इति शेषः) ॥ प्राणायामशतं कृत्वा ब्रह्मसूत्रं च धारयेत् ॥१॥ गायत्र्याऽष्टशतं हुत्वा शेषं कर्म समाचरेत्'' इति ॥ अन्यच्च ''यज्ञसूत्र द्विजातीनां निशायां त्रुटितं यदि ॥ प्रदीपसन्निधौ धार्यं परेद्युरपि धारयेत् ॥१॥'' इति ॥*॥ पाणिग्रहणात् परं विवाहहोमात् पूर्वं यदि वधू रजस्वला तत्र प्रायश्चित्तम्=गृह्यसङ्ग्रहे ''पाणिग्रहणतः पश्चाद्धोमकाल उपस्थिते ॥ यदि पुष्पवती नारी कर्म कुर्यात्कथं बुधः ॥१॥ वस्त्रपूतेन तोयेन स्नापयित्वोदके स्थिताम् ॥ वस्त्रमन्यत्परीधाप्य पुनः संस्नाप्य तां ततः ॥२॥ यजु पवित्रैरब्लिङ्गैः सावित्र्या पूत वारिणा ॥ (यजुःपवित्रैः शुद्धिदैः मन्त्रैः अब्लिङ्गैः आपोहिष्टादित्रिभिः इत्यर्थः) ॥ पावमान्या च तां शुद्धां वासो भूषाद्यलङ्कृताम् ॥३॥ निवेश्य कक्ष्यान्तरे तां शेषं कर्म समाचरेत् ॥ रजोदोषे तु निर्वृते यथा विधि पतिः स्वयम् ॥४॥ प्रायश्चित्तं तत्र हुनेत् महाव्याहृतिभिस्तथा ॥ मिन्दातन्तुमतीभिश्च व्याहृतीभिस्तथैव च ॥५॥ अनाज्ञातेन च पुनः गायत्र्याऽष्टशतं हुनेत् ॥ प्रधानहोमे निर्वृत्ते मलवद्वाससी भवेत् ॥६॥ त्र्यहे पर्यवेतेऽथ शेषं कर्म समाचरेत् ॥ प्रायश्चित्तं तु पूर्वोक्तं कृत्वा सर्वमतन्दितः ॥७॥'' इति ॥*॥ व्रतमध्ये सूतकप्राप्तौ=विश्वामित्रकारिका ''विवाहव्रतमध्ये तु मातापित्रोर्मृतिं विना ॥ अन्यस्मिन् सूतके प्राप्ते चतुर्थ्यवभृतात्पुरा ॥१॥ दम्पत्योः सूतकं नास्ति शुभकार्यं समाचरेत् ॥ मातापित्रोर्मृतौ सत्यां कर्मं कुयात् कथं नर ॥२॥ पूर्ववस्त्रं परित्यज्य परिधायान्यवाससी ॥ होमयेदसगोत्रैस्तु सयं प्रातर्यथाविधि ॥३॥ तदानीमेव सर्वाङ्ग वापयित्वा यथा विधि ॥ दहनादि तयोः कार्यं वरेणैव न संशयः ॥४॥ वह्निं संरक्ष्य तत्रान्यैः होमयेत्पैतृकावधि ॥ ततः स्वयं प्रकुर्वीत नित्यमौपासनाहुतीः ॥५॥ ततस्तद्वह्निमादाय व्रतशेषं समापयेत् ॥ प्रायश्चित्तं प्रकुर्वीत पुण्याहं वाचयेत्ततः ॥६॥ पूर्ववस्त्रं परीधाय कालातिक्रमणं हुनेत् ॥ ममनामादिमन्त्रैस्तु हुनेन्नव घृताहुतीः ॥७॥ यःपावमानीरित्यादि हुनेदष्ट घृताहुतीः ॥

मिन्दाहुती व्याहृतीश्च महतीर्व्याहतीस्तथा ॥८॥ पाह्यादिपञ्चभिर्मन्त्रैः हुनेत् तत्र घृताहुतीः ॥ व्रतान्ते क्रियमाणं यत् स्थालीपाकादिकं तथा ॥९॥ वैश्वदेवादिकं सर्वं यथाविधि समाचरेत् ॥ ब्राह्मणेभ्यो यथाशक्ति गोभूतिलहिरण्यकम् ॥१०॥ कांस्यं वस्त्रं च दद्यात्तु सर्वदोषोपशान्तये ॥ कन्यापित्रोर्मृतिः स्याच्चेत् तत्र कर्म कथं भवेत् ॥११॥ सायं प्रातश्च होमं तु वरः कुर्यादसंशयम् ॥ तच्छावान्ते शुचिः सा तु द्वादशे स्वगृह व्रजेत् ॥१२॥ अतिक्रान्तविधिं कुर्यात् प्रायश्चित्तं तु पूर्ववत् ॥ एवं कृते तु तद्दोषः शान्तिमेष्यति निश्चयम् ॥१३॥ इति ॥*॥ अन्यान्यपि प्रायश्चित्तानि स्मृतिसारसमुच्चय-दशश्लोकीव्याख्यादिषु प्रोक्तानि तत्र एव ज्ञातव्यानि ॥ विस्तरभयान्नेह लिख्यन्ते ॥*॥

अथ कन्यासमर्पणम् ॥ वधूवरयोः पित्रादयः सर्वे सभामध्य उपविश्य वधूवरौ प्राङ्मुखावुपवेश्य वक्ष्यमाणकथापूर्वकं कन्यां वरपित्रादिहस्ते दद्यात् इति शिष्टाचारः ॥ यथा ॥ देवासुरगणैः पूर्वं मथितः क्षीरसागरः ॥ वेत्रं च वासुकिं कृत्वा मन्थानं मन्दरं गिरिम् ॥ मथिते च तदा सिन्धावुत्पन्ना रत्नजातयः ॥ पूर्वं हालाहलं जातं शिवेनाङ्गीकृतं लघु ॥ इत्यादि ॥ अस्यार्थः ॥ पूर्वं देवा असुराश्च सम्भूय वयममृतं सम्पादयाम इति निश्चित्य तदर्थं क्षीरसागरमन्थनं कुर्म इत्यालोच्य मन्दरपर्वतं मन्थानं कृत्वा वासुकिं रज्जुं कृत्वा एकत्र देवा अन्यत्र राक्षसाः स्थित्वा तैः समुद्रे मथ्यमाने तत्र पूर्वं कालकूटविषमुत्पन्नं, तत्तु शिवेन भक्षितं, तत उच्चैश्रवा नामाश्वः उत्पन्नः, स तु देवेन्द्रेण गृहीतः, अथ कल्पद्रुमादयः उत्पन्नाः, ततो नानाविधानि रत्नान्युत्पन्नानि, तत्सर्वं देवा यथायोग्यं गृहीतवन्तः, ततो अमृतकलशं गृहीत्वा धन्वन्तरिर्जातः, तत्तु अमृतं नारायणो मोहिनीरूपेण राक्षसान्वञ्चयित्वा देवानपाययत्, ततो लक्ष्मीर्जाता, राक्षसाःतां दृष्ट्वा इयमस्माकं भवेदिति सन्तुष्टा अभवन्, देवाश्चतदानीमेवं समयं कृतवन्तः, स्वयंवरं कारयित्वा यं वरयेत्तस्य भार्या भविष्यतीत्येवं निश्चित्य सभां कारयित्वा पुष्पमालां तस्या हस्ते दत्वा लक्ष्मीं पुरतः कृत्वा धन्वन्तरिरनुगच्छन् निन्दास्तुतिरूपेण तत्र स्थितदेवतानां गुणावगुणान् वर्णयन् वक्ष्यमाणप्रकारेण लक्ष्मीं उवाच ॥ किमुवाचेत्याकाङ्क्षायामाह ॥ एष ब्रह्माऽतिवृद्धस्त्रिदशपतिरसौ गर्वितः क्षीयतेऽब्जो दिग्वासा नीलकण्ठस्तपति दिनकरश्चच्चलो मातरिश्वा ॥ इत्थं सञ्चिंत्य लक्ष्म्या भ्रमरकलकलारावगीतप्रफुल्ला माला दत्ता मुरारेः सुरतरुकुसुमालङ्कृता पातु युष्मान् ॥ अब्जः=शशाङ्कः ॥ उत्तुङ्गस्तनमण्डलोपरि लसत्प्रालम्बमुक्तामणेरन्तर्बिम्बितमिन्द्रनीलनिकरच्छायानुका-रद्युति ॥ लज्जाव्याजमुपेत्य नम्रवदना स्पष्टं मुरारेर्वपुः पश्यन्ती मुदिता मुदेऽस्तु भवतां लक्ष्मीर्विवाहोत्सवे ॥ कुलं च शीलं च वपुर्वयश्च वित्तं च विद्यां च सनाथतां च ॥ एतान्गुणान् सप्त परीक्ष्य देया कन्या बुधैः शेषमचिन्तनीयम् ॥ कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ॥ बान्धवाः कुलमिच्छन्ति मृष्टान्नमितरे जनाः ॥ कार्येषु मन्त्री करणेषु दासी भुक्तौ तु माता शयनेषु वेश्या ॥ धर्मेषु धर्मी क्षमया धरित्री षट्कर्मयुक्ता कुलमुद्धरित्री ॥ अनया सह धर्मचर्यया पुरुषार्थत्रयसाधनार्हया ॥ मुदमाप्नुहि शाश्वतीः समा भज

धर्मं त्वमनन्यमानसः ।। वसनाभरणान्नदानपानैर्भरणीयाऽनुदिनं सुरक्षणीया ।। मृदुभिर्वचनैः सुभाषणीया गृहकृत्येष्वखिलेषु योजनीया ।। मम पुत्र्यबला क्रियास्वदक्षा वचने कर्मणि कौशलं न यस्याः ।। तदियं भवता सुरक्षणीया न खरेणापि मुदा च लालसेन ।। या कृष्णभाण्डे सिततण्डुलानां पक्केऽप्यशक्ता किमुतान्यकृत्ये ।। तथाप्यनल्पक्षमया त्वयेयमङ्गीकृता तु प्रतिपालनीया ।। अष्टवर्षात्त्वियं कन्या पुत्रवत्पालिता मया ।। इदानीं तव पुत्राय दत्ता स्नेहेन पाल्यताम् ।। इति कन्यासमर्पणम् ।।छ ।।

अथ पुनर्विवाहः ।। यद्यकाले कृते विवाहे पश्चाङ्गशुद्ध्यादिरहितदोषयुक्ते वा ज्योतिःशास्त्रोक्तशुभकाले पुनर्विवाहः कार्यः ।। तत्र नृसिंहः ।। श्रीधरीये 'पुनर्विवाहं वक्ष्यामि दम्पत्योः शुभवृद्धिदम् ।। लग्नेन्दुलग्नयोर्दोषे ग्रहतारादिसम्भवे ।। अन्येष्वशुभकालेषु दुष्टयोगादिसम्भवे ।। विवाहे चापि दम्पत्योराशौचादिसमुद्भवे ।। तस्य दोषस्य शान्त्यर्थं पुनर्वैवाह इष्यते' इति ।। विवाहस्यावश्यकर्तव्यकाले सुमुहूर्ताऽलाभे यथासम्भवमुहूर्ते विवाहं कृत्वा पुनः सुमुहूर्ते तयोर्विवाहः कर्तव्यः ।। अथवा विवाहानन्तरं बहुधाहानिदृश्यते तत्रापि सुमुहूर्ते पुनर्विवाहं कुर्यात् ।।छ ।।

तत्र प्रयोगः ।। विवाहोक्तशुभदिने आत्मनोऽनुकूले सुमुहर्ते पुनर्विवाहं करिष्यन् पूर्वेद्युः पुनर्विवाहाङ्गत्वेन नान्दीश्राद्धं कृत्वा, श्वोभूते मङ्गलस्नानं कृत्वा, स्नानपवनादिकं च कृत्वा, गणपतिं सम्पूज्य पुण्याहं वाचयित्वा, प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम सर्वानिष्टनिरसनार्थं सर्वाभीष्टसिद्ध्यर्थं पुनविवाहं करिष्ये' इति सङ्कल्प्य ।। मधुपर्कं कन्यादानं च वर्ज्यम् ।। सुमुहूर्ते निरीक्षां कृत्वा, अभ्रातृघ्नीमिति वधूं समीक्ष्य, अघोरचक्षुरिति तयेक्ष्यमाणो जपित्वा, इदमहं यात्वयीति भ्रूमुखे दर्भेण सम्मृज्य, स्थण्डिलोल्लेखनाद्यावरदानान्तं विवाहहोमं कुर्यात्, नान्यद्व्रतचर्यादिकमस्ति ।। इति पुनर्विवाहप्रयोगः ।।छ ।।

अथाग्निद्वयसंसर्गविधिरुच्यते ।। यदि केनापि निमित्तेन सत्यां आद्यायामन्या परिणीता तत्र विवाहकर्मणि समस्ते निर्वृत्ते एकादशे द्वादशे वा दिवसे अग्निद्वयसंसर्गं कुर्यात् ।। तत्र कारिका 'कृते तत्र विवाहे तु श्राद्धान्तं तु परेऽहनि ।। अग्निं

समिध्य सस्तीर्य संस्कृत्याज्यं च तत्स्रुचा' इत्यादि ।। द्वितीयमौपासनाग्निं स्थण्डिले निधाय प्राणानायम्य 'अग्निद्वयसंसर्गाङ्गत्वेन चतुर्गृहीतहोमं करिष्ये' इति सङ्कल्प्य 'चतुर्गृहीतहोमः कर्म अपूर्वं तन्त्रं बलवर्धनो नामाग्निः ऋषीन्द्रब्रह्माणो देवताः आज्य हविः सद्यो यक्ष्ये' तदङ्गमन्वाधानं कृत्वा, प्रोक्षणीमाज्यस्थालीं स्रुक्स्रुवौ च सादयित्वा, आज्यं संस्कृत्य अनया नवोढया वध्वा अन्वारब्धः स्रुचि चतुर्गृहीतं गृहीत्वा 'ॐ नमस्ते ऋषे गद ।। अव्यथायै त्वा स्वधायै त्वा ।। मा न इन्द्राभितस्त्वदृष्ट्वारिष्टासः ।। एवाब्रह्मन् तवेदस्तु स्वाहा ।। ऋषय इन्द्राय ब्रह्मण इदम्' इति हुत्वा, तमग्निमयं ते योनिर्ऋत्विय इति समिधि समारोप्य, पुनः स्थण्डिलोल्लेखनादिकं कृत्वा, अग्निं प्रतिष्ठाप्य, पूर्वौपासनाग्निसमारोपणसमिधमाजुह्वानउद्बुध्यस्वेति लौकिकाग्नौ निधाय प्रज्वाल्य, अथ द्वितीयाग्निसमारोपणसमिधमा-जुह्वानउद्बुध्यस्वाग्न इति तत्र निधाय, आसनप्राणायामौ कृत्वा, देशकालौ सङ्कीर्त्य 'गृह्याग्निसाध्यानां कर्मणां तत्रानुष्ठानफलसिद्ध्यर्थमौपासनाग्निद्वयसंसर्गहोमं करिष्ये, अग्निद्वयसंसर्गहोमः कर्म आघारवत्तन्त्रं पञ्चदशदारुरिध्मः अग्नीषोमावाज्यभागौ बलवर्धनो नामाग्निः पुरीष्याग्निर्देवता चरुर्हविः' इत्यादि सङ्कल्प्य अन्वाधाय, स्रुक्स्रुवसम्मार्जनं कृत्वा, आज्यं संस्कृत्य, स्रुचि चतुर्गृहीतं गृहीत्वा, पत्नीभ्यामन्वारब्धः यो ब्रह्मा ब्रह्मण इत्यष्टौ मन्त्रानुच्चार्य सर्वान्ते सकृद्धुत्वा ।। ईशानाय देवाय, घर्मरुचये देवाय, ब्रह्मज्योतिषे यमाय, श्रियै लक्ष्म्या औपलाया अम्बिकायै गव इन्द्रसेनायै, दाक्षायणीभ्यो, दिव्येभ्यो गणेभ्यो, वसुभ्यो रुद्रेभ्य आदित्येभ्यो मरुद्भ्यः साध्येभ्य ऋभुभ्यो यक्षेभ्यो गन्धर्वेभ्यः पितृभ्यो विश्वेभ्यो भृगुभ्यः सर्पेभ्योङ्गिरोभ्य इदम् ।। इति हुत्वा, चरुनिर्वापणाद्यग्निमुखान्तं कृत्वा पक्वाज्जुहोति ।। ॐ समितꣳसङ्कल्पेथाꣳसम्प्रियौ रोचिष्णू सुमनस्यमानौ ।। इषमूर्जमभिसंवसानौ संवां मनाꣳसि संव्रता समुचित्तान्याकरों३अग्ने पुरीष्याधिपा भवात्वन्नः ।। इषमूर्जं यजमानाय धेहि स्वाहा ।। अग्नये पुरीष्यायेदम् ।। अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय स्रुवेणाज्यमादाय जुहोति ।। ॐ पुरीष्यस्त्वमग्ने रयिमान् पुष्टिमाꣳअसि ।। शिवाः कृत्वा दिशः सर्वाः स्वां

योनिमिहासदः स्वाहा ॥ पुरीष्यायाग्नय इदम् ॥१॥ ॐ भवतं नः समनसौ समोकसावरेपसौ ॥ मा यज्ञꣳ हिꣳसिष्टं मा यज्ञपतिं जातवेदसौ शिवौ भवतमद्य नः स्वाहा ॥ जातवेदोभ्यां शिवाभ्यामिदं ॥२॥ ॐ मातेव पुत्रं पृथिवी पुरीष्यमग्निꣳ स्वे योनावभारुखा ॥ तां विश्वैर्देवैर्ऋतुभिः संविदानः प्रजापतिर्विश्वकर्मा विमुञ्चतु स्वाहा ॥ पृथिव्यै पुरीयाग्नये विश्वेभ्यो देवेभ्य ऋतुभ्यः प्रजापतये विश्वकर्मण इदम् ॥३॥ ॐ यदस्य पारे रजसः शुक्रं ज्योतिरजायत ॥ तन्नः पर्षदतिद्विषोग्ने वैश्वानर स्वाहा ॥ अग्नये वैश्वानरायेदम् ॥४॥ ॐ नमः सु ते निर्ऋते विश्वरूपेयस्मयं विचृता बन्धमेतम् ॥ यमेन त्वं यम्या संविदानोत्तमं नाकमधिरोहयेमꣳ स्वाहा ॥ निर्ऋतये विश्वरूपायै यमायेदम् ॥५॥ ॐ यत्ते देवी निर्ऋतिराबबन्धदाम ग्रीवास्वविचर्त्यम् ॥ इदं ते तद्विष्याम्यायुषो न मध्यादथा जीवः पितुमद्धि प्रमुक्तः स्वाहा ॥ देव्यै निर्ऋतय इदम् ॥६॥ ॐ यस्यास्ते अस्याः क्रूर आसं जुहाम्येषां बन्धानामवसर्जनाय ॥ भूमिरिति त्वा जना विदुर्निर्ऋतिरिति त्वाहं परिवेद विश्वतः स्वाहा ॥ भूम्यै निर्ऋत्या इदम् ॥७॥ ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यां तस्करस्यान्वेषि ॥ अन्यमस्मदिच्छ सात इत्या नमो देवि निर्ऋते तुभ्यमस्तु स्वाहा ॥ देव्यै निर्ऋत्या इदम् ॥८॥ ॐ देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दसये वचोभिः ॥ विश्वस्य या जायमानस्य वेद शिरः शिरः प्रतिसूरी विचष्टे स्वाहा ॥ देव्यै निर्ऋत्या इदम् ॥९॥ ॐ निवेशनस्सङ्गमनो वसूनां विश्वा रूपाभिचष्टे शचीभिः ॥ देव इव सविता सत्यधर्मेन्द्रो न तस्थौ समरे पथीनाꣳ स्वाहा ॥ देवाय सवित्र इन्द्रायेदम् ॥१०॥ ॐ संवरत्रा दधातन निराहावान्कृणोतन ॥

सिञ्चामहा अवटमुद्रिणं वयं विश्वाहादस्तमक्षितꣳ स्वाहा ॥ अवटायाक्षितायेदम् ॥११॥ ॐ निष्कृताहावमवटꣳ सुवरत्रꣳ सुषेचनम् ॥ उद्रिणꣳ सिञ्चे अक्षितꣳ स्वाहा ॥ अवटायाक्षितायेदम् ॥१२॥ ॐ सीरा युञ्जन्ति कवयो युगा वितन्वते पृथक् ॥ धीरा देवेषु सुम्नया स्वाहा ॥ देवेभ्य इदम् ॥१३॥ ॐ युनक्त सीरा वियुगा तनोत कृते योनौ वपते ह बीजम् ॥ गिरा च श्रुष्टिःसभरा असन्नो नेदीय इत्सृण्या पक्वमायत्स्वाहा ॥ सीराभ्यां बीजायेदम् ॥१४॥ ॐ लाङ्गलं पवीरवꣳ सुशेवꣳ समतित्सरु ॥ उदित्कृषति गामवि प्रफर्व्यं च पीवरीम् ॥ प्रस्थावद्रथवाहनꣳ स्वाहा ॥ लाङ्गलायेदम् ॥१५॥ ॐ शुनं नः फाला वितुदन्तु भूमिꣳ शुनं कीनाशा अभियन्तु वाहान् ॥ शुनं पर्जन्योमधुना पयोभिः शुनासीरा शुनमस्मासु धत्तꣳ स्वाहा ॥ फालेभ्यः कीनाशेभ्यः पर्जन्याय शुनासीराभ्यामिदम् ॥१६॥ ॐ कामं कामदुघे धुक्ष्व मित्राय वरुणाय च ॥ इन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्यः स्वाहा ॥ मित्राय वरुणायेन्द्रायाग्नये पूष्ण ओषधीभ्यः प्रजाभ्य इदम् ॥१७॥ ॐ घृतेन सीता मधुना समक्ता विश्वैर्देवैरनुमता मरुद्भिः ॥ ऊर्जस्वती पयसा पिन्वमानास्मान् सीते पयसाभ्याववृत्स्व स्वाहा ॥ विश्वेभ्यो देवेभ्यो मरुद्भ्य ऊर्जस्वत्यै सीताया इदम् ॥१८॥ इति हुत्वा अथ स्विष्टकृत्प्रभृतिवरदानान्ते ब्रह्मजज्ञानं पिताविराजेति द्वाभ्यां दर्भस्तम्बे हुतशेषं निधाय होमशेषं समाप्य, समारोपणं कृत्वा, तस्मिन्नेवाग्नौ सायं प्रातरौप्रासनादिसर्वं कुर्यात् ॥ इति कारिकाविष्णुभट्टीयप्रयोगोक्ताग्निद्वयसंसर्गप्रयोगः ॥छ ॥ विष्णुभट्टीयप्रयोगे प्रकारान्तरमप्युक्तम् ॥ यथा ॥ यद्वा एकस्यामेव समिधि द्वावप्यग्नी क्रमेण मन्त्रवत्समारोप्य स्थण्डिलोल्लेखनादिकं कृत्वा, लौकिकाग्निं प्रतिष्ठाप्य, तस्मिन् तां समिधं आजुह्वान उद्बुध्यस्व भवतन्न इति तिसृभिः प्रक्षिप्य, पूर्ववत्सङ्कल्प्य, आधारवत्तन्त्रं मृडो नामाग्निर्वैश्वानरोग्निर्देवता चरुर्हविरित्याद्यन्वाधानान्तं कृत्वा, आज्यं संस्कृत्य, स्रुचि चतुर्गृहीतं गृहीत्वा, समिद्वत्यग्नौ परिश्रिते पत्नीभ्यामन्वारब्धः, सप्तते अग्न इति पूर्णाहुतिं हुत्वा, पुनःसन्धानवद्ब्रह्मणे वरं दत्वा,

अग्निमुखान्तं कृत्वा, पक्वाज्जुहोति ॥ ॐ वैश्वानरो न ऊत्या प्रयातु परावतः ॥ अग्निरुक्थेन वाहसों३पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीराविवेश ॥ वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा सरिषः पातु नक्तꣳस्वाहा ॥ वैश्वानरायाग्नय इदम् ॥ अथ स्विष्टकृतमवदायान्तःपरिधौ निधाय, अथाज्याहुती रुपजुहोति ॥ ॐ वैश्वानरो न ऊत्या० ॥ वैश्वानरायाग्नय इदम् ॥१॥ ॐ ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् ॥ अजस्रं घर्ममीमहे स्वाहा ॥ वैश्वानराय ज्योतिष्मतय इदम् ॥२॥ ॐ वैश्वानरस्य दꣳसनाभ्यो बृहदरिणादेकः स्वपस्यया कविः ॥ उभा पितरा म्हयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा स्वाहा ॥ वैश्वानरायाग्नये द्यावापृथिवीभ्यामिदम् ॥३॥ ॐ पृष्टो दिवि ... नक्तꣳस्वाहा ॥ वैश्वानराग्नय इदम् ॥४॥ ॐ जातो यदग्ने भुवना व्यख्यः पशुं न गोपा इर्यः परिज्मा ॥ वैश्वानर ब्रह्मणे विन्द गातुं यूयं पात स्वस्तिभिः सदा नः स्वाहा ॥ अग्नये वैश्वानराय ब्रह्मण इदम् ॥५॥ ॐ त्वमग्ने शोचिषा शोशुचान आरोदसी अपृणा जायमानः ॥ त्वं देवाꣳअभिशस्तेरमुञ्चो वैश्वानर जातवेदो महि त्वा स्वाहा ॥ अग्नये वैश्वानराय जातवेदस इदम् ॥६॥ ॐ अस्माकमग्ने मघवत्सु धारयानामिक्षत्रमजरꣳसुवीर्यम् ॥ वयं जयेम शतिनꣳसहस्रिणं वैश्वानर वाजमग्ने तवोतिभिः स्वाहा ॥ वैश्वानरायग्नय इदम् ॥७॥ ॐ वैश्वानरस्य सुमतौ स्याम राजा हिकं भुवनानामभिश्रीः ॥ इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण स्वाहा ॥ वैश्वानराय सूर्यायेदम् ॥८॥ ॐ दधिक्राव्णो अकारिषं ... तारिषत्स्वाहा ॥ दधिक्राव्ण इदम् ॥९॥ ॐ उद्बुध्यस्वाग्ने० ॥ अग्नय इदम् ॥१०॥ ॐ यस्मैत्वꣳसुकृते जातवेदः० ॥

जातवेदसेऽग्नय इदम् ॥११॥ ॐ स्वस्ति न इन्द्रो वृद्धश्रवाः ॥ इन्द्राय वृद्धश्रवसे पूष्णे विश्ववेदसे तार्क्ष्यायारिष्टनेमये स्वस्तये बृहस्पतय इदम् ॥१२॥ ॐ भूः स्वाहा ॥ ॐ भुवः स्वाहा ॥ ओ॒ꣳसुवः स्वाहा ॥ ॐ भूर्भुवःसुवः स्वाहा ॥ पूर्ववदुद्देशत्यागः ॥१३॥ इति षोडशाहुतीर्हुत्वा, स्विष्टकृदादिवरदानान्ते अग्रेणाग्निं पालाशपर्णेषु हुतशेषं निदधाति 'ॐ वैश्वानरो न ऊत्या०, ॐ पृष्टो दिवि०' इति द्वाभ्याम् ॥ अथोत्तरपरिषेकादि होमशेषं समापयेत् ॥ यद्याहिताग्निः विवाहकर्मणामनन्तरमरण्योरग्निं समारोप्य उदवसाय मथित्वा, अग्नीन्विहृत्य, उद्वासिनीमिष्टिं कृत्वा, समिध्यारोप्य, पूर्ववदग्निं संयोज्य, ब्रह्मौदनाद्यग्न्याधेयिकं कर्म कृत्वा, सायं प्रातरग्निहोत्र कुर्यात् ॥ इत्यग्निद्वयसंसर्गविधिः ॥छ ॥

अथ तृतीयविवाहः ॥ सङ्ग्रहे 'प्रमदामृतिवत्सरादितः पुनरुद्वाहविधिर्वरस्य च ॥ विषमे मृतिवत्सरे शुभो युगले वाऽपि मृतिप्रदो भवेत्' ॥ तृतीयविवाहविषये याज्ञवल्क्यः 'सत्यामन्यां सवर्णायां धर्म्यं कार्यं न कारयेत् ॥ सवर्णासु विधौ धर्म्ये ज्येष्ठयैव विनेतराम्' ॥ पैङ्गयः 'ब्रह्मचर्यं समाप्यैवं भार्ययोर्द्वितयं तथा ॥ तृतीया नोद्वहेद्विप्र इति धर्मविदो विदुः' इति ॥ कश्यपः 'अपाकृत्य ऋणं चार्षं लक्षणां स्त्रियमुद्वहेत् ॥ एकां तु पितृदेवार्थं रत्यर्थमपरां तु वा ॥ तृतीयां मानुषीं नैव, चतुर्थीं य समुद्वहेत् ॥ पुत्रपौत्रादिसम्पन्नः कुटुम्बी साग्निकोज्वलः ॥ उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ॥ मोहादज्ञानतो वाऽपि यदि गच्छेत्तु मानुषीम् ॥ नश्यत्येव न सन्देहो गार्ग्यस्य वचनं यथा ॥ धर्माचारनिमित्तोऽपि नोद्वहेन्मानुषीं स्त्रियम् ॥ तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत्' ॥ तृतीयविवाहस्य मानुषीविषयत्वात्तत्रार्ककन्यां विवहेत् ॥ तथा च सङ्ग्रहे 'तृतीयो यदि चोद्वाहस्तर्हि सा विधवा भवेत् ॥ चतुर्थादिविवाहार्थं तृतीयेर्कं समुद्वहेत्' इति ॥ तद्विधानमुच्यते ॥ सङ्ग्रहे 'आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे ॥ शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकम् ॥ ग्रामात्प्राच्यामुदीच्यां वा सुपुष्पफलसंयुतम् ॥ परीक्ष्य यत्नतोऽधस्तात्स्थण्डिलादि यथाविधि ॥ स्नात्वाऽलङ्कृतवासास्तु रक्तगन्धादिभूषितः ॥ सपुष्पफलशाखैकमर्कगुल्मंसमाश्रयेत् ॥ सुलक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः ॥ अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ॥ अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ॥ नान्दीश्राद्धं हिरण्येन पितृवर्गान्प्रपूजयेत् ॥ पूजयेन्मधुपर्केण वरं विप्रस्य हस्ततः ॥ यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणम् ॥ उष्णीषगन्धमाल्यादि वरायास्मै प्रदापयेत् ॥ स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत्' ॥ ब्रह्मपुराणे 'कृत्वार्कं पुरतस्तिष्ठन् प्रार्थयेत्तु द्विजोत्तमः ॥ त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ॥ तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥ तत्राध्यारोप्य देवेशं छायया सहितं रविम् ॥ वस्त्रैर्माल्यैस्तथा गन्धैस्तत्तन्मन्त्रेण पूजयेत् ॥ अर्कं प्रदक्षिणं कुर्याज्जपेन्मन्त्रमिमं बुधः ॥ मम प्रीतिकरा येयं मम सृष्टा पुरातनी ॥ अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु ॥ पुनः प्रदक्षिणं कुर्यान्मन्त्रेणानेन मन्त्रवित् ॥ नमस्ते मङ्गले देवि नमः सवितुरात्मजे ॥ त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥ वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥ तृतीयोद्वाहजं दोषं मृत्युं चाशु विनाशय ॥ ततश्च कन्यावरणं त्रिपुरुषं कुलमुच्चरेत् ॥ आदित्यः सविता चार्कः पुत्री पौत्री प्रपौत्रिका ॥ गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ॥ सुमुहूर्ते निरीक्षेत स्वस्तिसूक्तमुदीरयेत् ॥ आशीर्भिः सहितः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥ अथाचार्यं समाहूय विधिना तन्मुखाच्च ताम् ॥ प्रतिगृह्य ततो होमं गृह्योक्तविधिनाचरेत्' ॥ (आचार्यस्तद्दानमन्त्रमुच्चार्य दद्यात्तां वरः प्रतिगृह्णीयादित्यर्थः) ॥ व्यासः 'अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम् ॥ गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥ अञ्जल्यक्षतपूर्णानि कृत्वा कौतुकबन्धनम् ॥ यावत्पञ्चावृतं सूत्रं तावदर्कं प्रवेष्टयेत् ॥ स्वशाखोक्तेन मन्त्रेण गायत्र्या वाऽथवा जपेत् ॥ पञ्चीकृत्य पुनः सूत्रं कण्ठे मन्धाति मन्त्रतः ॥ बृहत्सामेति मन्त्रेण सूत्रे रक्षां प्रकल्पयेत् ॥ अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरयोस्तथा ॥ कुम्भाञ्श्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये ॥ सवस्त्रप्रतिमाकुम्भं त्रिःसूत्रेणैव वेष्टयेत् ॥ हरिद्रागन्धसंयुक्तं

पूरयेच्छीतलं जलम् ॥ प्रतिकुम्भं महाविष्णुं सम्पूज्य परमेश्वरम् ॥ पाद्यार्घ्यादिनिवेद्यान्तं प्रकुर्यान्नाममन्त्रतः' ॥ शौनकः 'तृतीये च विवाहे तु सम्प्राप्ते पुरुषस्य तु ॥ अर्कविवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥ अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् ॥ नान्दीश्राद्धं प्रकुर्वीत स्थण्डिलं तु प्रकल्पयेत् ॥ अर्कमभ्यर्च्य सोऽर्थी च गन्धपुष्पाक्षतादिभिः ॥ स्वयं चालङ्कृतस्तद्वद्वस्त्रमाल्यादिभिः शुभैः ॥ अर्कस्योत्तरदेशे तु समन्वारब्ध एतया ॥ उल्लेखनादिकं कुर्यादाघारान्तमतःपरम् ॥ आज्याहुतिं च जुहुयात्सङ्गोभिरिति चैकया ॥ यस्मै त्वं कामकामायेत्येकयाऽथ घृतं हुनेत् ॥ व्याहृतिभिश्च हुत्वाऽथ होमशेषं समापयेत् ॥ पुनः प्रदक्षिणं कुर्यान्मन्त्रमेतमुदीरयेत् ॥ मया कृतमिदं कर्म स्थावरेषु जरायुणा ॥ अपत्यानि च मे देहि तत्सर्वं क्षन्तुमर्हसि ॥ इत्युक्त्वा शान्तिसूक्तानि जप्त्वा तं विसृजेत्पुनः ॥ गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥ इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि भक्तितः ॥ तत्सर्वं गुरवे दद्यादन्ते पुण्याहमाचरेत्' इति ॥ 'चतुर्थे दिवसेऽतीते तमभ्यर्च्य ततःपरम् ॥ व्यस्ताः समस्ता व्याहृतीस्ततश्च स्विष्टकृद्भवेत् ॥ परिषेचनपर्यन्तमयाश्चेत्यादिभिः क्रमात् ॥ विसृज्य होममग्निं च विधिना मानुषीं पुरा ॥ उद्वहेदन्यथा नैव पुत्रपौत्रादिवृद्धिमान् ॥ न पशून्न च मित्राणि मङ्गलं वै प्रयच्छति ॥ एवमेव द्विजश्रेष्ठो विधिना सम्यगुद्वहेत् ॥ धनधान्यसमृद्धिं च सम्यगर्कः प्रयच्छति' इति ॥छ ॥

अथ प्रयोगः ॥ अर्कवासरे शनिवासरे वा हस्तनक्षत्रे वाऽन्यस्मिन्वा शुभे दिने पूवाह्णे स्नात्वा, वाससी परिधाय, रक्तगन्धभूषणैरलङ्कृत्य, ग्रामात्प्राच्यामुदीच्यां वा फलपुष्पशाखायुक्तैकार्कवृक्षमूलं गत्वा, उपलेपनादिभिरलङ्कृत्य, पुण्याहपूर्वकं हिरण्येन नान्दीश्राद्धं कृत्वा, गणपतिं सम्पूज्य 'ममार्कविवाहं कर्तुं स्वस्तिपुण्याहवाचनं करिष्य' इति सङ्कल्प्य, आदित्यः प्रीयतामिति विशेषः ॥ 'अथार्ककन्याविवाहार्थमाचार्यं त्वां वृणे' इत्याचार्यं वृत्वा, ततो वर आसनप्राणायमामौ कृत्वा, देशकालौ सङ्कीर्त्य 'मम तृतीयमानुषीविवाहदोषपरिहारार्थमर्कविवाहं करिष्ये' इति सङ्कल्प्य, अथार्कवृक्षे वा तत्समीपे वा छायया देव्या सहितं सूर्यमावाह्य, आसनपाद्यादिषोडशोपचारान् कृत्वा प्रार्थयेत् ॥ 'त्रिलोकवासिन् सप्ताश्व छायया सहितो रवे ॥ तृतीयोद्वाहजं दोषं निवारय सुखं कुरु' इति प्रार्थ्य 'मम प्रीतिकरा येयं मया सृष्टा पुरातनी ॥ अर्कजा ब्रह्मणा सृष्टा अस्माकं परिरक्षतु ॥ नमस्ते मङ्गले देवि नमः सवितुरात्मजे ॥ त्राहि मां कृपया देवि पत्नी त्वं म इहागता' इति प्रदक्षिणनमस्कारान् कृत्वा 'अर्कस्त्वं ब्रह्मणा सृष्टस्सर्वप्राणिहिताय च ॥ वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥ तृतीयोद्वाहजं दोषं मृत्युं चापि विनाशय' इति प्रार्थ्य, तत आचार्यो वरार्कवृक्षयोर्मध्ये स्वस्तिकादिभिरलङ्कृतवस्त्रं धारयित्वा 'काश्यपगोत्रोत्पन्नां आदित्यप्रपौत्रीं सवितृपौत्रीं अर्कपुत्रींमिमां

अर्ककन्यां वृणीमहे' इत्युक्ते 'विश्वामित्रगोत्रोद्भवाय अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकशर्मणे वराय इमां कन्यां वृणीध्वम्' इत्युक्त्वा सुमुहूर्ते निरीक्ष्य, स्वस्तिनोमिमीतेति स्वस्तिसूक्तं पठित्वा, तत आचार्यो देशकालौ सङ्कीर्त्य 'अर्ककन्यादानमहं करिष्ये' इति सङ्कल्प्य, अर्ककन्यां वरं च सम्पूज्य 'अमुकगोत्रोद्भवाय अमुकप्रपौत्राय अमुकपौत्राय अमुकपुत्राय अमुकशर्मणे वराय काश्यपगोत्रोत्पन्नां आदित्यप्रपौत्रीं सवितृपौत्रीं अर्कपुत्रीमिमां कन्यां तुभ्यमहं सम्प्रददे श्रियै नमम' इति दत्वा 'अर्ककन्यामिमां विप्र यथाशक्तिविभूषिताम् ।। गोत्राय शर्मणे तुम्यं दत्तां विप्र समाश्रय' ।। अथ गायत्र्यावृतपञ्चगुणसूत्रेण कङ्कणबन्धमिदानीं वा वाग्दानात्पूर्वं वा तण्डुलपूर्णहस्ते 'बृहत्साम' इति बध्वा, तद्वत्पञ्चगुणसूत्रं कन्याकण्ठे बध्वा, बृहत्सामेति रक्षां कुर्यात् ।। अथार्कस्य आग्नेयादिचतुर्दिक्षु वस्त्रप्रतिमासहितान् चतुरः कलशान् प्रतिष्ठाप्य, हरिद्रागन्धयुक्तजलं पूरयित्वा, तेषु विष्णुमावाह्य 'विष्णवे नमः' इति नाममन्त्रेण पाद्यादिनैवेद्यान्तं कृत्वा, तदुत्तरदेशे स्थण्डिलोल्लेखनं कृत्वा, अग्निं प्रतिष्ठाप्य, पत्न्याऽन्वारब्धः प्राणानायम्य देशकालौ सङ्कीर्त्य 'अर्कविवाहहोमं करिष्ये' इति सङ्कल्प्य, अर्कविवाहहोमः कर्म आघारवत्तन्त्रं योजको नामाग्निः सविता देवता चरुर्हविः इत्याद्यग्निमुखान्तं कृत्वा, गायत्र्या पक्वं हुत्वा, स्विष्टकृतमवदायान्तःपरिधौ निधाय अथाज्याहुतीरुपजुहोति ।। सङ्गोभिरित्यस्य अङ्गिरा ऋषिः त्रिष्टुपूछन्दः बृहस्पतिर्देवता ।। ॐ सङ्गोभिराङ्गिरसो नक्षमाणो भग इवेदर्यमणन्निनाय ।। जने मित्रो न दम्पती अनक्ति बृहस्पते वाजयांशूँरिवाजौ स्वाहा ।। बृहस्पतय इदम् ।।१।। ॐ यस्मै त्वं कामकामाय वयं सम्राड्यजामहे ।। तमस्मभ्यं कामं दत्वाऽथेदं त्वं घृतं पिब स्वाहा ।। अग्नय इदम् ।। व्याहृतीर्हुत्वा, स्विष्टकृदादिहोमशेषं समाप्य, आचार्याय गोद्वयं दक्षिणां दत्वा, तं प्रार्थयेत् ।। 'मया कृतमिदं कर्म स्थावरेषु जरायुणा ।। अर्कापत्यानि मे देहि तत्सर्वं क्षन्तुमर्हसि' इति प्रार्थ्य, कलशप्रोक्षणं कृत्वा विसर्जयेत् ।। अथ पञ्चमे दिने तमेवार्कमभ्यर्च्य, अग्निं प्रतिष्ठाप्य, प्राणानायम्य 'अर्कविवाहशेषहोमं करिष्ये' इति सङ्कल्प्य, आज्यं संस्कृत्य, अयाश्चाग्नेरिति हुत्वा, व्याहृतीर्व्यस्तास्समस्ताश्च जुहुयात् ।। इत्यर्कविवाहः समाप्तः ।।छ ।।

**अथ रम्भाविवाहः ॥** रम्भाविवाहं वदति भगवाञ्छौनको मुनिः ॥ विना ज्येष्ठं कनिष्ठस्तु नोद्वहेत्तु कदाचन ॥१॥ ज्येष्ठोऽपि चेत्सरोगः स्याद्विकलाङ्गः क्षयादिना ॥ त्वग्दोषः कुब्ज उन्मत्त अन्धो मूको भवेद्यदि ॥२॥ एतेषां चैव पुत्राणां वि[1]वाहं कारयेद्यदि ॥ विवाहोक्तदिने कुर्यात्स्वगृह्योक्तविधानतः ॥३॥ नान्दीमुखाङ्कुरौ चैव रक्षाबन्धं च वर्जयेत् ॥ रम्भामूलान्तरं गत्वा देहलीं कारयेदथ ॥४॥ गोमयेनोपलिप्याथ स्वस्तिवाचनपूर्वकम् ॥ सङ्कल्पं च ततः कुर्यात्कन्यावरणवर्जितः ॥५॥ वस्त्राभरणमाल्यैश्च रम्भामूलं तु वेष्टयेत् ॥ उपलेपादि सर्वत्र आज्यभागान्तमाचरेत् ॥६॥ हस्तग्रहणवर्ज्यं स्यात् सप्तपद्यादि वर्जयेत् ॥ स्वसूत्रोक्तविधानेन विवाहाज्याहुतीर्हुनेत् ॥७॥ अश्मास्थापनलाजादि न कुर्याच्च प्रदक्षिणम् ॥ ततः स्विष्टकृदाद्यं होमशेषं समापयेत् ॥८॥ औपासनं न कुर्वीत त्रिरात्रं व्रतमाचरेत् ॥ गन्धपुष्पादिताम्बूलभक्षणं च न दोषकृत् ॥९॥ प्रसवान्ते त्रिरात्रं तु सूतकव्रतमाचरेत् ॥ तस्मात्सर्वप्रयत्नेन रम्भाछेदं न कारयेत् ॥१०॥ इति शौनकीये रम्भाविवाहविधिः ॥छ ॥

अथ रम्भाविवाहप्रयोगः ॥ यदा ज्येष्ठस्सहोदरोऽन्धकुब्जादिदोषयुक्तो वा महारोगी वा भवेत्तदा तस्य रम्भाविवाहः कार्यः ॥ यथा ॥ विवाहोक्तदिने रम्भामूलं गत्वा, तत्र देहलीं कल्पयित्वा, गोमयेनोपलिप्य, आसनप्राणायमामौ कृत्वा, गणपतिं सम्पूज्य 'रम्भाविवाहं कर्तुं पुण्याहवाचनं करिष्ये' इति सङ्कल्प्य, अग्निः प्रीयतामित्युक्त्वा, प्रोक्षणान्तं कृत्वा, नान्दीश्राद्धं वर्जयित्वा, अथ वस्त्रमाल्यादिभिः रम्भामूलमलङ्कृत्य, स्थण्डिलोल्लेखनाद्यग्निं प्रतिष्ठाप्य, आचम्य प्राणानायम्य देशकालौ सङ्कीर्त्य 'मम गृहस्थाश्रमसिद्ध्यर्थं रम्भाविवाहहोमं करिष्ये' इति सङ्कल्प्य, तत्र 'योजको नामाग्निः अग्निर्देवता लाजा हविः अग्निः स्विष्टकृत्' इत्यादि सङ्कल्प्य, अग्निमुखान्तं कृत्वा, तत एकादशोपयमनीर्जुहोति ॥ अग्नेशर्ध इत्येकादशभिर्विवाहोक्तमन्त्रैराज्याहुतीर्हुत्वा, स्रुवेण दर्व्यामुपस्तीर्य, पूर्वार्धाल्लाजानवदाय, अपरार्धादवद्यति, अभिघारयति, प्रत्यनक्ति, पुरस्तात्स्रुवाहुतिं हुत्वा 'ॐ इयन्नार्युपब्रूत' इति पक्वं हुत्वा, नाममन्त्रेण स्विष्टकृतं हुत्वा, होमशेषं समाप्य ब्राह्मणान् भोजयेत् ॥ अन्यदौपासनादिकं न कर्तव्यम् ॥ अथ त्रिरात्रं व्रतं चरित्वाऽतःपरं ताम्बूलचर्वणादिकं कुर्वन्न दुष्यति ॥ तस्याः प्रसवानन्तरं त्रिरात्रं सूतकं चरेत् ॥ तस्याश्छेदोऽपि न कार्यः ॥ इति शौनकोक्तरम्भाविवाहप्रयोगः समाप्तः ॥ इति वेङ्कटेशीयप्रयोगमालायां विवाहप्रकरणं समाप्तम् ॥छ ॥

---

[1] विवाहमिति = रम्भाया इति शेषः ॥ यदि शब्दप्रयोगात् रम्भाविवाहस्य पाक्षिकत्वं प्रदर्शितं भवति ॥ तेन ज्येष्ठस्य ब्रह्मचर्यपरिपालनेच्छायां सत्यां तदनुमत्या कनिष्ठोद्वाहो न दोषायेति सिद्ध्यति ॥*॥

# ॥ श्री प्रयोगमालाया अनुबन्धः ॥

## ✻ पूर्वसम्पुटानुबन्धः ✻

**श्रीमतां सहृदयवैदिकाग्रण्यानां** प्रयोगमालायां ये ये संशयाः प्रयोगकाले **समुत्पाद्यन्ते तेषां यथामत्यनुबन्धेऽस्मिन् निरासाय प्रवर्तामहे, तेन तत्तत्प्रयोगानुष्ठानानि निरातंकं प्रवर्तेरन्** ॥ बल्बजानां तेषां ननिरासःक्रियते ॥

**गणपतिमण्डलम् :** तत्र तावत् सकलकर्मणामारम्भे श्रीविघ्नेश्वरपूजा अवश्यं सर्वत्र प्रवर्तते ॥ तदर्थं तन्मंडलं लेखनीयं स्यात् ॥ तत्र प्रयोगमालाया ''शक्रासुरानिल हुताशने÷त्यादिकारिकाद्वयमुदाहृतं तदर्थलेखनावसरे श्रीवेंकटेशभट्टवरेण्याः - ''आदौ पूर्वादारभ्येत्यादिना प्रथमत्रिकोणलेखनक्रमं विव्रीय, द्वितीयं त्रिकोणं ''एवं वरुणादारभ्येशानाग्नेयवरुणपर्यन्तं रेखांलिखेत्,, इति प्रादर्शयन् ॥ तत्र संशयः = प्रोक्तकारिकायां ''हुताशनवारुणेश,, इत्यंशेन तंत्रिकोणलेखनं आपाततः परिदृश्यते। तत्कथं? श्री भट्टानामर्थः साधीयानिति संशयः ।।छ ॥ नैतत्सारम् यतः तस्यां कारिकायां ''हुताशनवारुणेशभागाश्रितंतु÷विलिखेन्नवकोणचक्रम्,, इति तत्तद्दिगाश्रितकोणैर्भाव्यमिति तदर्थोऽवसीयते, नतुकोणलेखनारम्भः ॥ श्री भट्टास्तु ''त्रिकोणं विलिखेत्स्वाग्रकोणमारभ्य सर्वतः,, इति श्रीचक्रलेखनपद्धतौ श्रीभगवत्पादशंकरार्यैः लिखितं वचनमाधारीकृत्य ''एवं वरुणादारभ्ये - त्यादिना द्वितीयत्रिकोणारंभं प्रावोचन् ॥ तस्मान्नविरोधः ॥

अत्रैव नवकोणचक्रे चतुरश्रेच युग्मरेखा लेखनीयावा इति केचित् संशेरते ॥ परं तन्नयुक्तम् ॥ नवकोणस्थानेऽष्टादशकोणास्तेन भवेयुः, चतुरश्रंचाष्टाश्रं भवेत् ॥ तथा लेखने वचनाभावाच्च ॥ यत्तु वचनमिति प्रदर्श्यते, तद्वचनाभासः - इतिध्येयम् ॥

### = जीवत्पितृकनान्दीविषये =

सूत्र कारिका विष्णुभट्टीयप्रयोगादि - अनेकवचनानि सम्यग्विमृश्य ''केवलं वर्गादौ जीवति ''येभ्य एव पितादद्यात् तेभ्यो दधात्स्वयंसुतः,, इत्यादिवचनानां सार्थकतां, वर्गेषु त्रिष्वपिजीवत्सु ''नान्दीमातृभ्यो नमः, नान्दीपितृभ्यो नमः,, इत्येवं तएवपूज्याः,, इति च श्रीभट्टा व्यवास्थापयन् ॥ तदेव प्रामाण्यमर्हतीति नात्र शंकावकाशः ॥

### पुण्याहजलप्रोक्षणविचारः

प्रयोगमालायां ''कलशजलमन्योन्यं संस्राव्यं, तज्जलं पात्रान्तरे निनीय, तत्रहिरण्यं निधाय दर्भैः प्रोक्षेत् इति स्पुटमेवोक्तं ॥ तज्जलं=कलशस्थजलं ॥ सतिचैवं नात्रसंशयप्रसक्तिः ॥ तथापि केचन शन्तिरस्त्वित्यादिना सिक्तकलशोदकधाराजलं पात्रेस्थापयित्वा तत्र कलशजलं संयोज्य प्रोक्षंति तत्तु

**कलशोदकधारासेचनस्यैवाप्रामाणिकत्वात्** तज्जलेकलशजलयोजनं सुतरां निर्भित्तिचित्रलेखनन्यायमवलम्बते ॥ श्रीः ॥

**॥ नान्दीश्राद्धं न कदापि रात्रौ कार्यम् ॥**

**नान्दीश्राद्धकर्मणः श्राद्धरूपत्वेन रात्रौ श्राद्धनिषेधात् रात्रौ गृहप्रवेशेऽपि प्रवेशाङ्गनान्दीश्राद्धं परेहन्येव कार्यम् ॥ नतुरात्रौ ॥ अपिच ''नान्दीतु नवदेवता,, इति स्मृतेः मातामह्यादीनां नात्र प्रवेशः** ॥ सपत्नीकानां मातामहादीनां नान्दीश्राद्धप्रवेशकरणेऽपि तासांदेवतात्वप्रसक्त्या स्मृतिविरोधः ॥ देवतात्वाभावेतु **तासां तत्राह्वानाप्रसक्तिः** ॥ स्वस्वपतिभिसहैव देवतात्वाभ्युपगमे अविहितकल्पनाप्रसंगः ॥ तयोर्मेलनेन देवतात्वस्य न कुत्रापि विहितत्वात् ॥ श्रीः ॥

**॥ स्नानपवनादिप्रयोगे पवनविचारः ॥**

**पवनकर्म समन्त्रकं वा, अमन्त्रकं** वेतिसंशयः ॥ गोपालकारिकायां **''त्रिस्तूर्ष्णीं पवनं चरेत्** इति **''चित्पातिस्त्वा पुनातु,, इतिमन्त्रे ''त्वा,, शब्दसद्भावश्च मैसूरसूत्रपुस्तकेमन्त्रमुद्रणाभावश्च तूष्णीमेव पवनं इति पक्षसाधकं ॥ एतद्देशीयानां अनूचानानुष्ठानं ताडपत्रसूत्रपुस्तकेषु मन्त्रवचनं च समन्त्रकपवनसाधकम्** ॥ अतः संशयः ॥ तत्रवदामः ॥ गोपालकारिकावचनं **श्रौतविषयं, तदर्थमेव तत्प्रवृत्तेः ॥ श्रौते अध्वर्युः यजमानं समन्त्रकं पवयतिः स्वयं चेद्यजमानः तूर्ष्णीं पवयेत्** इति व्यवस्थया तस्याः कारिकायाः सार्थक्यात् ॥ **न स्मार्ते कर्मणि प्रवेशः ॥ यद्यपि श्रौतन्यायः स्मार्तेऽपि प्रभवति, तथापि स्मार्तसूत्राविरुद्धएवग्रहणमर्हति नतु सर्वोऽपि,** तथाचेत् स्मार्तसूत्रानुत्थितिप्रसंगः ॥ न **''त्वा शब्दसद्भावमात्रेण तूर्ष्णीं पवनप्रसक्तिः ॥ तथाहि गृह्यसूत्रे ''यस्यकुर्वन् भवति तं पवयतीति,,** यत्तच्छब्दाभ्यां यजमानं तद्यज्ञं यजमानशरीरं च पवनकर्मत्वेन ग्रहणं कृतं ॥ **चित्पतिः नाम मनः ''मनोवै चित्पतिः,, इति संहिता वचनात् ॥** अतएव वाकूपतिः=सरस्वती ॥ सविता देवः प्रसिद्धः **एतदर्थे (तै. सं. ६-१-९) सायणभाष्यं प्रमाणम् ॥ तथाच चित्पति वाक्पतिसवितारः एनं यजमानं कर्म** तच्छरीरं च पुनन्त्विति वाक्यार्थसद्भावात् ॥ **त्वा शब्दमात्रेण नकाचिदनुपपत्तिः ॥ तत्प्रकरणस्थानि सूत्राण्यपि एवमेवयोजनीयानि किंच ''तामाप्यायमानां यज्ञोऽन्वाप्यायते, यज्ञं यजमानः,, ''यज्ञं प्रतिष्ठितं यजमानोऽनु प्रतितिष्ठति,, ''पाहियज्ञं पाहि यज्ञपतिं पाहिमा यज्ञनियं,, इत्यादि बहूनि संहिताब्राह्मणवचनानि** अस्यार्थस्य पोषकाणि ॥ **''शरीरं वा एतद्यजमानः संस्कुरुते,, इत्यादिसंहितावाक्यान्यपि उदाहरणानि ॥**

**अपि च ''अग्निरायुष्मान् सवनस्पतिभिरायुष्मान्** तेन त्वा ÷ इत्यादि पंचपर्यायेषु **''त्वा,, पदसद्भावेन स्वकर्तृकविनियोगेषु तेमन्त्राः नैव पठनीया वा? तथा ''आपोहिष्ठा - ''दधिक्राव्णो ÷** इत्याद्यनेक मन्त्रेषु ''नः,, **पदसद्भवेन यजमानस्य तीर्थं प्रोक्षणादौ ऋत्विग्भिः नोपयोक्तव्यास्ते ते मन्त्राः? स्वैककर्तृके प्रोक्षणादौ ''नः,, शब्दस्थाने** ''मा,, पदोहःकार्योवा? **एतादृशोदाहरणानि वेदेषु बहूनिसन्ति। विस्तरभयान्न तानिलिख्यन्ते ॥ अपिच**

''शन्नोदेवीः÷उद्बुध्यस्वाग्ने इत्याद्यनेकेषु मन्त्रेषु - ''शनिबुध,, पदयोरभावेन तत्तत्प्रयोगेषु ते ते मन्त्रा नोपयोज्यावा?

मैसूर मुद्रितपुस्तके मन्त्रादर्शनं संशोधकप्रमादेनेति सद्योमुद्रित बोधायन गृह्यसूत्रप्रस्तावनायां विस्तरशः प्रतिपादितम् ।।छ।। नकेवलं श्री वेङ्कटेशभट्टवरैरेव पवनेमन्त्रो विनियुक्तः ।। प्राचीनप्रयोगेष्वनेकेषु तद्दर्शनात् ''मन्त्रैस्तथाचित्पतिपूर्वकैश्च सहानुषंगैरथ लोकपूर्वैः,, इति प्रयोगरत्ने ।। एवं प्रयोगतिलक, प्रयोग शिखामणि प्रयोग चन्द्रिकादिवहुषु याजुषप्रयोगेष्वपि दृश्यन्ते ।। तस्मात् समन्त्रक एव पवनकर्मेति निर्णयः ।।

### उदकशांतिप्रतिसरबन्धसमानतंत्रप्रयोगे

उदकशान्तौ पठितानां केषांचिन्मन्त्राणां समानतन्त्रप्रयोगे प्रतिसरबन्धेऽपि पाठो युक्तो नवा इति संशयः ।। पाठोनकर्तव्य इति पक्षे पाठकानां आलस्यमेव साधकं, न किंचिद्वचनम् ।। श्री वेंकटेशभट्टास्तु अस्यामेव प्रयोगमालायां तस्मिन्नप्रकरणे ''प्रणवव्याहतिगायत्री प्रभृतिमन्त्राः उदकशान्तौ पठिता अपि प्रतिसरांगत्वेन पुनः पृथगेव पंठनीयाः, अन्यथा तयोर्न्यूनाधिक्यप्रसंगः ।। समानतन्त्रस्यतु कलशपूजा ऋत्विग्वरणादिषुचरितार्थत्वात्,, इति स्फुटमेव निर्णयं व्यदधुः ।। न्यूनं च = प्रतिसरबन्धांगत्वेन प्रणवाद्यभावः ।। अधिकश्च ''मदेचिदस्ये - ति अर्धर्चस्य उदकशान्तौ ''अर्धर्चमपोह्येतिनिषिद्धस्सपाठः,, इत्यादिकमूह्यम् ।। अतः प्रतिसरबन्धांगत्वेन पुनः पठनीया एव ।। तथा पाठो युक्त एवेत्यविगीतम् ।।

### ।। स्रुक्स्रुगादिसंमार्जन दर्भसंख्याविमर्शः ।।

स्रुक्स्रुवसम्मार्जने चत्वारोवा दर्भाः द्वौवा इति संशयः ।। मैसूरसूत्रपुस्तके चत्वार उक्ताः, ताडपत्रगतसूत्रपुस्तकेषु द्वावेवकथितौ ''सर्वत्र दर्वी होमाना अष्टोत्तरशतं दर्भाः,, इति सूत्रं उभयत्रतुल्यं ।। महीशूरपुस्तके प्रणीताच्छादनदर्भद्वयं विलोप्य सम्मार्जने चत्वारः साधिताः संख्यापरिपूर्तये ।। सूत्रान्तरानुरोधोऽपि तेन प्रसाधितः ।। प्रणीताच्छादनार्थं द्वौदर्भौ आवश्यकावेव ।। तथा सति उत्पवने दर्भौद्वावेवावशिष्येते ।। श्री प्रयोगमालायां मार्जने द्वावेवदर्भौ उट्टंकितौ, न केवलं, प्रयोगरत्नेऽपि ''स्रुक्स्रुवावथ निष्टप्य युगपन्मार्जयेत् पृथक् ।। दर्भाभ्यां ह्युदगग्राभ्यां बिलं दण्डं च मूलतः ।। दर्भौप्रोक्ष्य क्षिपेदग्नौ÷इत्युक्तं ।। कर्मरत्नेऽपि - ''दर्भौतु वामहस्तेन स्रुक्स्रुवौ दक्षिणेनतु÷असुराणां विनाशाय दर्भाभ्यां मार्जनं चरेत् ।। इत्यादि प्राचीनानेकप्रयोगेषूक्तम् ।।

''सपत्नं नाशयामसिस्वाहा - इति स्रुक्संमार्जनान्यग्नौ प्रहरति - इति ब्राह्मणावाक्ये - ''समार्जनानी,, ति बहुवचनं श्रूयते ।। परन्तु तत्र वचनं वविवक्षितं। तेनमन्त्रेण सम्मार्जनदर्भाणामग्नौप्रक्षेप एव तत्र विषयः। उभयोर्विधाने वाक्यभेददोषः प्रसज्यते ।। सच महादोषत्वेन मीमांसायां परिगणितः ।। ''उक्तमन्त्रेणाग्नौप्रक्षेपः,, इत्येवसायणभाष्यमपि ।। तुष्यतु ÷ न्यायेनोभयविधानकल्पनेऽपि कपिञ्जलाधिकरणन्यायेन दर्भत्रितयापत्तिः नतु चत्वारोदर्भाः ।। एवं ''एतदस्तु हुतं तवस्वाहेत्यग्नि सम्मार्जनान्यग्नौ प्रहरति,, इत्यस्मिन् ब्राह्मणेऽपि अग्निसम्मार्जन रज्जोरेकत्वेन तत्रापि बहुवचनमविक्षितमित्येव सिद्धान्तः अत्रोदाहरणमर्हति ।। ''अथ पुरोडाशीयान् प्रेक्षते मित्रस्य त्वा चक्षुषा प्रेक्षे, मा त्वा हिँषम्,, इति दर्शपूर्णमास सूत्रेऽपि पुरोडाशीयव्रीहीणां बहुत्वेऽपि ''मित्रस्यत्वा- मा-त्वा-इत्येकवचनेन बोधनं दृश्यते - एवमनेकोदारणानि देयानि ।। तस्मात् ''स्रुक्सम्मार्जनानि,, इति बहुवनचमात्रेण न दर्भचतुष्ट्य सिद्धति ।।

## ॥ प्रोक्षणाज्ययोरुत्पवनरीतिः ॥

उत्पवनरीतिः प्रयोगमालायां स्फुटैव तथापि - पुनराहारपदार्थं सम्यगजानन्तः प्राश्निकाः समाधेया इत्यतः तद्विवरणे यत्नः क्रियते ॥ उत्पवनं=आलोडनं। तच्च दर्भाभ्यां कार्यम्॥ बौधायन श्रौतसूत्रे ''अथैनदुदगग्राभ्यां पुनराहारं त्रिरुत्पुनाति,, इति सूत्रम्॥ सायणभाष्ये - ''एवं त्रिवारं इत्याभिप्रायेण वीप्सार्थोणमुल्,, इति वचनं वीप्सार्थकं पुनराहारं कपिंजलाधिकरणन्यायेन त्रित्वे पर्यवस्याति इत्यर्थकम्॥ तथा च प्रागादि समारभ्य पश्चिमादिशमानीय पुनः पाक्प्रापणं कूर्चस्य पुनराहारोभवति तच्च त्रिवारं कार्यं इत्यर्थं णमुल् वदति॥ तादृशपुनराहारक्रियां त्रिवारं कृत्वा उत्पुनाति - इति सूत्रार्थोऽबाधितः॥ सायण भाष्यगतं उत्पवनं रीत्यन्तरं तच्चनात्रोपयोगि॥ बोधायनोक्तादरेण प्रयोगमालायां निरूपणं संगच्छते॥

बोधायन सूत्रं श्रुत्यादिकं च सम्यगनूदितं प्रयोगचिन्तामणौ - ''आस्तीर्य तस्मिन् घृतमुत्पुनीयात् प्राग्वद्गृहीत्वा ह्युदगग्रकूर्चम्॥ आरभ्य पूर्वादथ पश्चिमान्तं आनीय भूयश्च तदाहरेत्प्राक्॥ कृत्वा त्रिरेवं पुनरुद्धरेत्तत् कूर्चं तदेकोत्पवनं समुक्तं॥ एवं त्रिरुत्पूय घृतं पवित्र विस्रस्य तच्चोक्षितमाश्रयाशे॥ क्षिपेत् ÷॥ इत्युक्तं निराबाधम्॥

## चरूत्सेकप्रायश्चित्तविचारः

''श्रप्यमाणे चरौ यस्यां यस्यां दिश्युत्सिच्येत, तस्यै तस्यै देवतायै स्रुवाहुतिं जुहुयात्,, इति॥ ''इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशाना अष्टदिग्देवताः,, इति च सूत्रे वर्तेते॥ विभिन्नप्रकरणे तत्सूत्रद्वयसद्भावेऽपि परस्पराकांक्षायां शाब्दमर्यादयाऽन्वयो निराबाधः॥ प्रथमसूत्रेण दिग्देवता आकांक्ष्यन्ते॥ द्वितीयेन आसांदेवतानां कुत्रविनियोगः इत्येवं परस्पराकांक्षया उभे समन्वितः॥ चरूत्सेकोनाम श्रपणकाले चुल्लीस्थपात्रात् मंडादेः बहिः पातः॥ स च कस्यां दिशि पततीति न निश्चयः॥ सतिनिश्चये तद्दिग्देवताया एवाज्याहुतिप्रक्षेपरूपं प्रायश्चित्तं भवेत्॥ किन्तु तदनिश्चयेन सकलदिग्देवताया आज्यं जुहुयादेव॥ सतिचैवं दिग्देवतानां सूत्रोक्तक्रम एवानुसरणीयो भवति॥ तदेवं श्री वेंकटेशभट्टाः तमनुसृत्यैव स्वप्रयोगमालायां चरुप्रायश्चित्तमलिखन्॥ प्रयोगतिलक, प्रयोगचिन्तामणि, प्रयोगरत्न, शिखामण्यादिषु अपि तथैवाभाषिषुः॥ यद्यपि प्रयोगमालायामेवान्यत्र दिग्देवतायै तत उपदिग्देवतायै च आहुतिप्रक्षेपो दृश्यते, स च प्रयोगान्तराभ्यासेन मुद्रापयितृहस्तलेखप्रमाद एवेति निश्चप्रचम्॥ तस्मात् प्रयोगमालायामग्निमुखोक्तचरुत्सेक प्रायश्चित्तक्रमो निरवद्य इति शम्॥

## ॥ स्विष्टकृतोऽवदानेरीतिः ॥

तत्र सा चतुर्धा भवति - १ अनेकप्रधानदेवताकहोमेषु देवताभेदेन चरुपात्राणामपि भिन्नभिन्नत्वे ''सर्वस्मात् सकृत्सकृदवदानं,, साधु॥ २ गृहे सिद्धमन्नमेव तत्तद्देवतानांकृते विभिन्नपात्रेषु पृथक् पृथक् निर्वापेऽपि तत्साधु॥ ३ देवताभेदेऽपि एकस्मिन्नेव पात्रे सर्वासां निर्वापणं श्रपणंच यत्र, तत्र

एकदैवोत्तरार्धात् अवदानं सूक्तम् ।। ४ सिद्धमन्नं एकस्मिन् निर्वापपक्षेऽपि सकृदेव स्विष्टकृदवदानं सूक्तमेव ।। प्रयोगमालायां एतदुभयमपि तत्र तत्रलिखितं साध्वेवेति मन्तव्यम् ।। कर्मकांडाख्येऽतिप्राचीनतमप्रयोगे ÷ ''सह पाकैर्विभागश्च पात्रेषु क्रियते तथा ।। विभागः पाकपात्रेषु द्वयोर्देशेतु शस्यते ।। अग्नीन्द्राग्न्योः पौर्णमास्यां चाग्न्याग्नीषोमयोरपि ।। अन्यत्र पाकपात्रेषु विभागो न प्रशस्यते ।। दर्शे च पौर्णमास्यां च भृशैकार्थ्याच्च तद्भवेत्,, इत्यादीनि वचनानि श्रौतन्यायं स्मार्तेऽपि अनुकृष्योक्तानि ।। प्रयोगतिलकादिष्वपि तथा वचनान्येव सन्ति ।। इति निरवद्यम् ।।

### सँस्रावहवने देवताविचारः

प्रयोगमालायां परिस्तरण परिधि प्रहरणानन्तरं ''तेषु सँस्रावं जुहोति तूष्णीम् ।। यत्तूष्णीं तत्प्राजापत्यं,, इतिलिखितम् ।। ''अथैनान् सँस्रावेणाभिजुहोति वसुभ्यः,, इति मैसूरमुद्रितसूत्रपूस्तके सूत्रम् ।। ''वसवोरुद्रा आदित्याः सँस्राव भागाः ।,, इति ब्राह्मणं ।। अत्र तूष्णीं सँस्रावहोमः कार्योवा ''वसुभ्यो रुद्रेभ्य आदित्येभ्यः स्वाहा,, इति नाममन्त्रेण वा इति संशयः ।। तत्र ब्रूमः - तूष्णीमेवसँस्रावहोमोयुक्तः ।। महीशूरपुस्तकपाठो नादरणीयः, सूत्रांतराणां सम्पर्कात् ।। प्रसिद्ध सूत्रग्रन्थेषु तत्सूत्रादर्शनात् ।। ब्राह्मणवाक्येन न केवलं वस्वादय एव सँस्रावभागोद्देश्याः ।। किन्तु ''उपसमितँसँस्रावभागास्थ, एषांबृहन्तः प्रस्तरेष्ठा बर्हिषदश्च,, ''मंथिनः सँस्रावंजुहोति,, इत्याद्यनेकत्र विभिन्नरूपेणदृश्यते ।। एवं ''तस्माज्जयाःप्राजापत्याः,, ''तस्मादभ्याताना विश्वेदेवाः,, इत्यादिब्राह्मणवाक्यसद्भावेन जयादिहोमे प्रजापतये, अभ्यातानहोमे विश्वेभ्योदेवेभ्य श्चोद्देशत्यागः कल्पनीयःस्यात् ।। ''तस्मान्मन्त्रदेवता दुरुहे,, ति यास्कवचनमादृत्य देवताप्रसादलब्धदिव्यज्ञानवद्भिः महर्षिभिः तत्सदृशैः प्रयोगकृद्भिश्च यस्य या देवतोक्ता, तन्मंत्रहोमे तदुद्देशेन त्यागएवोचितः, अन्यथा शन्नोदेवीः ÷ उद्बुध्यस्वाग्ने, आप्यायस्वेत्यादिषु बहुषुस्थलेषु अव्यवस्था स्यादित्युक्तम् ।। प्रयोगतिलके - ''ततोद्वेसमिधौक्षिप्त्वावह्नौ तूष्णीमथो हुनेत् ।। सँस्रावं त्वथ ÷ ।। इति ।। प्रयोगकारिकायां – ''इतरौ युगपत्प्रास्येत् ऊर्ध्वे च समिधौ ततः ।। हुत्वा तेषु च सँस्रावं तूष्णीमथ च सेचनम्,, इति ।। प्रयोगचिन्तामणौ - ''समिद्द्वयंचाथ हुनेच्च तूष्णीं सँस्राव होमं अदितेन्वमँस्था,, इत्यादीनि सन्त्यनेकवचनानि प्रयोगमालायाः परिपोषकाणि ।। अतः सँस्रावहोमे नाममन्त्रेनोद्देशत्यागो न कार्यः, किन्तु तूष्णीमेवहुत्वा प्रजापतिं स्मरेत् ।।

### ।। वसोर्धारायां वसोर्धारा÷मन्त्रोपयोगविषयः ।।

वसोर्धारांजुहोति ÷ इति विधायकं ब्राह्मणम् ।। तेन वसोर्धारा न कार्येत्येकः पक्षः । शास्त्रसम्मतत्वात् संप्रदायबद्धत्वात् कार्येत्यन्यः पक्षः । ततः संशयः ।। अग्नाविष्णू - इत्यादयः वसोर्धारानुवाकाः श्रौताः ।। स्मार्तेपि गृह्यन्तेऽविरुद्धत्वात् ।। वसोर्धारांजुहोत्यादयः-सन्तत धारया आज्येनाविच्छिन्नंधारां जुहुयात् तेन तेज आदि कामना प्राप्तिर्भवतीति अर्थं वदन्तो विध्यर्थवादं पोषयन्ति । सत्यमेतत् ।। ''मन्त्रैरेव मन्त्रार्थःस्मर्तव्यः,, इति जैमिनीयानां न्यायेन वसोर्धाराकाले तदर्थस्मरणाय तन्मन्त्रोच्चारणमविरुद्धं ।। सम्प्रदायश्चाविगीतोऽस्ति ।। प्रयोगचन्द्रिकायां = ''वसोर्धारां ।। - पूर्णाहुतिमितिद्वाभ्यां मन्त्राभ्यां पूर्णाहुतिं जुहुयात्,, इति स्पष्टमेवोक्तम् ।। विधायकवाक्यानामपि विनियोगोऽनेकत्र प्रायोगिकैरङ्गीकृतः ''एषवैसप्तदश÷,, ''सृत्वैकत्वा÷,, ''गृहावै

प्रतिष्ठा÷,, इत्यादि विधायकानां देवप्रतिष्ठायां ।। ''भागधेयेनैवैनं÷इत्यादीनां - ब्राह्मणार्चने ।। ''यत्पुण्यं नक्षत्रं÷,, त्रीणित्रीणि वै देवानां÷,, इत्यादीनां पुण्याहवाचने ।। ''तत्सुवर्णँहिरण्यं÷ इत्यादीनां आभरणधारणे ।। ''युवा सुवासाः÷इत्यादीनां वस्त्रधारणे ।। हिरण्यपात्रं मधो÷इत्यादीनां आशीर्वचने ।। ''धारयन्सन्तत्यै÷इत्यादीनां पूर्णाहुतौ याज्ञिकानां विनियोगोऽनुमतोऽनिषिद्धंच ।। तस्मात् शास्त्र-संप्रदायसिद्धत्वात् ''वसोर्धारांजुहोति÷इति मन्त्रेण वसोर्धाराहवनं न प्रतिषिद्धमिति युक्तमुत्पश्यामः ।।

### ।। अपूर्वतन्त्रेस्रुचोऽवश्यकताविचारः ।।

अपूर्वतन्त्रे स्रुचो निरुपयोगात् संशयः ।। साक्षात् उपयोग राहित्येऽपि आनुषाङ्गिकं प्रयोजनमस्तीति तदासादनं कार्यमेव ।। प्रयोजनशून्येऽपि षट्त्वसम्पत्तिद्वारा परिधिपंचत्वनिषेधपरिहरणाय वेदोपि षष्ठं अनूयाजाख्यं परिधिं आसादयेदिति ब्रवीति ।। तथा ''नैकं नासादयेत् क्वचित्,, इति निषेध परिहरणाय स्रुवेणसार्धं स्रुगासादनं युक्तम् ।। अपि च विश्वामित्रकारिकायां यज्ञं गोपशुरूपेण ध्यात्वाहोमादिकर्तुं विधानमस्ति ।। तत्र स्रुक्दर्व्यन्यतरविकल्पेन स्रुच गोर्दक्षिणकर्णत्वेन विभावनीयम् ।। स्रुवं वामकर्णत्वेन ।। यदिस्रुचं नासादयति कर्णाभावात् गोर्विकलांगत्वप्राप्तिः तद्दोषापाकरणार्थमपि स्रुचं तत्रसादनीयम् ।। नकेवलं श्रीभट्टवैरैव, तदासादनमुक्तम् । किन्तु अपूर्वतन्त्रं प्रक्रम्य ''स्रुवं स्रुचंचाज्यपात्रं प्रोक्षणीपात्रमेवच ।। आज्यहोमेषु सर्वत्र समासाद्य प्रमार्जयेत् ।। चतुष्पात्रप्रयोगोयं न कुर्याच्च त्रिपात्रकं,, इति कर्मरत्नकारैरपि, ।। अन्यैश्च प्रयोगकृद्भिरपि तदासादनस्य उक्तत्वात्सूक्तमितिसहृदयैर्विभावनीयम् ।।

हुतशेषनिधानं कदा? क्वचित् हुतशेषनिधानं उत्तरपरषेकादिकर्मणां परंलिखितमपि ''हुतशेषनिधानं च प्राशनं मूर्ध्नि चाहुतीः ।। कुर्यात् कर्मसमाप्तेः प्राक् परिषेकविसर्जनात्,, इति न्यायलब्धस्यार्थक्रमस्य ''पाठक्रमादर्थक्रमो बलीयान्,, इति बलवत्वात् उत्तरपरिषेकादिकर्मणः प्राक्हुतशेषनिधानं कर्तव्यम् ।। कलशस्य देवतारूपत्वम् : सकलेष्वपि कर्मसु कलशस्थापनसद्भावे तत्कलशं तत्रोक्त देवतारूपेण भावनीयमिति कर्मसिद्धान्तः ।। तत्र मंडलोपरि तण्डुलादिकं देवतापीठरुपेण विभावनीयम् ।। तदुपरि स्थापितं घटादिकं देवतायाः पादादि हृदयपर्यंत अंगरूपेण भावयेत् ।। कलशान्तः निक्षेप्यानि गन्धाक्षत दूर्वाहिरण्यादीनि द्रव्याणि देवताया उदरगतास्थिस्नाय्वादि अंगानि ।। कुम्भोपरि निक्षेप्यं तण्डुलपूर्णपात्रं देवतायाः कण्ठः ।। नारिकेलफलं मुखं ।। वस्त्रमाच्छादनं ।। कूर्चं शिखा इति भावयेत् ।। अस्य विश्वामित्रकारिका मूलम् ।। अनया भावनया कृतं कर्म साद्गुण्यं भजते ।।

### ।। अन्वारम्भणीयप्रयोगे कूश्मांडमन्त्रहोम विचारः ।।

अन्वारम्भणीयं कर्म श्रौतयागाद्यनुष्ठातुः आरम्भरूप अग्न्याधानादिरिव स्मार्तयज्ञविधातुः आरंभकंकर्म ।। ''कर्मादिष्वेतैर्जुहुयात्,, इति विध्यनुसारेण आरम्भे कूश्मांडहोमः कार्यः ।। श्री वेंकटेशीयप्रयोगमालायां अन्वारम्भणीयप्रयोगे स कूश्मांडहोमोलुप्तः - इत्याक्षेपे - समाधिरभिधीयते ।। होतृमन्त्राणां

कूश्मांडप्रातिनिध्यं धर्मसूत्रे गृह्यसूत्रे च श्रीमदाचर्यैरेव उक्तं ''दर्शपूर्णमासावारप्स्यमाणः चतुर्होतारं मनसानुद्रुत्य जुहोति÷ इत्याद्यनेकवचनानिसूत्रे वर्तन्ते ।। ''मनसाऽनुद्रुत्याहवनीये जुहोति,, इत्यपि श्रौतसूत्रे ।। अन्वारम्भणीयादौ प्रयोगमालायां दशहोतृमन्त्रं विभज्यहोमः प्रोक्त एव । अतो न न्यूनता ।। तत्र होतृ मन्त्रं एकमेवसन्तं कथं विच्छिद्य होमे न्युयुंजन्, इत्यप्याक्षेपोनकार्यः ।। विनियोजकाः अध्ययनपाठे एकमपिमन्त्रं विनियोगे व्यभजन् इत्येतत् ''इषेत्वेति शाखां छिनत्ति, ''उद्धन्यमानं,, इत्याद्यनेकोदाहरणं श्रौते स्मार्ते च दिदर्शयियुभिरपि विस्तरभयान्न प्रदर्श्यते ।। प्राचीनप्रयोगकारा अपि इममर्थं अभ्युपायन् - इति निगदव्यारव्यानम् ।।

**।। नवग्रहयज्ञे एकत्वानेकत्वसंशयः ।। तन्निरासश्च ।।**

''अथातो ग्रहातिथ्यबलिकर्म व्यारव्यास्यामः=इत्यादिसूत्र संप्रदायादिना एकत्वं प्रतिपद्यते ।। अनेकस्मृतिषु बहुत्वं दृश्यते ।। अतः संशयः ।। निरासप्रकारस्तु - ''सूत्रे ''नवानां ग्रहाणां पक्वं हुत्वा - इत्यादिना इत्येकाध्वरपक्षे ।। ततः पंच नवऋत्विक् पक्षमपि प्रदर्श्य प्रधानादौ प्रधानादौ व्याहृतिमिन्दाहुतीः जुहुयादित्युक्तत्वात् नवापि तानि नवग्रहयज्ञाख्यानि पृथक् पृथक् कर्माणि ।। अत एव सूत्रमाधारीकृत्य प्रयोगमालायां एकाध्वरपक्षे प्रतिप्रधानं अन्ते व्याहृतिमिन्दाहुती निर्दिष्टे ''अयं पक्षः विधानमाला याज्ञवल्क्यस्मृति विश्वामित्र कारिका विष्णुभट्टीय प्रयोगचिन्तामणि अनुष्ठान प्रकाशिकादि बहुषु निबन्धेष्वादृत इति नात्र संशयलेशोऽपीति ध्येयम् ।।

**।। ऋतुशान्तौसूक्तपठन-नक्षत्रहोमयोर्विचारः ।।**

ऋतुशान्तिसूक्तपठने नमकचमकपाठस्य श्रीमदाचार्यैरेव कर्तव्यत्वविधानात्, तदनुसारिप्राचीनप्रयोगेषु प्रयोगमालायां चोक्तत्वात्, सांप्रदायिकसिद्धत्वाच्च तयोस्तत्रपठनमेव समञ्जसम् ।। अत एव सांप्रदायबद्धादराः श्रीक्षेत्रगोकर्णाभिजनाः भडति नारायणशास्त्रिणः स्वप्रकाशितकालोचितमालायां ऋतुशांतिप्रकरण टिप्पणां ''नमकचमकपाठस्यतु मूलं मृग्यं,, इत्यलिखन् ।। नतु निरास्यन् ।। मैसूरपुस्तके नमक चमक पाठादर्शनमेव तथा लेखने मूलम् ।। तत्रतु तत्सूत्रभागो लुप्त इत्येव युक्ततरम् ।। सूत्रेदृश्यमानोऽपि ऋतुनक्षत्रमन्त्रानामपिहोमः नयुक्तः ।। मासायनतिथिवारादिहोमापत्या ''अनुक्तमविरुद्धमन्यतोग्राह्यं,, इत्येवन्यायः आद्रियमाणो दृश्यते ।। मासादिहोमप्रसक्त्या विरोधात् ।। अपिच ''एतानिसूक्तानि (ब्रह्मविष्णुरुद्रसूक्तानि) अष्टादशकृत्वः प्रत्येकमावर्तयेत्,, इति सूत्रेण सूक्तावर्तनेनैव तेषांहोमे अष्टोत्तरादिसंख्यापूर्तिः करणीया, नतुसूक्तगतानां ऋचां आवर्तनेनेति सुधियो विभावयन्तु ।। तेन प्राचीन प्रयोगाणां संप्रदायाचाराणां च सांगत्यमपि युज्यते ।।

**फलीकरणहोमः**

दशाहात्प्राक् शिशुरक्षणार्थं क्रियमाणोहोमःकश्चन फलीकरणहोम इत्याचक्ष्यते ।। सच प्रयोगमालायां कुतो नलिखित इति संशयः । संस्कारहोम तदनुषमगानां कर्मणामेव तत्र प्रथमसंपुटे उद्दिष्टत्वात्, तेषु फलीकरणस्यानन्तर्भावात् न तत्र लेखनप्रसक्तिः ।। उत्तरयोः संपुटयोः

अनिर्दशाहबालरक्षाप्रसयक्त्यभावेन न तत्राप्युल्लेखनम्।। फलीकरणहोमस्तु न जातकर्मांगभूतः। अंगत्वबोधकप्रमाणाभावात्। सद्भावेतु कालान्तरे जातकर्मकरणपक्षेऽपि तदनुष्ठानापत्तेः। प्रयोगतिलके - ''इदानींप्रयोजनाभावात् फलीकरणहोमो न भवति,, इति लिखितम्।। प्रयोजनं अनिर्दशाहबालरक्षणं।। ''प्रयोगचिन्तामणौ - ''राक्षोघ्नसूक्तमनुभिः सितसर्षपाद्यैःद्रव्यैश्च लौकिकशुचौ सुतरक्षणार्थं।। कुर्यात् फलीकृतिमथोदशमेऽह्नि कुम्भं चोत्थाप्य दर्शयत भास्करमात्मजस्य,, इति च बालरक्षामेव प्रयोजनत्वेन सूक्तत्वात्।। तस्मात् प्रयोगमालायां संस्कारेषु मध्ये तदलेखनं नन्यूनावहम्।। अन्यथा - सर्पबलि यक्षितमाबलि प्रभृतीनि सूत्र धर्मसिन्ध्वादि प्रोक्तानि शिशुरक्षार्थानि कुतो न लेख्यानीति प्रतिबन्दीभवेत्।। तस्मात्प्रयोगमाला पूर्णा इत्यनवद्यम्।।

**।। अग्निकार्ये भस्मधारणे मन्त्राः ।।**

महीशूर सूत्रपुस्तके ''सरस्वतीति शिरसि, मेधावीतिललाटे-,,÷ इत्यादि सूत्रं दृश्यते।। प्रयोगमालायांतु ''ओजोसीति ललाटे÷,, इत्यादि लिखितम्।। अतःसंशयः।। महीशूर सूत्रे ''सरस्वतीत्यादिकं नाग्निकार्यप्रकरणेवर्तते।। यतस्तत्रैव - यदाग्नेयं भस्मसंगृह्य वामपाणितले निधाय मानस्तोके इत्यद्भिः संमिश्य शन्नोदेवीरभिष्यय इति संसृज्य त्रिपुंड्रमेकपुंड्रंवा ब्राह्मनस्य, वर्तुलाकारं राजन्य, अर्धचन्द्राकारं वैश्यस्य, अंङ्गानि सन्धापयति ÷ अन्येषां स्त्रीणां चोर्ध्वपुंड्रम्।। अत्र स्त्रीशूद्रादीनामपि भस्मधारनविधानात् न ब्रह्मचारिकर्तृकमग्निकार्यमिदमिति स्वरसतः प्रतीयते तर्हि तत्किं कर्मेति प्रश्ने महीशूरपुष्तकानारोग्यत्वप्रदर्शनमेवोत्तरं भवेत्।। तन्नात्र प्रकृतम्।। तत्रत्य सूत्राणि बहूनि पूर्वापरविसंगतानीत्येवालमुत्तरम्।। चन्नपुरीमुद्रिते सूत्रपुस्तकेऽपि तत् सूत्रं नास्ति।। ताडपत्रगतेऽपि तथैव।। प्रयोगचिन्तामणौ अग्निकार्यप्रकरणे - ''जुषस्वमँस्था इति तत्वमाप्य यत्तेत्युपस्थाय च मान उक्त्वा।। ओजोसिपूर्वैर्भसितंतु धार्यं भालेगले दक्षिनबाहुमूले।। ककुत्प्रदेशे मनुभिश्चनाभौ हृसि क्रमाद्वाम भुजे वरांगे=इत्युक्तम्।। विद्यामाधवीय प्रयोगरत्ने ''अभिवाद्य गुरूनग्निं उपासीत समाहितः।। मानस्तोकादिनाभस्मपाणिना दक्षिणेन तु।। अंगुष्ठानामिकाभ्यां तदादायांगेषुविन्यसेत्।। ललाटकंठदक्षांस पृष्ठनाभिस्वहृत्सु च्र।। शिरोदेशे च सर्वांगे ओजोस्याद्यैः क्रमान्न्यसेत्,, इत्यभाषि।। तस्मात् ''सरस्वतीत्यादिकं एकपुंड्रत्रिपुंड्रादि सदाधार्यविषयमिति हृद्यम्।।

**।। होत्रादिव्रतोपक्रमोत्सर्जनेषु आहुतिसंख्याविमर्शः ।।**

एषां व्रतानामुपक्रमोत्सर्जनेषु ब्राह्मणेभ्यः स्वाहा,, इत्यादि पंच आहुतिषु संशयः।। सूत्रे तदाहुत्याभावः, श्रावण्युपाकर्मण्यपि तदभावः।। प्रयोगमालायां केवलं तत्सत्वं, इति संशये निदानम्।। मैसूरसूत्रपुस्तकमाश्रित्य संशयोद्भावनं न युक्तमिति बहुधा प्रपंचितम्।। ताडपत्रगत सूत्रपुस्तकेऽस्ति। सूत्रे एव श्रावण्युपाकर्मणि एकोनविंशत्याज्याहुतयः। होत्राद्युपाकर्मोत्सर्जनेषु चतुर्विंशतिः उक्तेति एकेनैव संशयनिरासो भवेदेव।। तथापि यथामतिसमाधीयते।। व्रत-श्रावण्युपाकर्मणोः स्वरूपतः कारणतः कार्यतश्च विभेदो वर्तते। यथा - होत्रादिव्रतांगोपाकर्मोत्त्सर्जने - प्राजापत्यादिकाण्डाध्ययनांगभूते सकृदेवानुष्ठेये।।

वेदारम्भे उपाकर्म, समाप्तौ उत्सर्जनं ॥ प्रथमं उपाकर्म - तत उत्सर्जनं ॥ तयोरुभयोरपि होमो वर्तते ॥ श्रावण्युपाकर्मोत्सर्जनेतु प्रतिवर्षं कृष्यादि प्रवर्तनाय प्रथमं उत्सर्जनं, अन्ते उपाकर्म ॥ पुष्ये ग घेवोत्सर्जनं श्रावणभाद्रपदाषाढेषुपूर्णिमायामुपाकर्म ॥ एतदत्सर्जने न होमः देवर्षिपितृणां वलिस्तर्पणं च विशेषः ॥ स्थितेचैवं विभागे परस्परं साम्यापादनं नयुक्तम् ॥ प्रयोगमालायां सूत्रानुसरणेन लिखितं समञ्जसमेव ॥ अपि च कांडाध्ययनेषु तत्काण्डाध्ययनमात्रं ॥ श्रावण्युपाकर्मणितु सकलवेदाध्ययनं इत्यपिभेदसद्भावं ''ब्राह्मणानीतिहासान् पुराणानिकल्पान् गाथा नाराशँसीः,, इत्यादितैत्तिरीयारण्यके इतिहासादीनामप्यध्ययनं चोक्तं ॥ विधानमालादि प्राचीनप्रयोगेषु एवमेव व्यवस्थापितमिति नात्रसंशयावकाशः ॥

अपि च ''इतिहासपुराणंच,, इति श्रौतपाठः ॥ इतिहास पुराणानि,, इति सौत्र पाठः ॥ अत्रापि न संशयः कार्यः ॥ महाभाष्ये - ''न वेदे सर्वैर्लिंगैः न च सर्वाभिर्विभक्तिभिः मन्त्रा निगदिताः ॥ ते चावश्यं यज्ञगतेन पुरुषेण यथायथं विपरिणमयितव्याः,, इत्युक्तं, अतो यज्ञपुरुषाणां सतां सूत्रकृतां वचनलिंगादि विपर्ययकरणे अस्माभिः किंचिज्ज्ञैर्हस्तक्षेपोऽपराधो भवेदिति संसूच्य विरमामः ॥

**॥ समावर्तन पक्वमन्त्रविभागः ॥**

श्रीमदाचार्याः समावर्तन पक्वाहुतिविधान प्रसंगे ''द्विपदा पुरोनुवाक्या भवति ॥ चतुष्पदा याज्या÷ ॥ इति ब्राह्मणवाक्यमुदाहृत्यश्रौतंन्यायं सारस्वते प्रकरणसिद्धमलिखन् ॥ यत्र याज्यपुरोनुवाक्यार्थं षडेववाक्यानि निर्दिष्टानि, तत्र विभागकरणेऽयंन्यायः प्रवर्तते ॥ ''न्यायस्य समानत्वात्,, इति सायणभाष्यम् ॥ तथाच समावर्तनहोमे ''आवहन्तीवितन्वाना÷इत्यादि षडववाक्यानि याज्यापुरोनुवाक्यार्थं विहितानि ॥ तेषु प्राथमिकं वाक्यद्वयं पुरोनुवाक्या, अवशिष्टानि चत्वारियाज्या इति व्यवस्थामाश्रित्य प्रयोगमालायां उट्टंकितम ॥ अपि च पुरोनुवाक्याशरीरात् याज्याशरीरं न लघुभवेदित्यपि संप्रदायोऽप्यस्तिः ॥ [illegible] आवहन्ती वितन्वाना, ततोमेश्रियमित्यृचौ ॥ व्याहृतिं प्रणवं वापि पुराऽनूच्य यजेद्बुधः ॥ आवहन्त्यादिकेनैव स्वाहान्तेन तु कृत्स्नशः,, इति गृह्यसंग्रहगता कारिकाऽनादेया ॥ श्रुतिविरोधान्निर्मूलत्वाच्च ॥

**॥ मधुपर्कप्रयोगे ॥**

श्री प्रयोगमालायां ''आचमनशेषं समाप्य,, इति लिखितं ॥ तत्र शेषपदार्थः जैमिनीयमीमांसारीत्या अंगत्वं ॥ तच्चांगकर्म बौ गृ. सू. शेषप्रश्ने-४-७-७ तमसूत्रेणाचमनांगत्वेन ''अथर्ववेदाय नमः,, इत्यादिना परिमार्जनमंगानां विहितम् ॥ तदेतदालक्ष्यैव श्री भट्टवर्यैः ''आचमनशेषं समाप्ये,, तिलिखितं ॥ नत्वन्यःकोऽपि शेषपदार्थः ॥

**॥ अक्षतारोपणे ॥**

अक्षतारोपणं प्राजापत्यविवाहांगमिति केचिद्भ्रन्ताः ॥ सूत्रे - ''अथ विवाहं व्याख्यास्यामः,, इत्युपक्रम्य ब्राह्मविवाहपद्धतिं बोधयन्तः तृतीयसूत्रेण पूर्वसूत्रोक्तं वरप्रेषणमात्रं निषेद्ध ''अथ यदि ÷ इत्यादिना प्राजापत्यं प्रस्तुत्य ''नात्रवरान् प्रहिणुयात्,, इत्युक्तं, न तेन प्रक्रान्तब्राह्मविवाहप्रकरणभंगः ॥

वरयाननिरीक्षाकन्यादानादिकं नास्ति ॥ तत्र यज्ञे ऋत्विजे यजमानेन दक्षिणाभिः सह दत्तां कन्यां गृहमानीय विवाहहोमादिकं सऋत्विक् कुर्यादित्येव प्राजापत्यशरीरम् ॥ अतः अक्षतारोपणं ब्राह्मविवाहपरमेव ॥ प्रयोगतिलकादौ - ''वराय गोत्रादियुताय तुभ्यं कन्यामिमां संप्रतिपादयामि ॥ तथेतिवाचाऽथ वरः सकन्यां देवस्यचेतिप्रतिगृह्य पश्चात् ॥ परस्परं तौ स्वकराक्षतांस्तान् आरोपयेतां मुदितौ स्वमूर्ध्नि,, ॥ इत्यादि वचनैः प्रस्तुतब्राह्मविवाह एवाक्षतारोपणस्य विधानात् ॥ अक्षतारोपणं ब्राह्मविवाह एव सामञ्जस्यमश्नुते ॥

## ॥ लाजहोमे देवताविचारः ॥

विवाह लाजहोमे ''इयंनार्युपब्रूतेऽग्नौ लाजानावपन्ती÷इत्ययं मन्त्र उपयुक्तः ॥ तन्मन्त्रे ''अग्नौ,, इति पदसत्वेन अग्निरेव लिंगदेवता ॥ तथा आचार्यैः पुण्याहप्रसंगे ''विवाहस्याग्निः प्रीयताम्,, इति वचनेन, प्रधानदेवताया एव पुण्याहदेवतात्व दर्शनाच्च ''अग्निरेवदेवता,, इति आक्षेपशरीरम् ॥

अत्र समाधानं सविमर्शं प्रस्तोष्यामः - इयंनारीति मन्त्रे ''अग्नौ,, इति सप्तम्यन्तपदं न देवतां वक्ति, अपितु हौम्यलाजानामाधारत्वं ब्रवीति, अतः न अग्नेर्लिंगदेवतात्वं संभवेत् ॥ अत एव यास्कमुनिना ''एवं स्थूलमर्थं मन्त्राणां ब्रुवाणोऽपि दुरूहो देवतानिर्णयः ॥ दुरूहो वेदार्थनिर्णयः,, इति प्रावोचि ॥ अस्य वचनस्य कापिलं भाष्यं - ''यास्कोक्तित इदमवगम्यते-देवतास्वरूपावगमो दुर्लभः, देवताप्रसादादेव संपाद्यः,, इति ॥ अभ्यां वचनाभ्यां इदं सिद्ध्यति - यत् न केवलं वेदाभ्यासात् नवाघनान्तविकृतिपाठात् मन्त्रार्थज्ञानंसंभवति ॥ तदर्थं देवताप्रसादसम्पादनमावश्यकम्÷इति ॥ ''विवाहस्याग्निः प्रीयतामि,, ति सूत्रवचनमपि लाजहोमे अग्निदेवताकत्वं न साधयति, अत एव तत्रैवान्ते एवमेव ''अन्येषांहोमानां याज्यापुरोनुवाक्ययोर्देवते,, ''एवमनादिष्टेषुकर्मसु प्रजापतिः,, इति सूत्रे वर्तेते ॥ तेन याज्यापुरोनुवाक्यदेवता एव पुण्याहदेवताः ॥ न तु पुण्याह देवताः सर्वाः याज्यापुरोऽनुवाक्यदेवताः इत्यभिप्रायः स्फोर्यते ॥ अन्यथा - समावर्तने श्रीरिन्द्रोवा ॥ अद्भुतहोमे इन्द्रः, अन्तेप्रजापतिः,, इत्यादिसूत्राणि न सांगत्यं भजेरन् ॥ अथवा रम्भाविवाहे अग्नि देवताकत्वं सूत्राभिप्राय इति वा कल्पनीयम् ॥ अपि च कन्यायाः प्रजापतिदेवताकत्वं ''प्रजापति दैवत्यां,, ''प्रजापतयेकन्यां,, इत्यादि श्रौतसिद्धं बाध्येत ॥ प्रयोगशिखामणौतु - प्रजापतय इदमितिलिखित्वा ''अग्नय इदमिति केचित् इत्युक्तं ॥ प्रयोगतिलकेऽपि ''योजकोऽग्निर्विवाहस्य देवतातु प्रजापतिः ॥ केचित्वत्रवदत्यग्निं काममत्र विकल्पयेत्,, इत्युक्तत्वात् श्रीभट्टवर्यैः कन्याविवाह रम्भविवाहभेदेन व्यवस्थित विकल्पमाश्रित्योक्तमिति सर्वमनवद्यम् ॥

## ॥ लाजहोमे स्विष्टकृद्धोमविचारः ॥

लाजहोमे स्विष्टवतीभ्यां स्विष्टकृद्धोमःकार्य उत नाममन्त्रेणेति संशयः ॥ हव्यवाहं स्विष्टमग्ने० इति मन्त्रयोः स्विष्टवतीसंज्ञा ॥ अग्निःस्विष्टकृत् इति नाममन्त्रः ॥ आघारवत्तन्त्रे आपूर्विके च चरु (...) होमस्य उत्सर्गत्वात् स्विष्टकृतः प्राप्तिः ॥ किन्तु आपूर्विके ''अग्निहोत्रापूर्विकयोः नाघारौ न च

चक्षुषी ॥ नमुखाहुतयोयुक्तोवहादिद्वादशैवतु ॥ याज्यापुरोनुवाक्यत्वं प्रधानादौ न योजयेत् ॥ न हव्यवाहस्विष्टं च न च तत्रजयादयः,, ॥ ''न परिधिर्न च ब्रह्मा न प्रणीता न बर्हिषः ॥ न च स्विष्ट दादीनि तन्त्रपूर्विकं स्मृतम्,, इत्यादि निषेध सद्भावात् न हव्यवाहस्विष्टकृत् ॥ किन्तु नाममन्त्रेणेति स्थितम् ॥ त्रिवाहहोमे चरोरभावेन तन्त्रद्वयेऽपि स्विष्टकृद्धोमस्य न प्रसक्तिह ॥ परं ''पक्कवत्स्वेव स्विष्टवतीभ्यां स्विष्टकृतं जुहोति ॥ अन्यत्र नाममन्त्रेण,, इति शुद्धसूत्रबलात् लाजहोमे नाममन्त्रेण स्विष्टकृत्प्राप्नोति ॥ पक्कवत्सु=चरुहोमवत्सु कर्मसु एव=नान्यत्र स्विष्टवतीभ्यां=उक्तमन्त्राभ्यां स्विष्टकृतं जुहोति=जुहुयात् ॥ अन्यत्र चरुहोमाभावस्थले लाजादिप्रधानहोमस्थले नाममन्त्रेणेत्यन्वयः ॥ तथाच प्रयोगमालादिषु नाममन्त्रेणोक्तः स्विष्टकृद्धोमः समञ्जसः ॥ आघारवत्तन्त्रेऽपिनाममन्त्रेणैव, न स्विष्टवतीभ्याम्, इति स्थिते - यत् महीशूरसूत्र पुस्तकपाठमवलम्ब्याक्षेपोविधीयते, तत्र किंचिद्ब्रूमः - स च पाठः ''पक्कादेवस्विष्टवतीभ्यां सौविष्टकृतंजुहोति, लाजैरितरत्र,, इति ॥ यथाश्रुतान्वयार्थे गृहीते चरुहोमवत्येव स्विष्टवतीमन्त्राभ्यां स्विष्टकृद्धोमः, इतरत्र-चरुहोमाभावस्थले लाजैरेवस्विष्टवतीभ्यां स्विष्टकृद्धोमः कार्यं इत्यर्थः सिद्ध्यति ॥ लाज-तिल, समित् प्रभृति होमेष्वपि स्विष्टकृदर्थं लाजानां ग्राह्यत्वप्रसंगात् नायमर्थोयुक्तः ॥ केवल तिलहोमादौशिष्टैः क्वचिदपि लाजानां स्विष्टकृदर्थं अवदानाकरणात् ॥ अपि च सूत्रै तादृशस्थले ''जयप्रभृति सिद्धं,, इत्येवचनात् नतु स्विष्टकृत्प्रभृतिसिद्धं,, इति ॥ अपि च तादृशतिलहोमप्रसंगेऽपि स्विष्टवतीमन्त्राभ्यामेव स्विष्टकृद्धोमप्रसंगात् ॥ एतानि नेष्टानि ॥ अथ ''एवं,, कारं स्विष्टवतीभ्यामेवेति अन्वयेकृते तदा ''लाजैरितरत्र,, इतिसूत्रांशो नैव समन्वेति,, अन्यत्र नाममन्त्रेणेत्येव भाव्यम् ॥ मन्त्रनिषेधे नाममन्त्रस्यैव प्राप्तेः ॥ यथा यथा तत्सूत्र समीकरणाय प्रयत्यते तथा तथा सिकताकूपवत् विशीर्यते ॥ तस्मात् बहूनां प्रयोगकृतां अनुरोधेन तृाडपत्रगतमत्ररीतिरेवसमञ्जसेति नाममन्त्रेण स्विष्टकृद्धोम लाजहोमे संगत एवेति निरवद्यम् ॥ प्रयोग तिलके - ''सर्वत्र हविषो होमे होतव्या स्विष्टकृद्भवेत् ॥ हव्यवाहम [illegible] इतीत [illegible] ॥ ताभ्यां स्विष्टकृतो होमः चरोरेव नियम्यते ॥ स्वनाम्नान्यत्र होतव्यं नामाग्निः स्विष्टकृत् स्मृतम्,, ॥ प्रयोगरत्ने विद्यामाधर्वीय ''स्विष्टकृत्पक्कमात्रेस्यात् सकृदेवोद्धृतंचरोः ॥ मन्त्राभ्यां हव्यावाहाभ्यां, नाम्नाऽन्यत्र तदुस्मृतम्,, ॥ कर्मकांडप्रयोगेतु ''अन्यद्धविर्भवेद्यत्र न तत्र स्विष्टकृद्धुनेत् ॥ स्याद्धर्मिणैव यास्यन्ति देवताः पितरस्तथा,, ॥ कर्मरत्नेऽपि - नान्नं हविर्भवेद्यत्र न तत्र स्विष्टकृद्धुनेत्,, ॥ प्रयोगशिकामणौ - केचित् स्विष्टवतीभ्यांतु लाजान्जुह्वतिनापरे,, इत्याद्यनेकवचनम् ॥ तेषु चरुभिन्नस्थले स्विष्टकृद्धोमनिषेधवचनं स्विष्टवतीमन्त्राभ्यां निषेधपरम् ॥ न तु सर्वथा तन्निषेधपरं, सूत्रादि विरोधात् ॥ तस्मात् लाजहोमेषु नाममन्त्रेणैव स्विष्टकृतं जुहुयादिति सर्वं मनोहरम् ॥

**॥ विवाह व्रतस्य नामविमर्शः ॥**

विवाहव्रतोपक्रमविसर्जनयोः ''उपयमनं,, व्रतं इति नाम महीशूरपुस्तके दृश्यते ॥ अन्यत्र सर्वेषुग्रन्थेषु ''वैवाहं,, इति नाम ॥ तथाच संशयः ॥ यद्यपि अनयोः नाम्नोः एक एवार्थः, किमर्थो विमर्शः? ॥ तथापि प्रयोगकर्तृणां सूत्रविरोधापादनतत्परिहारौ प्रयोजनेभवतः ॥ अतःविमर्शोऽवश्यकः ॥ ब्राह्मणे तावत् ''अग्नयेव्रतपतयेव्रतंचरिष्यामि,, ''अग्नये व्रतपतये व्रतमचारिषं,, इति पाठः ॥ तत्र व्रत पदे ऊहाधिकरणन्यायेन विशेषणं प्रायोगिकैः कार्यं

- ''सावित्रं व्रतं,, ''होतारं व्रतं,, ''शुक्रियंव्रतमित्येवम्॥ विवाहेऽपि ''उपयमनं,, व्रतं ''वैवाहंव्रतं,, इत्यनयोः एकतरप्रसक्तौ ताडपत्रगतसूत्रग्रन्थे - अन्यत्र धर्मग्रन्थेषु च ''वैवाहं,, इत्येवसद्भावात् तदनुसरणमेव वरमितिप्रतीमः॥ सर्वत्रसूत्रे ''उपयमनं,, इत्येवपाठसद्भावेतथैवलिखितुं कोवाऽऽग्रहः प्रयोगकृतां इति न जानीमः॥ अथवा महीशूर पुस्तके शाखान्तरानुगामिनां हस्तचालनं स्यात्॥ अथवा ''उपयमन,, पदं ''यमसमीपगमनं,, इत्यप्यन्यार्थममङ्गलं वक्तीत्यभिप्रायेणवा तत्यागः स्यादिति मन्यामहे॥

**॥ मुहूर्त श्लोकाः॥**

ध्यानस्तोत्रजपार्चनप्रणृतिभिर्ये संश्रयन्ते ग्रहान्।
अश्रातं प्रदिशन्ति शर्म निरतं तेभ्यो नभश्चारिणः॥
आयुष्यं धनमक्षयं शुभकरं सौभाग्यमर्च्य यशः।
सामग्र्यं गुणसंपदां रिपुजयं तेजो महामंगलम्॥ १॥
श्रीमद्ब्रह्मवसिस्ठकाश्यपभरद्वाजात्रिदेवर्षयो।
गार्ग्य व्यासबृहस्पति प्रभृतयो येऽन्येचहोराश्रिताः॥
ते सर्वे सुमुहूर्तमुत्तमगुणाः शंसंति सन्तोषिताः।
सर्वे सन्तु शुभप्रदा दिविचरा ज्योतिर्गणाः सद्ग्रहाः॥ २॥

ईशानद्रुहिनाच्युतप्रभृतयो देवाश्च लोकेश्वराः।
वागीशाः समहर्षयो गिरिसुता वागिन्दिराशक्तयः॥
गंगाद्याः सरितो नगाःसुरवरा विप्रा ग्रहास्तारकाः।
सर्वे ते वरदाभवन्तु भवतां प्रीताःसुखस्वस्तिदाः॥ ३॥
तदेवलग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव॥
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेंघ्रियुगं स्मरामि॥
वसिष्ठ गार्ग्यादि महाऋषीश्वरैर्दत्ते अमुकलग्नइष्टांशे
वध्वाः पाणिग्रहणमुहूर्तः सुमुहूर्तोस्त्विति भवन्तो ब्रुवन्तु॥ ४॥

**सुमूर्तमस्तु - इति प्रतिवचनम्॥ इत्याद्यूह्यम्॥**

**॥ अथवधूमंगलाष्टकम्॥**

विघ्नेश्वरो विघ्नविदूरकारी निर्विघ्नकार्यार्थमसौप्रसिद्धः॥
विघ्नाद्रिहो नाम सुरेषु पूज्यो वधूवराभ्यां वरदा भवन्तु ॥ १॥
सर्वेषु कार्येष्वखिलार्थ सिद्धिः वागीश्वरी सत्यवती च दुर्गा॥
सरस्वती नाम विधातृपत्नी वधूवराभ्यां वरदा भवन्तु ॥ २॥

वसन्तलक्ष्मीर्वनराजलक्ष्मीः क्षीराब्धिपुत्री कमलायताक्षी॥
श्रीविष्णुपत्नी भुवनैकमाता वधूवराभ्या ÷ ॥ ३॥
शिवस्यपत्नी गिरिराजपुत्री सुवर्ण दिव्यांबरभूषितांगी॥
कल्याणगौरी शुभमंगळांगी वधूवराभ्या ÷ ॥ ४॥

श्रीरामपत्नी जनकस्यपुत्री सीतांगना सुंदरकोमलांगी ॥
दिव्यांगना रत्नविभूषणाढ्या वधूवराभ्यां ÷ ॥ ५ ॥
पांचालपुत्री मणिरत्नधारी दिव्यांगना द्रौपदिनामधेया ॥
पुण्या सती पांडवधर्मपत्नी वधूवराभ्या ÷ ॥ ६ ॥
पुलोमकन्या पुरुहूतपत्नी शची च नाम्ना कुचहेमकुम्भा ॥
संपूर्णचन्द्राननकोमलांगी वधूवराभ्या ÷ ॥ ७ ॥

पतिव्रतालक्षणलक्षितांगी सन्मार्गगामी सुखसौख्यदा च ॥
अरुन्धती नाम वसिष्ठपत्नी वधूवराभ्यां ÷ ॥ ८ ॥
चकोरनेत्री चपलायताक्षी सौन्दर्यरूपानवचन्द्ररेखा ॥
नळस्यपत्नी दमयंतिनाम्ना वधूवराभ्यां वरदाभवन्तु ॥ ९ ॥

**॥ अथ वरमंगलाष्टकम् ॥**

श्रीमत्पंकजविष्टरो हरिहरौ वायुर्महेद्रो नलः ॥
चन्द्रो भास्कर वित्तपालवरुणा धर्मश्च पाणिग्रहे ॥
प्रद्युम्नो नळकूबरः सुरगुरुः चिन्तामणिः कौस्तुभः ।
स्वामी शक्तिधरश्च, लांगलधरः कुर्यात् सदा मङ्गलम् ॥ १ ॥
नेत्राणां त्रितयं शुभं पशुपतेः अग्नित्रयं पावनं ।
चैतद्विष्णुपदत्रयंसुविमलं ख्यातं च रामत्रयम् ॥
गंगावाहपदत्रयं सुविपुलं वेदत्रयं सस्वरं ॥
सन्ध्यायास्त्रितयं द्विजैरभिनुतं कुर्यात् सदा मंगलम् ॥ २ ॥
वाल्मीकिः सनकः सनन्दनमुनिर्व्यासो वसिष्ठो भृगुः ।
जाबालिर्जमदग्निजह्नुजनका गार्ग्यांगिरोगौतमाः ॥
मान्धाता भरतो नृपश्च सगरो वेणुर्दिलीपो हरि - ।
श्चन्द्रो धर्मसुतो ययातिनहुषौ कुर्यात् सदामंगलम् ॥ ३ ॥
गौरी श्रीरदितिश्च कद्रुविनते ज्योतिः सुपर्णा शुभा ।
सावित्री च सरस्वती च सुभगा सत्यव्रताऽरुन्धती ॥
स्वाहा जांबवती च रुक्मभगिनी दुःस्वप्नविध्वंसिनी ।
वेलाचांब्रुनिधेः समीनमकरां क्रुर्यात्सदा मंगलम् ॥ ४ ॥

गंगासिन्धुसरस्वती च यमुना गोदावरी नर्मदा ।
कावेरी सरितो महेन्द्रतनया चर्मण्वती रेणुका ॥
शुभ्रा नेत्रवती महासुरनदी ख्याता च सागंडकी ॥
पूर्णा पुण्यजलैः समुद्रसहितः कुर्यात् सदामंगलम् ॥ ५ ॥
अश्वत्थो वटबिल्वचन्दनतरुर्मन्दारकल्पद्रुमाः ।
जंबूनिंबकदम्बचूतपनसा अन्ये च ये क्षीरिणः ॥
सर्वे ते वनराजयः शुभकराः वैमानिकैराजिताः ।
रम्याश्चैत्ररथाः सनन्दनवनाः कुर्यात् सदा मंगलम् ॥ ६ ॥
गंगा गोपतिगोमती गणपतिर्गोविन्दगोवर्धनौ ।
गीतागोमयगोरजोगिरिसुता गंगाधरो गालवः ॥
गायत्री गरुडो गदाधरगदे गम्भीरगोदावरी ।
गन्धर्व ग्रहगोप गोकुलजनाः कुर्यात् सदामंगलम् ॥ ७ ॥
सिद्धार्थं दधिपात्रकं सुरजतं कुम्भःप्रपूर्णो जलैः ।
शंखं सूकरवक्त्रदंष्ट्रनयनं गोरोचनं श्रीफलम् ॥
विद्या वेदविदः प्रभातसमयो गौः कांचनं व्रीहयो ।
दूर्वाग्राः तिलतंडुलाः प्रतिदिनं कुर्यात् सदामंगलम् ॥ ८ ॥

## ॥ वटुमंगलाष्टकम् ॥

रत्नासनस्थोंदुरुवाहनोऽसौ विनायको विघ्नविनाशहेतुः ॥
चतुर्भुजश्चन्द्रकलावतंसः सदा कुमाराय शुभं करोतु ॥ १ ॥
यज्ञोपवीतीकृतसर्पराजो गणाधिराजो गजराजवक्त्रः ॥
सुराधिराजार्चितपादपद्मः सदाकुमाराय ÷ ॥ २ ॥
चिन्तामणिः कालमहीरुहश्च समस्तशैलाधिपतिश्च मेरुः ॥
सरस्वती सर्वजनाभिवन्द्या सदाकुमाराय ÷ ॥ ३ ॥
भानुस्त्रिलोकीतिलको ललामः कस्तूरिकाऽलंकृतमेदिनी च ॥
पुष्पाणि शश्वत्सुरभीणि कामं सदाकुमाराय० ÷ ॥ ४ ॥

अब्जाहिराजोक्षवराधिवाहाः सरस्वती श्री गिरिजासमेताः ॥
आयुःश्रियं भूमिमतीवरूपं सदाकुमाराय ÷ ॥ ५ ॥
श्रद्धां च मेधां च यशश्च विद्यां प्रज्ञां च बुद्धिं च बलं च सम्यक् ॥
आयुष्यमारोग्यमतीव तेजः सदाकुमाराय ÷ ॥ ६ ॥
मासश्च पक्षश्च च वारऋक्षे दिनं च योगः करणंचसम्यक् ॥
ग्रहाश्चदेवाः पितरः समस्ताः सदाकुमाराय ÷ ॥ ७ ॥
वेदान्तवेद्यो विदितप्रभावो विश्वं विधाताब्जभवोविरिचः ॥
लक्ष्मीः प्रसन्ना वरदाः समस्ताः सदाकुमाराय शुभं करोतु ॥ ८ ॥

**सूचना - अत्र प्रतिश्लोकोत्तरं**

**''वटुं चतुर्वेदपटुं करोतु,, इतीतरे ब्रूयुः ॥**

यद्यपि एषुमंगलाष्टकेषु लिंगविभक्ति वचनानां बहुषुस्थलेषु व्यत्ययो दृश्यते, तथापि तेषां पाणिनेरन्यव्याकरणसद्भावेन, लिंगमशिष्यं, लोकाश्रयत्वाल्लिङ्गस्य,, लिंगसंख्याविभेदेपि, विभक्तिः पुनरेकैव, इत्यादिवचनैः,, संप्रदायनिबद्धत्वादिति वा समाधेयम् ॥

आदावम्बुज सम्भवादि विनुतः शान्तोर्जितः शाश्वतः
सम्पुल्लामर पुण्डरीक नयनः पुण्यः पुराणः पुमान्।
लोकेशः श्रुति चोदितो मुरहरो मत्स्यावतारो हरिः
श्रीमान् सिंह गिरिश्वरः करुणया दद्यात्सदा मङ्गलम्॥ १॥
सप्तद्वीप कुलाचलेन्द्र जलधौ साम्यं च सङ्क्रातथो
भावावालि फणीन्द्र मन्दरधरो मन्दार मालार्चितः॥
भावज्ञो बहुचक्र लाञ्छिततनुः कूर्मावतारो हरिः।
श्रीमान् सिंह गिरिश्वरः करुणया दद्यात्सदा मङ्गलम्॥ २॥
लीलालोलित सर्व सागर जला सम्पूर्ण चन्द्रप्रभो
हेमाक्षः सुरखण्डनो भुजगदा चक्राङ्कितः सन्ततः।
दंष्ट्रागोधृत मेदिनी मुरहरोः क्रोडावतारो हरिः।
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ३॥
कुन्देन्दु स्फटिकप्रभो बहुभुजो भूषः सहस्रोज्वले
दैत्येन्द्रो धृतधारणादि निपुण स्तम्भोद्भवो भीकरः।
प्रह्लादार्ति हरो मृगो नरमृगः श्रीनारसिंहो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात्सदा मङ्गलम्॥ ४॥
दातृक्षालित पादपङ्कज गजच्चेतो महच्चाम्बरः
प्रक्षाळी कृत पाद सौरभ जगज्वालो जगज्जीवनः।
भिक्षार्थी बलि दर्पदो वटु वटुः कुब्जावतारो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ५॥
सद्यः खण्डित राजमन्दिर गिरिर्निर्दौत सन्तोषितः
सन्तर्षी पितृपैतृकादि पितृवत्वालस्तपो निष्ठितः।
वेदज्ञो जमदग्निजः पुरशुवो रामावतारो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ६॥

राजेन्द्रो रणरङ्ग राज विजिता नेकासुरो भासुरोऽ
कारो रावण कण्ठ खण्डन पटुः कोदण्ड दीक्षागुरुः।
सीतेशः सुरमौनि सज्जननुतो रामावतारो हरिः।
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ७॥
काळिन्दी बलभेदनो बहुबलश्चण्ड प्रलम्बासुरान्
प्रध्वंसी मुसलायुधो हलधरो नीलाम्बरो निर्मलः।
लावण्यामित रेवती पतिवरः कृष्णावतारो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ८॥
धर्मज्ञस्त्रिपुरादि नाक नमितो धर्मोऽप निष्ठारतः
पातिव्रत्य विशीष भञ्जनपटुः वेदान्तवेदी सदा।
दैत्यव्रात विनाशनादि चतुरो बौद्धावतारो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ ९॥
मेघव्रात विनाशकः कलियुगान्तेऽश्वादिरुढो महान्
मानावी बहुभानुकोटि सदृशो भीमादि चक्रायुधः।
अशानीकृत कल्क्यरूप विभवः कल्क्यावतारो हरिः
श्रीमान् सिंह गिरीश्वरः करुणया दद्यात् सदा मङ्गलम्॥ १०॥

तदेवपञ्चाङ्ग बलं तदेव
तदेव षष्ठाङ्ग बलं तदेव।
तदेव सप्ताङ्ग बलं तदेव
लक्ष्मीपते तेंऽघ्रियुगं स्मरामि॥ १॥

तदेव ऋष्युक्त बलं तदेव
तदेव पित्रोक्त बलं तदेव।
तदेव देवोक्त बलं तदेव
लक्ष्मीपते तेंऽघ्रियुगं स्मरामि॥ २॥